अथापि वा तृणस्य तूलि भूमितो गृहीत्वना
ददाति माय आतुराण सर्वि भोन्ति निर्जरा ।
सौख्यप्राप्ति निर्विकार गेहि गेहि गच्छिषु
भैषज्यभूति वैद्यराजि कुक्षि संप्रतिष्ठिते ॥
यस्मि कालि मायदेवि स्वातनुं निरीक्षते
अदृशाति बोधिसत्त्व कुक्षिये प्रतिष्ठितं ।
यथैव चन्द्र अन्तरीक्ष तारकै परिवृतं
तथैव नाथु बोधिसत्त्व लक्षणैरलंकृतं ॥
नो च तस्य रागदोष नैव मोह बाधते
कामछन्दु नैव तस्य ईर्षि नैव हिंसिता ।
तुष्टचित्त हृष्टचित्त प्रीतिसौमनस्यिता
क्षुधा पिपास शीतउष्ण नैव तस्य बाधते ॥
अघट्टिताश्च नित्यकाल दिव्यतूर्य वादिषु
प्रवर्षयन्ति दिव्यपुष्प गन्धश्रेष्ठ शोभना ।
देव पश्यि मानुषाश्च मानुषा अमानुषां
नो विहेठि नो विहिंसि तत्र ते परस्परं ॥
रमन्ति सत्त्व क्रीडयन्ति अन्नपानु देन्ति च
आनन्दशब्द घोषयन्ति हृष्टतुष्टमानसाः ।
क्षमारजो अनाकुला च कालि देव वर्षते
तृणाश्च पुष्प ओषधीय तस्मि कालि रोहिषु ॥
राजगेहि सप्तरात्र रत्नवर्ष वर्षितो
यतो दरिद्रसत्त्व गृह्य दान देन्ति भुञ्जते ।

नास्ति सत्त्व यो दरिद्र यो च आसि दुःखितो
मेरुमूर्ध्नि नन्दनेव एव सत्त्व नन्दिषु ॥
सो च राजु शाकियान पोषधी उपोषितो
राज्यकार्यु नो करोति धर्ममेव गोचरी ।
तपोवनं च सो प्रविष्ट मायदेवी पृच्छते
कीदृशीन्ति कायि सौख्य अग्रसत्त्वधार ति ॥ इति ॥

इति श्रीललितविस्तरे गर्भावक्रान्तिपरिवर्तो नाम षष्ठमो ऽध्यायः ॥

इति हि भिक्षवो दशमासेषु निर्गतेषु बोधिसत्त्वस्य जन्मकालसमये प्रत्युपस्थिते राज्ञः शुद्धोदनस्य गृहोद्याने द्वात्रिंशत्पूर्वनिमित्तानि प्रादुरभूवन् ॥ कतमानि द्वात्रिंशत् । सर्वपुष्पाणि सुङ्गीभूतानि न पुष्पन्ति स्म। पुष्करिणीषु चोत्पलपद्मकुमुदपुण्डरीकाण्यभ्युद्गतानि कुट्मलीभूतानि न पुष्पन्ति स्म। तदा च पुष्पफलवृक्षा धरणीतलादभ्युद्गम्य क्षारकजाता न फलन्ति स्म। अष्टौ च रत्नवृक्षाः प्रादुरभूवन्। विंशति च रत्ननिधानशतसहस्राण्युत्प्लुत्य व्यवस्थितानि दृश्यन्ते स्म । अन्तःपुरे च रत्नाङ्कुराः प्रादुरभूवन । सुगन्धितैलपरिवासिताश्च गन्धोदकशीतोष्णाः प्रस्रवन्ति स्म । हिमवत्पर्वतपार्श्वाच्च सिहपोतका आगत्यागत्याभिनन्दन्तः कपिलाह्वयं पुरवरं प्रदक्षिणीकृत्य द्वारमूलेष्ववतिष्ठन्ते स्म । न च कंचित्सत्त्वं विहेठयन्ति स्म । पञ्चशतानि पाण्डराणां हस्तिशावकानामागत्य राज्ञः शुद्धोदनस्याग्रकरैश्चरणावभिलिखन्ति स्म ॥ मेखलीबद्धकाश्च देवदारका राज्ञः शुद्धोदनस्यान्तःपुरे उत्सङ्ग-

नोत्सङ्गमनुपरिवर्तमानाः संदृश्यन्ते स्म । गगणतलगतार्धकाया नागकन्या नानापूजोपकरणपरिगृहीता अध्यालम्बमानाः संदृश्यन्ते स्म । दश च नागकन्यासहस्राणि मयूराङ्गहस्तकपरिगृहीता गगणतले ऽवस्थिताः संदृश्यन्ते स्म । दश च पूर्णकुम्भसहस्राणि कपिलवस्तुमहानगरं प्रदक्षिणीकुर्वन्ति संदृश्यन्ते स्म । दश च देवकन्यासहस्राणि गन्धोदकभृङ्गारपरिगृहीता मूर्ध्नि धारयन्त्यो ऽविस्थताः संदृश्यन्ते स्म । दश च देवकन्यासहस्राणि छत्रध्वजपताकापरिगृहीता अवस्थिताः संदृश्यन्ते स्म । बहूनि चाप्सरःशतसहस्राणि शङ्खभेरीमृदङ्गपणवैः घण्टावसक्तैः प्रतीक्षमाणान्यवस्थितानि संदृश्यन्ते स्म । सर्वे वायवस्त्रावस्थिता न वान्ति स्म । सर्वनदी च प्रस्रवणानि च न वहन्ति स्म । चन्द्रसूर्यविमानानि नक्षत्रज्योतिर्गणाश्च न वहन्ति स्म । पुष्यं च नक्षत्रयुक्तमभूत् । रत्नजालपरिस्फुटं च राज्ञः शुद्धोदनस्य गृहं संस्थितमभूत् । वैश्वानरश्च न ज्वलति स्म । कूटागारप्रासादतोरणद्वारकतलेषु च मणिरत्नान्यभिप्रलम्बमानानि च संदृश्यन्ते स्म । दूष्यगञ्जाश्च विविधरत्नगञ्जाश्च प्रावृताः संदृश्यन्ते स्म । काकोलूकगृधवृकशृगालशब्दाश्चान्तर्हिता अभूवन् । सुजातजातशब्दाश्च श्रूयन्ते स्म । सर्वजनपदकर्मान्ताश्च समुच्छिन्ना अभूवन् । उत्कूलनिकूलाश्च पृथिवीप्रदेशाः समाः समवस्थिताः सर्ववीथीचत्वरशृङ्गाटकरथ्यान्तरापणमुखानि च पाणितलमृष्टानीव पुष्पाभिकीर्णानि विरोचन्ते स्म । सर्वाश्च गुर्विण्यः सम्यक्सुखेन प्रसूयन्ते स्म । सर्वशालवनदेवताश्च पत्रेष्वर्धकायानभिनिर्माय नम्यमानाः स्थिताः संदृश्यन्ते स्म ॥ इमानि द्वात्रिंशत्पूर्वनिमित्तानि प्रादुरभूवन् ॥

अथ खलु मायादेवी बोधिसत्त्वस्य जन्मकालसमयं ज्ञात्वा बोधिसत्त्वस्यैव तेजोऽनुभावेन रात्र्यां प्रथमे यामे राजानं शुद्धोदनमुपसंक्रम्य गाथाभिरभ्यभाषत ॥

देव शृणु हि मह्यं भाषतो यं मतं मे
अचिरचिरचिरेणा जात उद्यानबुद्धिः ।
यदि च तव न रोषो नैव दोषो न मोहः
चिप्रमहु व्रजेया क्रीडउद्यानभूमिं ॥

त्वमिह तपसि खिन्नो धर्मचित्तप्रयुक्तो
अहु च चिरप्रविष्टा शुद्धसत्त्वं धरेन्ती ।
द्रुमवरप्रतिबुद्धाः फुल्लिता शालवृक्षाः
युक्त भविय देवा गन्तुमुद्यानभूमिं ॥

ऋतु प्रवर वसन्तो योषितां मण्डनीयो
भ्रमरवरविघुष्टाः कोकिलबर्हिगीताः ।
शुचिरुचिरविचित्रा भ्राम्यते पुष्परेणुः
साधु ददहि आज्ञां गच्छमो मा विलम्बः ॥ ० ॥

वचनमिमु शुणित्वा देविये पार्थिवेन्द्रः
तुष्टो मुदितचित्तः पारिषद्यानवोचत् ।
हयगजरथपङ्क्त्या वाहना योजयध्वं
प्रवरगुणसमृद्धां लुम्बिनीं मण्डयध्वं ॥

नीलगिरिनिकाशां मेघवर्णानुबद्धां
विंशति च सहस्राण्योजयध्वं गजानां ।

मणिकनकविचित्रां हेमजालोपगूढां
घण्टरुचिरपार्श्वान् षड्विषाणां गजेन्द्रान् ॥
हिमरजतनिकाशां मुञ्जकेशां सुकेशां
विंशति च सहस्रान्योजयध्वं हयानां ।
कनकरचितपार्श्वा किङ्किनीजाललम्बा
पवनजवितवेगा वाहना पार्थिवस्य ॥
नरगण रणसौण्डान् शूरसंग्रामकामान्
असिधनुशरशक्तिपाशखड्गाग्रहस्तान् ।
विंशति च सहस्रान्योजयध्वं सुशीघ्रं
माय सपरिवारां रक्षथा अप्रमत्ता ॥
मणिकनकनिषिक्तां लुम्बिनीं कारयध्वं
विविधवसनरत्नैः सर्ववृक्षां प्रवेथा ।
विविधकुसुमचित्रं नन्दनं वा सुराणां
वदथ च मम शीघ्रं सर्वमेतं विधाय ॥ ० ॥

वचनमिमु निशम्या पारिषद्यै क्षणेन
वाहनकृतसज्जा लुम्बिनी मण्डिता सा ।
पारिषद्य आह । जय जय हि नरेन्द्रा आयु पालेहि दीर्घं
सर्व कृतु यथोक्तं कारु देव प्रतीक्ष ॥
सो च नरवरेन्द्रो हृष्टचित्तो भवित्वा
गृहवरमनुविष्टो इष्टिकानेवमाह ।
यस्य अहु मनापो या च मे प्रीतिकामा
सा मि कुरुत आज्ञां मण्डयित्वात्मभावं ॥

वरसुरभिसुगन्धां भावरङ्गां विचित्रा
वसनमृदुमनोज्ञां प्रावृणोथा उदग्रा. ।
उरसि विगलिताना मुक्तहारा भवेथा
आभरणविभूषां दर्शयेथाद्य सर्वाः ॥

तुणपणवमृदङ्गां वीणवेणूमुकुण्डां
तूर्यशतसहस्रान्योजयध्वं मनोज्ञा ।
भूय कुरुत हर्षं देवकन्यान यूयं
श्रुत्व मधुरघोषं देवतापि स्पृहेयुः ॥

एकरथवरेस्मिन् तिष्ठतां मायदेवी
मा च पुरुष इस्त्री अन्य तत्रारुहेया ।
नारि विविधवर्मा तं रथं वाहयन्ता
मा च प्रतिकूलं मामनापं शृणेथा ॥

हयगजरथपत्तीं सैन्यश्रीमद्विचित्रां
द्वारि स्थित नृपस्या श्रूयते उच्चघोषाः ।
क्षुभितजलनिधिर्वा श्रूयते एव शब्दो ॥ ० ॥

माय यद गृहातो निर्गता द्वारमूलं
घण्ट शतसहस्रा ताडिता मङ्गलार्थं ॥

सो च रथविचित्रो मण्डितः पार्थिवेन
अपि चमरुसहस्रै दिव्यसिंहासनेभिः ।
चतुरि रतनवृक्षाः पत्रपुष्पोपपेताः
अभिनदितमनोज्ञां हंसक्रोञ्चान्मयूरान् ॥

छत्रध्वजपताकाश्चोच्छ्रिता वैजयन्त्यः
किङ्किनिवरजालैश्छादितं दिव्यवस्त्रैः ।
मरुवधु गगणेस्मिन्तं रथं प्रेक्षयन्ती
दिव्यमधुरघोषं श्रावयन्त्य स्तुवन्ति ॥

उपविशति यदा सा माय सिंहासनाग्रे
प्रचलित त्रिसहस्रा मेदिनी षड्विकारां ।
पुष्प मरु क्षिपिंसू अम्बरां भ्रामयिंसू
अद्य जगति श्रेष्ठो जायते लुम्बिनीये ॥

चतुरि जगति पालास्तं रथं वाहयन्ते
त्रिदशपतिरपीन्द्रो मार्गशुद्धिं करोति ।
ब्रह्म पुरतु गच्छी दुर्जनां वारयन्तो
अमरशतसहस्राः प्राञ्जलीका नमन्ते ॥

नृपति मुदितचित्तो वीक्षते तां वियूहां
तस्य भवति एवं व्यक्त यं देवदेवो ।
यस्य चतुरि पाला ब्रह्म सेन्द्राश्च देवाः
कुरुत विपुलपूजां व्यक्त यं शुद्धभावी ॥

नास्ति त्रिभवि सत्त्वो यः सहेत्पूजमेतां
देव अथ च नागाः शक्र ब्रह्मा च पालाः ।
मूर्ध तद् फलेया जीवितं चास्य नश्येत्
अयु पुन अतिदेवः सर्वपूजां सहाति ॥

अथ खलु भिक्षवो मायादेवी चतुरशीत्या हयरथसहस्रैः सर्वालंकारविभूषितैः परिवृता चतुरशीत्या गजरथसहस्रैः सर्वालंका-

रविभूषितैः। चतुरशीत्या च पत्तिसहस्रैः शूरैर्वीरैर्वराङ्गरूपिभिः सुसंनद्धदृढवर्मकवचितैरनुपरिगृहीता। षष्ट्या च शाक्यकन्यासहस्रैः पुरस्कृता। चत्वारिंशता च सहस्रै राज्ञः शुद्धोदनस्य ज्ञातिकुलप्रसूतैः शाक्यैः वृद्धदहरमध्यमैः संरक्षिता। षष्ट्या च सहस्रै राज्ञः शुद्धोदनस्यान्तःपुरेण गीतवाद्यसम्यक्तूर्यताडावचरसंगीतिसंप्रवादितेन परिवृता। चतुरशीत्या च देवकन्यासहस्रैः परिवृता। चतुरशीत्या च नागकन्यासहस्रैः। चतुरशीत्या च गन्धर्वकन्यासहस्रैः। चतुरशीत्या च किन्नरकन्यासहस्रैः। चतुरशीत्या चासुरकन्यासहस्रैः। नानाव्यूहालंकारालंकृताभिः। नानागीतवाद्यवर्णभाषिणीभिरनुगम्यमाना निर्याति स्म॥ सर्वं च लुम्बिनीवनं गन्धोदकसिक्तं दिव्यपुष्पाभिकीर्णालंकृतमभूत्। सर्ववृक्षाश्च तस्मिन्वनवरे अकालपत्रपुष्पफलानि ददन्ति स्म। देवैश्च तथा तद्वनं समलंकृतमभूत्। तद्यथापि नाम मिश्रकावनं देवानां समलंकृतं॥

अथ खलु मायादेवी लुम्बिनीवनमनुप्रविश्य तस्माद्रथवरादवतीर्य नरमरुकन्यापरिवृता वृक्षेण वृक्षं पर्यटन्ती वनाद्वनं चङ्क्रम्यमाणा द्रुमाद्द्रुमं निरीक्षमाणा अनुपूर्वेण येनासौ प्लक्षो महाद्रुमरत्नवरप्रवरः सुविभक्तशाखः समपत्रमञ्जरीधरो दिव्यमानुष्यनानापुष्पसंपुष्पितो वरप्रवरसुरभिगन्धिनानागन्धिनानारङ्गवस्त्राभिप्रलम्बितो विविधमणिविचित्रप्रभोज्ज्वलितः सर्वरत्नमूलदण्डशाखापत्रसमलंकृतः सुविभक्तविस्तीर्णशाखः करतलनिभे भूमिभागे सुविभक्तविस्तीर्णनीलतृणमयूरग्रीवासंनिभे काचिलिन्दिकसुखसंस्पर्शे धरणीतले संस्थितः पूर्वजिनजनेत्र्याभिनिवासितः देवसंगीत्यनुगीतः शुभविमलविशुद्धः शुद्धा-

वासदेवशतसहस्रैः प्रशान्तचित्तैरभिनतजटामकुटावलम्बितावनतमूर्धभिरभिनन्द्यमानस्तं प्लक्षवृक्षमुपजगाम ॥

अथ स प्लक्षवृक्षो बोधिसत्त्वस्य तेजोऽनुभावेनावनम्य प्रणमति स्म ॥ अथ मायादेवी गगणतलगतेव विद्युद्दृष्टिं दक्षिणं बाहुं प्रसार्य प्लक्षशाखां गृहीत्वा सलीलं गगणतलं प्रेक्षमाणा विजृम्भमाना स्थिताभूत् ॥ अथ तस्मिन्समये षष्ठ्यप्सरःशतसहस्राणि कामावचरदेवेभ्य उपसंक्रम्य मायादेव्या उपस्थाने परिचर्यां कुर्वन्ति स्म ॥

एवंरूपेण खलु पुनर्ऋद्धिप्रातिहार्येण समन्वागतो बोधिसत्त्वो मातुःकुक्षिगतोऽस्थात् । स परिपूर्णानां दशानां मासानामत्ययेन मातुर्दक्षिणपार्श्वान्निष्क्रमति स्म । स्मृतः संप्रजानन्ननुपलिप्तो गर्भमलैर्यथा नान्यः कश्चिदुच्यतेऽन्येषां गर्भमल इति ॥

तस्मिन् खलु पुनर्भिक्षवः समये शक्रो देवानामिन्द्रो ब्रह्मा च सहापतिः पुरतः स्थितावभूवतां । यौ बोधिसत्त्वं परमगौरवजातौ दिव्यकाशिकवस्त्रान्तरितं सर्वाङ्गप्रत्यङ्गैः स्मृतौ संप्रज्ञौ प्रतिगृह्णाति स्म ॥

यस्मिंश्च कूटागारे बोधिसत्त्वो मातुःकुक्षिगतोऽस्थात् । तं ब्रह्मा सहापतिर्ब्रह्मकायिकाश्च देवपुत्रा अभ्युत्क्षिप्य ब्रह्मलोकं चैत्यार्थं पूजार्थं चोपनामयामासुः । अपरिगृहीतः खलु पुनर्बोधिसत्त्वः केनचिन्मनुष्यभूतेन । अथ तर्हि बोधिसत्त्वं देवताः प्रथमतरं प्रतिगृह्णन्ति स्म ॥

अथ बोधिसत्त्वो जातमात्रः पृथिव्यामवतरति स्म । समनन्तरावतीर्णस्य च बोधिसत्त्वस्य महासत्त्वस्य महापृथिवीं भित्त्वा महापद्मं प्रादुरभूत् । नन्दोपनन्दौ च नागराजानौ गगणतलेऽर्धकायौ स्थित्वा शीतोष्णे द्वे वारिधारेऽभिनिर्मित्वा बोधिसत्त्वं स्नापयतः स्म ।

शक्रब्रह्मलोकपालाः पूर्वंगमास्तान्ये च बहवो देवपुत्राः शतसहस्रा ये बोधिसत्त्वं जातमात्रं नानागन्धोदकमुक्तकुसुमैः स्नापयन्त्यभ्यवकिरन्ति स्म। अन्तरिक्षे च द्वे चामरे रत्नच्छत्रं च प्रादुर्भूते ॥ स तस्मिन् महापद्मे स्थित्वा चतुर्दिशमवलोकयति स्म। (चतुर्दिशमवलोक्य) सिंहावलोकितं महापुरुषावलोकितं व्यवलोकयति स्म ॥

तस्मिन् खलु पुनः समये बोधिसत्त्वः पूर्वकुशलमूलविपाकजेनाप्रतिहतेन दिव्यचक्षुप्रादुर्भूतेन दिव्येन चक्षुषा सर्वावन्तं त्रिसाहस्रं महासाहस्रं लोकधातुं सनगरनिगमजनपदराष्ट्रराजधानीं सदेवमानुषं पश्यति स्म। सर्वसत्त्वानां च चित्तचरितं च प्रजानाति स्म। ज्ञात्वा च व्यवलोकयति स्म। अस्ति त्वसौ कश्चित्सत्त्वो यो मया सदृशः शीलेन वा समाधिना वा प्रज्ञया वा कुशलमूलचर्यया वा ॥ यदा च बोधिसत्त्वः त्रिसाहस्रमहासाहस्रलोकधातौ न कचित्सत्त्वमात्मतुल्यं पश्यति स्म। अथ तस्मिन्समये बोधिसत्त्वः सिंह इव विगतभयभैरवोऽसंत्रस्तः। अस्तम्भी सुचिन्तितं स्मृत्वा चिन्तयित्वा सर्वसत्त्वानां चित्तचरितानि ज्ञात्वा अपरिगृहीतो बोधिसत्त्वः पूर्वां दिशमभिमुखः सप्तपदानि प्रक्रान्तः। पूर्वंगमो भविष्यामि सर्वेषां कुशलमूलानां धर्माणां ॥ तस्य प्रक्रमत उपर्यन्तरीक्षेऽपरिगृहीतं दिव्यश्वेतविपुलछत्रं चामरशुभे गच्छन्तमनुगच्छन्ति स्म ॥ यत्र यत्र च बोधिसत्त्वः पदमुत्क्षिपति स्म। तत्र तत्र पद्मानि पादुर्भवन्ति स्म ॥ दक्षिणां दिशमभिमुखः सप्तपदानि प्रक्रान्तः। दक्षिणीयो भविष्यामि देवमनुष्याणां ॥ पश्चिमां दिशमभिमुखः सप्तपदानि प्रक्रान्तः सप्तमे पदे स्थित्वा सिंह इवाल्हादनात्मिकां वाचं भाषते स्म। अहं लोके ज्येष्ठोऽहं

लोके श्रेष्ठः। इयं मे पश्चिमा जातिः। करिष्यामि जातिजरामरणदुःखस्यान्तं ॥ उत्तरां दिशमभिमुखः सप्तपदानि प्रक्रान्तः । अनुत्तरो भविष्यामि सर्वसत्त्वानां ॥ अधस्ताद्दिशमभिमुखः सप्तपदानि प्रक्रान्तः। निहनिष्यामि मारं च मारसेनां च। सर्वनैरयिकाणां च निरयाग्निप्रतिघाताय महाधर्ममेघवृष्टिं वर्षिष्यामि । येन ते सुखसमर्पिता भविष्यन्ति ॥ उपरिष्टाद्दिशमभिमुखः सप्तपदानि प्रक्रान्त ऊर्ध्वं चावलोकयति स्म। उल्लोकनीयो भविष्यामि सर्वसत्त्वानां ॥ समनन्तरभाषिता चेयं बोधिसत्त्वेन वाक् । अथ तस्मिन्समये अयं त्रिसाहस्रमहासाहस्रलोकधातुः स्वरेणाभिविज्ञाप्तो ऽभूदियं बोधिसत्त्वस्य कर्मविपाकजा अभिज्ञाधर्मता ॥

यदा बोधिसत्त्वश्चरमभविक उपजायते। यदा चानुत्तरां सम्यक्संबोधिमभिसंबुध्यते । तदास्येमान्येवंरूपाणि ऋद्धिप्रातिहार्याणि भवन्ति ॥ तस्मिन् खलु पुनर्भिक्षवः समये संहर्षितरोमकूपजाताः सर्वसत्त्वा अभूवन्। महतश्च पृथिवीचालस्य लोके प्रादुर्भावो ऽभूत्। भैरवस्य रोमहर्षणस्य। अघट्टितानि च दिव्यमानुष्यकानि तूर्याणि संप्रवादितानि। सर्वर्तुकालिकाश्च वृक्षास्तस्मिन्समये त्रिसाहस्रमहासाहस्रलोकधातौ संकुसुमिताः फलिताश्च। विशुद्धाच्च गगनतलान्मेघशब्दः श्रूयते स्म । अपगतमेघाच्च गगनाच्छनैः सूक्ष्मसूक्ष्मो देवः प्रवर्षति स्म । नानावर्णदिव्यकुसुमवस्त्राभरणगन्धचूर्णव्यामिश्राः परमसुखसंस्पर्शाश्च सौम्याः सुगन्धवाताः प्रवायन्ति स्म। व्यपगततमोरजोधूमनीहाराश्च सर्वा दिशः सुप्रसन्ना विराजन्ते स्म। उपरिष्टाच्चान्तरिक्षाद्दृश्या गम्भीरा महाब्रह्मघोषाः संश्रूयन्ते स्म । सर्वचन्द्रसूर्यशक्रब्रह्मलोकपा-

लप्रभाश्चाभिभूता अभूवन्॥ परमसुखसंस्पर्शया च सर्वसत्त्वकायचित्तसुखसंजनन्या लोकोत्तरयानिकशतसहस्रवर्णप्रभया सर्वत्रिसाहस्रमहासाहस्रलोकधातुः परिस्फुटो ऽभूत्॥ समनन्तरजातस्य खलु पुनर्बोधिसत्त्वस्यैकान्तसुखसमर्पिताः सर्वसत्त्वा बभूवुः। सर्वरागद्वेषमोहदर्पारतिविषादभयालोभेर्ष्यामात्सर्यविगताः। सर्वाकुशलक्रिया प्रतिविरता। व्याधितानां सत्त्वानां व्याधय उपशान्ताः। क्षुत्पिपासितानां सत्त्वानां क्षुत्पिपासा प्रस्रब्धाभूत्। मद्यमदमत्तानां च सत्त्वानां मदापगतः संवृत्तः। उन्मत्तैश्च स्मृतिप्रतिलब्धा। चक्षुर्विकलैश्च सत्त्वैश्चक्षुः प्रतिलब्धं। श्रोत्रविकलैश्च सत्त्वैः श्रोत्रं। अङ्गप्रत्यङ्गविकलेन्द्रियाश्चाविकलेन्द्रियाः संवृत्ताः। दरिद्रैश्च धनानि प्रतिलब्धानि। बन्धनबद्धाश्च बन्धनेभ्यो विमुक्ताः। आवीचिमादिं कृत्वा सर्वनैरयिकाणां सत्त्वानां सर्वकारणाद्दुःखं तस्मिन्समये प्रस्रब्धं। तिर्यग्योनिकानामन्यो ऽन्यभक्षणादिदुःखं। यमलोकिकानां सत्त्वानां क्षुत्पिपासादिदुःखं व्युपशान्तमभूत्॥

यदा च बोधिसत्त्वो जातमात्रः सप्तपदानि प्रक्रान्तो ऽभूत्। असंख्ययाकल्पकोटिनयुतशतसहस्रैः सुचरितचरणैर्महावीर्यमहास्थामधर्मताप्रतिलम्भेन तस्मिन्समये दशदिग्लोकधातुस्थिता बुद्धा भगवन्तस्तं पृथिवीप्रदेशं वज्रमयमधितिष्ठन्ति स्म। येन महापृथिवी तस्मिन्प्रदेशे नावतीर्येत तावन्महाबलवेगसमन्वागतो हि भिक्षवो जातमात्रो बोधिसत्त्वः सप्तपदानि प्रक्रान्तो ऽभूत्॥ सर्वलोकान्तरिकाश्च तस्मिन् समये महतावभासेन स्फुटा अभूवन्॥ महांश्च तस्मिन्समये गीतशब्दो ऽभून्नृत्यशब्दो ऽप्रमेयाश्च तस्मिन्समये पुष्पचूर्णगन्धमाल्यरत्नाभरणवस्त्रमेघा अभिप्रवर्षन्ति स्म। परमसुखसमर्पिताश्च सर्वसत्त्वा

अभूवन् । संक्षेपादचिन्त्या सा क्रियाभूत् । यदा बोधिसत्त्वो लोके प्रादुरभूत् सर्वलोकाभ्युन्नतः ॥

अथ खल्वायुष्मानानन्द उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणजानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत् । सर्वसत्त्वानां भगवंस्तथागत आश्चर्यभूतो ऽभूत् । बोधिसत्त्वभूत एवाद्भुतधर्मसमन्वागतश्च कः पुनर्वाद एवं ह्यनुत्तरां सम्यक्संबोधिमभिसंबुद्धः । एषो ऽहं भगवंश्चतुष्पञ्चकृत्वो ऽपि दशकृत्वो ऽपि यावत्पञ्चाशत्कृत्वो ऽपि शतकृत्वो ऽपि यावदनेकशतसहस्रशो ऽप्यहं भगवन् बुद्धं भगवन्तं शरणं गच्छामि ॥

एवमुक्ते भगवानायुष्मन्तमानन्दमेतदवोचत् । भविष्यन्ति खलु पुनरानन्दानागते ऽध्वनि केचिद्भिक्षवो ऽभावितकाया अभावितचित्ता अभावितशीला अभावितप्रज्ञा बाला अपण्डिता आभिमानिका उद्धता उन्नता असंवृता विक्षिप्तचित्ताः काङ्क्षापरीत्ता विचिकित्साबहुला अश्राद्धाः श्रमणमलाः श्रमणप्रतिरूपकास्ते न श्रद्धास्यन्ति इमामेवंरूपां बोधिसत्त्वस्य गर्भावक्रान्तिपरिशुद्धिं । ते ऽन्योन्यमेकान्ते संनिपात्यैवं वक्ष्यन्ति । पश्यत भो यूयमेतदपूज्यमानं बोधिसत्त्वस्य किल मातुःकुक्षिगतस्योच्चारप्रस्रावमण्डोपरिमिश्रस्य ईदृशी विभूतिरासीत् । स च किलाभिनिष्क्रामन् मातुर्दक्षिणाया कुक्षेरनुपलिप्तो गर्भमलेनाभूदिति । कथमेतद्योज्यते ॥ न पुनस्ते मोहपुरुषा एवं ज्ञास्यन्ति । न सुकृतकर्मणां सत्त्वानामुच्चारप्रस्रावमण्डे कायः संभवतीति ॥ भद्रिका खल्वपि तथारूपाणां सत्त्वानां गर्भावक्रान्तिर्भवति । गर्भावस्थितश्च

सत्त्वानुकम्पया हि बोधिसत्त्वो मनुष्यलोके उपपद्यते । न देवभूत एव धर्मचक्रं प्रवर्तयति । तत्कस्मात् । मा खल्वानन्द सत्त्वाः कौसीद्यमापत्स्यन्ते । देवभूतः स भगवान् तथागतोऽर्हन् सम्यक्संबुद्धो वयं तु मनुष्यमात्रा न वयं समर्थास्तत्स्थान परिपूरयितुमिति । कौसीद्यमापद्येरन् ॥ न खलु पुनस्तेषा मोहपुरुषाणा धर्मस्तैन्यकानामेव भविष्यति । अचिन्त्यो हि स सत्त्वो नासावस्माभिः प्रामाणिकः कर्तव्य इति ॥ अपि तु खल्वानन्द (बुद्ध) ऋद्धिप्रातिहार्यमपि ते तस्मिन काले नावकल्पयिष्यन्ति । किमङ्ग पुनर्बोधिसत्त्वभूतस्य तथागतस्य बोधिसत्त्वप्रातिहार्याणि ॥ पश्यानन्द कियन्त ते मोहपुरुषा बहुपुण्याभिसंस्कारमभिसंस्करिष्यन्ति । ये बुद्धधर्मान प्रतिक्षेप्स्यन्ति लाभसत्कारश्लोकाभिभूता उच्चारलग्ना लाभसत्काराभिभूता इतरजातीयाः ॥

आनन्द आह । मा मैवंरूपा भगवन्ननागतेऽध्वनि भिक्षवो भविष्यन्ति य इमामेवं भद्रिकां सुत्रान्तां प्रतिक्षेप्स्यन्ति । प्रतिपद्यं पद्यन्ति च ॥

भगवानाह । एवंरूपाश्च ते आनन्द सूत्रान्तां प्रपिक्षेप्स्यन्ति प्रतिवक्ष्यन्ति चानेकप्रकारान् चान्यान्पापकानभिसंस्कारानभिसंस्करिष्यन्ति । अनर्थिकाश्च ते श्रामण्यो न भविष्यन्ति ॥

आनन्द आह । का पुनर्भगवन् तेषां तथारूपाणामसत्पुरुषाणां गतिर्भविष्यति । कोऽभिसंपरायः ॥

भगवानाह । या गतिर्बुद्धबोधिमन्तर्धाया ऽप्यतीतानागतप्रत्युत्पन्नांश्च बुद्धान्भगवतोऽत्याख्याय तां ते गतिं गमिष्यन्ति ॥

अथ खल्वायुष्मानानन्दः संहर्षितरोमकूपजातो नमो बुद्धाय इत्युक्त्वा भगवन्तमेतदवोचत् । मूर्च्छा मे भगवन् कायस्याभूदिमं तेषामसत्पुरुषाणां समुदाचारं श्रुत्वा ॥

भगवानाह । न तेषामानन्द समाचारो भविष्यति । विषमसमुदाचाराः खलु पुनस्ते सत्त्वा भविष्यन्ति । ते तेन विषमेन समुदाचारेणावीचौ महानरके प्रपतिष्यन्ति ॥ तत्कस्य हेतोः । ये केचिदानन्द भिक्षवो वा भिक्षुण्यो वा उपासका वा उपासिका वा इमानेवंरूपान्सूत्रान्तान्तावच्छ्रुत्वा ना ऽधिमोक्ष्यन्ति न श्रद्धास्यन्ति न प्रतिवेत्स्यन्ति । ते च्युताः समाना अवीचौ महानरके प्रपतिष्यन्ति ॥ मा आनन्द तथागताप्रामाणिकं अकार्षुः ॥ तत्कस्माद्धेतोः । अप्रमेयो ह्यानन्द तथागतो गम्भीरो विपुलो दुरवगाहः । येषां केषांचिदानन्द इमानेवंरूपान्सूत्रान्ताञ्छ्रुत्वोपपत्स्यन्ते प्रीतिप्रामोद्यं प्रसादलाभास्तैः सत्त्वैः सुलब्धाः । अमोघं च तेषां जीवितं अमोघं च तेषां मानुष्यं सुचरितचरणाश्च ते आदत्तं च तैः सारं मुक्ताश्च ते त्रिभ्योऽपायेभ्यो भविष्यन्ति च ते पुत्रास्तथागतस्य परिप्राप्तं च तैः सर्वकार्यं अमोघश्च तेषां श्रद्धाप्रतिलम्भः सुविभक्तं च तै राष्ट्रपिण्डं प्रसन्नाश्च ते ऽग्रसत्त्वैः संछिन्नास्तैर्मारपाशा निस्तीर्णश्च तैः संसाराटवीकान्तारः समुद्धृतश्च तैः शोकशल्यो ऽनुप्राप्तं च तैः प्रामोद्यवस्तु सुगृहीतानि च तैः शरणगमनानि दक्षिणीयाश्च ते पूजार्हा दुर्लभप्रादुर्भावाश्च ते लोके दक्षिणीयाश्च ते धारयितव्याः ॥ तत्कस्य हेतोः । तथा हि ते सर्वलोके इममेवं सर्वलोकविप्रत्यनीकं तथागतधर्मं श्रद्दधन्ति । न ते आनन्द सत्त्वा अवरकेण कुशलमूलेन समन्वागता भवन्ति । ते

चानन्द सत्त्वा ममैकजातिप्रतिबद्धानि मित्राणि भविष्यन्ति ॥ तत्कस्माद्धेतोः । कश्चिदानन्द श्रवणादेव प्रियो भवति मनापश्च न तु दर्शनेन । कश्चिदानन्द दर्शनेनापि प्रियो भवति मनापश्च न तु खलु पुनः श्रवणेन । कश्चिदानन्द दर्शनेनापि श्रवणेनापि प्रियो भवति मनापश्च । तेषां केषांचिदानन्दाहं दर्शनेन वा श्रवणेन वा प्रियो मनापो भवेयं निष्ठात्वं तत्र गच्छेथा न तानि ममैकजातिप्रतिबद्धानि मित्राणि । दृष्टास्ते तथागतेन मोचयितव्यास्ते तथागतेन ते समगुणप्रत्यंशास्ते तथागतगुणप्रत्यंशास्ते तथागतेन कर्तव्या उपासकास्ते तथागतं शरणं गता उपात्तास्ते तथागतेन । ममान्तिकात् खल्वप्यानन्द पूर्वं बोधिसत्त्वचर्यामेव तावच्चरतो ये केचिद्भयार्दिताः सत्त्वा आगत्याऽभयं प्रतियाचन्ते स्म । तेभ्योऽहं सत्त्वेभ्योऽभयं दत्तवान् । किमङ्ग पुनरेतर्ह्यनुत्तरां सम्यक्सबोधिमभिसंबुद्धः ॥ श्रद्धायामानन्द योगः करणीयः । इदं तथागतो विज्ञापयति । यदानन्द तथागतेन युष्माकं करणीयं कृतं तत्तथागतेन शोधितो मानशल्यः । श्रवणेनाप्यानन्द मित्रस्य ननु योजनशतान्तरमपि गच्छन्ति गत्वा च सुखिता भवन्त्यदृष्टपूर्वं मित्रं दृष्ट्वा । कः पुनर्वादो ये मां निःश्रित्य कुशलमूलान्यवरोपयन्ति । ज्ञास्यन्त्यानन्द तथागता अर्हन्तः सम्यक्संबुद्धाः । पूर्वमित्राण्येते सत्त्वास्तथागतानामस्माकमप्येते मित्राणि भवन्तीति ॥ तत्कस्मात् । खलु पुनरानन्द मित्रं मित्रस्य प्रियं च मनापं च भवति । तस्यापि (तदपि प्रियमेव भवति) मित्रस्य यत्प्रियं मित्रं तदपि प्रियमेव भवति मनापं च । तस्मात्तर्ह्यानन्दारोचयामि च प्रतिवेदयामि च । श्रद्धामात्रकमुत्पादयथ अनुपरिन्दिष्यामो वययना-

गतानां तथागतानामर्हतां सम्यक्संबुद्धानामन्तिके तेऽस्माकमपि मित्राणीति विदित्वा यथाभिप्रायं परिपूरयिष्यन्ति ॥ तद्यथापि नाम आनन्द कस्यचिदेव पुरुषस्यैकपुत्रको भवेत् । सुवचाः प्रदक्षिणग्राही स च पुरुषो बहुमित्रो भवेत् । स तस्मिन् पितरि कालगते न हि विहन्येत पितृमित्रसुपरिगृहीतः । एवमेवानन्द ये केचिन्मम श्रद्धास्यन्ति तानहमुपाददामि । मित्राणीव मम तानि (ते) मम शरणं गताः ॥ बहुमित्रस्य तथागतः । तानि च तथागतस्य मित्राणि भूतवादीनि न मृषावादीनि । अनुपरिन्दाम्यहं । भूतवादीनां यानि तथागतस्य मित्राण्यनागतास्तथागता अर्हन्तः सम्यक्संबुद्धाः ॥ श्रद्धायामानन्द योगः करणीयः । अत्राहं युष्मान् विज्ञापयामीति ॥

इति हि जाते बोधिसत्त्वे गगनतलगतान्यप्सरःकोटिनयुतशतसहस्राणि दिव्यैः पुष्पधूपगन्धमाल्यविलेपनवस्त्राभरणैर्मायादेवीमभ्यवकिरन्ति स्म ॥ तत्रेदमुच्यते ।

शुभविमलविशुद्धहेमप्रभा चन्द्रसूर्यप्रभा
षष्टिदशसहस्र देवाप्सरा मञ्जुघोषस्वराः ।
तस्मि क्षणि उपेत्य तां लुम्बिनीं मायादेव्यब्रुवन्
मा खु जनि विषादु तुष्टा भवोपस्थायिकास्ते वयं ॥

भण हि किं करणीयु किं कुर्महे केन कार्यं च ते
वयं तव सुसमर्थोपस्थायिका प्रेमभावस्थिताः ।
अपि च भव उदग्र हर्षान्विता मा च खेदं जनेहि
जरामरणविघाति वैद्योत्तमं अद्य देवी जनेषी लघुं ॥

यथ द्रुम परिफुल्ल संपुष्पिता शालवृक्षा इमे
यथ चमरुसहस्र पार्श्वे स्थिता भ्रामयन्तो भुजान् ।
यथ च चलि ससागरा मेदिनी षड्विकारा इयं
दिवि भुवि च विघुष्ट लोकोत्तरं त्व जनेषी सुत ॥

यथ च प्रभ विशुद्ध विभ्राजते स्वर्णवर्ण शुभा
तूर्यशतमनोज्ञा चाघट्टिता घुष्यन्ते ऽम्बरे ।
यथ च शतसहस्र शुद्धा शुभा वीतरागाः सुरा
नमिषु मुदितचित्ता अद्यो जने सर्वलोके हित ॥

शक्रमपि च ब्रह्म पालापि चान्या च या देवता
तुष्ट मुदितचित्ता पार्श्वे स्थिता नामयन्तो भुजां ।
सो च पुरुषसिंह शुद्धव्रतो (भित्त्व) कुक्षि निर्धावितो
कनकगिरिनिकास शुद्धव्रतो निष्क्रमी नायकः ॥

शक्रमपि च ब्रह्म तौ पाणिभिः संप्रतीच्छा मुनिं
क्षेत्र शतसहस्र संकम्पिता आभ मुक्ता शुभा ।
अपि च त्रिषु अपायि सत्त्वा सुखी नास्ति दुःखं पुन
अमरशतसहस्र पुष्पां क्षिपी भ्रामयन्त्यम्बरान् ॥

वीर्यबलउपेत वज्रात्मिका मेदिनी संस्थिता(ऽभूत्तदा)
पद्मु रुचिरचित्रु अभ्युन्नतो यत्र (चक्राङ्कचिह्नैभिः) पद्भ्यां स्थितो (ऽपि नायकः) ।
सप्तपदक्रमित्व ब्रह्मस्वरो मुञ्चि घोषोत्तमं
जरामरणविघाति वैद्योत्तमो भेष्यि सत्त्वोत्तमः ॥

गगणतलस्थिहित्व ब्रह्मोत्तमो शक्रदेवोत्तमः
सुचिरुचिरप्रसन्नगन्धोदकै विस्नपी नायकं ।
अपि च उरगराजा शीतोष्णद्वे वारिधारे शुभे
व्यमुञ्चतान्तरीक्षे स्थिताः
अमरशतसहस्र गन्धोदकै विस्नपी नायकं ॥

लोकपालाश्च संभ्रान्त संधारयन्ती करैः शोभनैः ।
त्रिसहस्रा इयं भूमिः कम्पते सचराचरा ॥
प्रभा च रुचिरा मुक्ता अपायाश्च विशोधिताः ।
क्लेशदुःखाश्च ते शान्ता जाते लोकविनायके ॥
क्षिपन्ति मरुतः पुष्पं जाते ऽस्मिन्नरनायके ।
क्रम सप्तपदां वीरः क्रमते बलवीर्यवान् ॥
पादौ निक्षिपते यत्र भूमौ पद्मवराः शुभाः ।
अभ्युद्गच्छन्तितो मह्यां सर्वरत्नविभूषिताः ॥
यदा सप्तपदां गत्वा ब्रह्मस्वरमुदाहरि ।
जरामरणविघाती भिषग्वर इवोद्गतः ॥
व्यवलोकयित्वा च विशालदो दिशां ततो गिरां मुञ्चति अर्थयुक्तां ।
ज्येष्ठो ऽहं सर्वलोकस्य श्रेष्ठो लोके विनायकः ।
इयं च जातिर्मम पश्चिमा (इति) ॥
हास्यं च मुक्तं नरनायकेन स लोकपालैर्मरुभिश्च सेन्द्रैः ।
प्रसन्नचित्तैर्वरगन्धवारिभिः संस्कारितो लोकहितार्थकारी ॥
अपि चोरगेन्द्रैः सहितैः समग्रैः गन्धोग्रधाराविसरैः स्नपिन्सु ।
अन्येऽपि देवानयुता (स्थिता)ऽन्तरीक्षे स्नपिन्सु गन्धाग्रजिने स्वयंभुं ॥

श्वेतं च विपुलं छत्रं चामरांश्च शुभाम्बरान् ।
अन्तरीक्षे गता देवाः स्नापयन्ति नरर्षभं ॥
(पञ्चकुलिकशतानि प्रसूयन्ते स्म)
पुरुष त्वरितु गत्व शुद्धोदनमब्रवीत् हर्षितो
वृद्धि विपुल जातु देवा सुतो भूषितो लक्षणैः ।
महकुलरतनस्य (वृद्धिभूता) व्यक्तो असौ चक्रवर्तीश्वरः
न च भवि प्रतिशत्रु जम्बुध्वजे एकछत्रो भवेत् ॥
द्वितियु पुरुषु गत्व (रात्रि) शुद्धोदने श्रेषयित्वा क्रमे
वृद्धि विपुल देव जाता नृपे शाकियाना कुले ।
पञ्चविंशतिसहस्र जाताः सुताः शाकियानां गृहे
सर्वि बलउपेत नग्नाः समा दुष्प्रधर्षाः परैः ॥
अपरु पुरुष आह देवा शृणा नन्दशब्दं ममा
छन्दकप्रमुखानि चेटीसुता जात अष्टौ शता ।
अपि च दशसहस्र जाता हयाः कण्ठकस्य सखा
तुरगवरप्रधान हेमप्रभा मञ्जुकेशावराः ॥
विंशति च सहस्र पर्यन्तकाः कोट्टराजास्तथा
नृपति क्रम तलेभि चान्वाक्रमी साधु देवा जया ।
आज्ञा खलु ददाहि गच्छाम किं वा करोमो नृपा
त्वमिह वशितु प्राप्तु भृत्या वयं भर्तृदेवा जया ॥
विंशति च सहस्र नागोत्तमा हेमजालोज्वला
त्वरितमुपगमिन्सु राज्ञो गृहं गर्जमाना नभे ।

कृष्णसबलवत्सगोपामुखा जात षष्टिशता
इयमपि सुति देवदेवोत्तमे वृद्धि राज्ञो गृहे ॥

अपि च नृपति गच्छ प्रेच स्वयं सर्वमेव प्रभो
पुण्यतेज प्रभे ।
नरमरुतसहस्र ये हर्षिता दृष्ट जाति गुणां
बोधिवर अशोक संप्रस्थिताः चिप्र भोमो जिनाः ॥ इति ॥

इति हि भिक्षवो जाते बोधिसत्त्वे तत्क्षणं दाननिसर्गः पुनरुत्तरि प्रवर्तते स्म । पञ्च च कुलिकाशतानि प्रसूयन्ते स्म । दश च कन्यासहस्राणि यशोवतीप्रमुखानि । अष्टौदासीशतानि अष्टौदासशतानि छन्दकप्रमुखानि । दश वडवासहस्राणि दश किशोरसहस्राणि कण्ठकप्रमुखानि । पञ्च करेणुसहस्राणि पञ्च पिङ्गसहस्राणि प्रसूयन्ते स्म । तानि सर्वाणि राज्ञा शुद्धोदनेन पुत्त्रवरोपितानि कुमारस्य क्रीडार्थं दत्तान्यभूवन् ॥ चतुर्णां च द्वीपकोटीशतसहस्राणां मध्ये पृथिवीप्रदेशे अश्वत्थयष्टिः प्रादुरभूदन्तर्द्वीपे च चन्दनवनं प्रादुर्बभूव । बोधिसत्त्वस्य परिभोगार्थं बोधिसत्त्वस्यैवानुभावेन। पञ्च चोद्यानशतानि समन्तान्नगरस्य प्रादुर्बभूवुर्बोधिसत्त्वस्य परिभोगाय । पञ्च च निधानसहस्राणि धरणीतलादुत्प्लुत्य मुखं दर्शयन्ति स्म ॥ इति हि ये केचिद्राज्ञः शुद्धोदनस्यार्थाभिप्रेता अभूवन् ते सर्वे समृद्धाभिप्रेता अभूवन् संसिद्धाः ॥

ततो राज्ञः शुद्धोदनस्यैतदभूत् । किमहं कुमारस्य नामधेयं करिष्यामीति ॥ ततोऽस्यैतदभूत् । अस्य हि जातमात्रेण मम सर्वार्थाः संसिद्धाः । यन्वहमस्य सर्वार्थसिद्ध इति नाम कुर्यां ॥ ततो राजा

बोधिसत्त्वं महता सत्कारेण सत्कृत्य सर्वार्थसिद्धोऽयं कुमारो नाम्ना भवतु इति नामास्याकार्षीत् ॥

इति हि भिक्षवो जाते बोधिसत्त्वे मातुः कुक्षिपार्श्वमक्षतमनुपहतमभवद्यथा पूर्वं तथा पश्चात् ॥ चितविष्यन्दाम्बुकूपाः प्रादुरभूवन् अपि च सुगन्धतैलपुष्करिण्यः ॥ पञ्चाप्सरःसहस्राणि दिव्यगन्धपरिवासिततैलपरिगृहीतानि बोधिसत्त्वमातरमुपसंक्रम्य सुजातजाते तामक्लान्तकायतां च परिपृच्छन्ति स्म । पञ्चाप्सरःसहस्राणि दिव्यानुलेपनपरिगृहीतानि बोधिसत्त्वमातरमुपसंक्रम्य सुजातजाते तामक्लान्तकायतां च परिपृच्छन्ति स्म । पञ्चाप्सरःसहस्राणि दिव्यगन्धोदकपरिपूर्णघटापरिगृहीतानि बोधिसत्त्वमातरमुपसंक्रम्य सुजातजाते तामक्लान्तकायतां च परिपृच्छन्ति स्म । पञ्चाप्सरःसहस्राणि दिव्यदारकचीवरपरिगृहीतानि बोधिसत्त्वमातरमुपसंक्रम्य सुजातजाते तामक्लान्तकायता च परिपृच्छन्ति स्म । पञ्चाप्सरःसहस्राणि दिव्यदारकाभरणपरिगृहीतानि बोधिसत्त्वमातरमुपसंक्रम्य सुजातजाते तामक्लान्तकायता च परिपृच्छन्ति स्म । पञ्चाप्सरःसहस्राणि दिव्यतूर्यसंगीतिसंप्रभणितेन बोधिसत्त्वमातरमुपसंक्रम्य सुजातजाते तामक्लान्तकायता च परिपृच्छन्ति स्म । यावन्तश्चेह जम्बुद्वीपे बाह्याः पञ्चाभिज्ञा ऋषयस्ते सर्वे गगणतलेनागत्य राज्ञः शुद्धोदनस्य पुरतः स्थित्वा जयवृद्धिशब्दमनुश्रावयन्ति स्म ॥

इति हि भिक्षवो जातमात्रो बोधिसत्त्वः सप्तरात्रं लुम्बिनीवने दिव्यमानुष्यकैस्तूर्यताडावचरैः सत्क्रियते स्म । गुरुक्रियते स्म । मान्यते स्म । पूज्यते स्म । खाद्यभोज्यस्वादनीयानि विश्राण्यन्ते स्म । सर्वशाक्यगणाश्च संनिपात्यानन्दशब्दमुदीरयन्ति स्म । दानानि च ददन्ति

स्म । पुण्यानि च कुर्वन्ति स्म । द्वात्रिंशच्च ब्राह्मणशतसहस्राणि दिने दिने संतर्प्यन्ते स्म । येषां च येनार्थेन तेभ्यस्तद्दीयते स्म । शक्रश्च देवानामिन्द्रो ब्रह्मा च तस्यां ब्राह्मणपर्षदि मानवकरूपमभिनिर्मायाग्रासने निषद्येमां मङ्गल्यां गाथामभ्यभाषतां ॥

अपायाश्च यथा शान्ता सुखी सर्वं यथा जगत् ।
ध्रुवं सुखावहो जातः सुखे स्थापयिता जगत् ॥
यथा वितिमिरा चाभा रविचन्द्रसुरप्रभाः ।
अभिभूता न भासन्ते ध्रुवं पुण्यप्रभोद्भवः ॥
पश्यन्त्यनयना यद्वच् छ्रोत्रहीनाः शृण्वन्ति च ।
उन्मत्तकाः स्मृतीमन्तो भविता लोकचेतियः ॥
न बाधन्ते यथा क्लेशा जातं मैत्रजनं जगत् ।
निःसंशयं ब्रह्मकोटीनां भविता पूजनारहः ॥
यथा संपुष्पिताः शाला मेदिनी च समा स्थिता ।
ध्रुवं सर्वजगत्पूज्यः सर्वज्ञो ऽयं भविष्यति ॥
यथा निराकुलो लोको महापद्मो यथोद्भवः ।
निःसंशयं महातेजा लोकनाथो भविष्यति ॥
यथा च मृदुका वाता दिव्यगन्धोपवासिताः ।
शमेन्ति व्याधिं सत्त्वानां वैद्यराजो भविष्यति ॥
वीतरागा यथा चेमे रूपधातौ मरूच्छताः ।
कृताञ्जलिं नमस्यन्ते दक्षिणीयो भविष्यति ॥
यथा च मनुजा देवान् देवाः पश्यन्ति मानुषान् ।
हेठयन्ति न चान्योन्यं सार्थवाहो भविष्यति ॥

यथा च ज्वलनः शान्तः सर्वा नद्यश्च विस्थिताः ।
सूक्ष्मं च कम्पते भूमिः भविता तत्त्वदर्शकः ॥ इति ॥

इति हि भिक्षवः सप्तरात्रजातस्य बोधिसत्त्वस्य माता मायादेवी कालमकरोत् । सा कालगता त्रायत्रिंशति देवेषूपपद्यत ॥ स्यात् खलु पुनर्भिक्षवो युष्माकमेवं बोधिसत्त्वापराधेन मायादेवी कालगतेति । न खल्वेवं द्रष्टव्यं ॥ तत्कस्माद्धेतोः । एतत् परमं हि तस्या आयुष्प्रमाणमभूत् । अतीतानामपि भिक्षवो बोधिसत्त्वानां सप्तरात्रजातानां जनेत्र्यः कालमकुर्वन्त ॥ तत्कस्माद्धेतोः । विवृद्धस्य हि बोधिसत्त्वस्य परिपूर्णेन्द्रियस्याभिनिष्क्रामतो मातुर्हृदय स्फुटेत ॥

इति हि भिक्षवः सप्तमे दिवसे यादृशेनैव व्यूहेन मायादेवी कपिलवस्तुनो महानगराद्युद्यानभूमिमभिनिष्क्रान्ताभूत् । ततः कोटीशतसहस्रगुणोत्तरेण महाव्यूहेन बोधिसत्त्वः कपिलवस्तु महानगरं प्राविक्षत् ॥ तस्य च प्रविशतः पञ्च पूर्णकुम्भसहस्राणि गन्धोदकपरिपूर्णानि पुरतो नीयन्ते स्म । एवं पञ्च कन्यासहस्राणि मयूरहस्तकापरिगृहीतानि पुरतो गच्छन्ति स्म । पञ्च च कन्यासहस्राणि तालवृन्तकपरिगृहीतानि पुरतो गच्छन्ति स्म । पञ्च च कन्यासहस्राणि गन्धोदकभृङ्गारपरिगृहीतानि पुरतो गच्छन्ति स्म । मार्गमवसिञ्चन्ति स्म ॥ पञ्च च कन्यासहस्राणि विचित्रपटलकपरिगृहीतानि पुरतो गच्छन्ति स्म । पञ्च च कन्यासहस्राणि नवविचित्रप्रलम्बनमालापरिगृहीतानि पुरतो गच्छन्ति स्म । पञ्च च कन्यासहस्राणि रत्नभद्रालंकारपरिगृहीतानि पुरतो गच्छन्ति स्म । मार्गं शोधयन्ति स्म ॥ पञ्च च कन्यासहस्राणि भद्रासनपरिगृहीतानि पुरतो गच्छन्ति स्म । पञ्च च

ब्राह्मणसहस्राणि घण्टापरिगृहीतानि माङ्गल्यशब्दं श्रावयन्तः पुरतो गच्छन्ति स्म । विंशति नागसहस्राणि सर्वालंकारविभूषितानि पुरतो गच्छन्ति स्म । विंशति हयसहस्राणि सुवर्णालंकारसंछन्नानि सर्वालंकारविभूषितानि पुरतो गच्छन्ति स्म । अशीतिरथसहस्राणि उच्छ्रितछत्रध्वजपटाकाकिङ्किणीजालसमलंकृतानि बोधिसत्त्वस्य पृष्ठतोऽनुगच्छन्ति स्म । चत्वारिंशत्पदातिसहस्राणि शूराणां वीराणां वराङ्गरूपिणां संनद्धदृढवर्मकवचानां बोधिसत्त्वं गच्छन्तमनुगच्छन्ति स्म । गगणतलगतानि चाप्रमेयासंख्येयान्यभिज्ञातानि कामावचराणां रूपावचरदेवपुत्रकोटीनयुतशतसहस्राणि नानाप्रकारमनेकव्यूहैर्बोधिसत्त्वस्य पूजां कुर्वन्तो ऽनुगच्छन्ति स्म ॥ यस्मिंश्च वरप्रवररथे बोधिसत्त्वः समभिरूढो ऽभूत् स कामावचरैर्देवैरनेकैर्महाव्यूहैः समलंकृतो ऽभूत् ॥ विंशति च देवकन्यासहस्राणि सर्वालंकारविभूषितानि रत्नसूत्रपरिगृहीतानि तं रथं वहन्ति स्म । द्वयोश्चाप्सरसोर्मध्ये एका मानुषी कन्या द्वयोर्मानुषीकन्ययोर्मध्ये एकाप्सरा। न चाप्सरसो मानुषीणामामगन्धं जिघ्रन्ति स्म। न च मानुषा अप्सरसां रूपं दृष्ट्वा प्रमादमापद्यन्ते स्म । यदिदं बोधिसत्त्वस्य तेजोऽनुभावेन ॥

इति हि भिक्षवः कपिलाह्वये पुरवरे सर्वार्थसिद्धाय पञ्चमात्रैः शाक्यशतैः पञ्च गृहशतानि निर्मापितान्यभूवन् बोधिसत्त्वमुद्दिश्य। ते बोधिसत्त्वं नगरं प्रविशन्तं स्वस्वगृहद्वारमूले स्थित्वा कृताञ्जलिपुटा अभिनतकायाः सगौरवा एवमाहुः। इह भोः सर्वार्थसिद्ध प्रविश । इह भो देवातिदेव प्रविश । इह भोः शुद्धसत्त्व प्रविश । इह भोः सारथिवर प्रविश । इह भोः प्रीतिप्रामोद्यकर प्रविश । इह भो

अनिन्दितयशः प्रविश । इह भो समन्तचक्षुः प्रविश । इह भो असमसम प्रविश । इह भो असदृशगुणतेजोधर लक्षणानुव्यञ्जनस्वलंकृतकाय प्रविशेति ॥ (ततश्चोपादाय कुमारस्येह सर्वार्थसिद्धः सर्वार्थसिद्ध इति संज्ञामगमत्) ॥

तत्र राजा शुद्धोदनस्तेषां सर्वेषामनुवर्तनार्थं बोधिसत्त्वं सर्वगृहेषु प्रवेश्य चतुर्णां मासानामत्ययाद्बोधिसत्त्वं स्वगृहे प्रवेशयति स्म । तत्र च नानारत्नव्यूहो नाम महाप्रासादस्तं बोधिसत्त्वः समारूढोऽभूत् ॥ तत्र ते वृद्धवृद्धाः शाक्याः संनिपत्यैवं मतं चारयन्ति स्म । का नु खलु समर्था बोधिसत्त्वं गोपायितुं केलयितुं ममायितुं हितचित्ततया मैत्रचित्ततया गुणचित्ततया सौम्यचित्ततया चेति ॥ तत्र पञ्च मात्राणि शाक्यवधूशतान्येकैका एवमाहुः । अहं कुमारमुपस्थास्य इति ॥ तत्र महल्लकमहल्लिकाः शाक्या एवमाहुः । सर्वा एता वधूका नवा दह्रास्तरुण्यः । रूपयौवनमदमत्ता नैताः समर्था बोधिसत्त्वं कालेन कालमुपस्थापयितुं । अथ च पुनरियं महाप्रजापती गौतमी कुमारस्य मातृस्वसा । एषा समर्था कुमारं सम्यक्सुखेन संवर्धयितुं । राजानं च शुद्धोदनमभिधारयितुं ॥ इति हि ते सर्वे समग्रा भूत्वा महाप्रजापतीं गौतमीमुत्साहयन्ति स्म ॥ इति हि महाप्रजापती गौतमी कुमारं संवर्धयति स्म ॥ तत्र बोधिसत्त्वस्यार्थे द्वात्रिंशद्धात्र्यः संस्थापिता अभूवन् । अष्टावङ्कधात्र्यः । अष्टौ क्षीरधात्र्यः । अष्टौ मलधात्र्यः । अष्टौ क्रीडाधात्र्यः ॥

ततो राजा शुद्धोदनः सर्वं शाक्यगणं संनिपात्यैवं मीमांसते स्म । किं नु खल्वयं कुमारो राजा भविष्यति चक्रवर्त्याहोस्विदभिनिष्क्रमिष्यति प्रव्रज्यायै ॥

तेन च समयेन हिमवतः पर्वतराजस्य पार्श्वे असितो नाम महर्षिः प्रतिवसति स्म । पञ्चाभिज्ञः सार्धं नरदत्तेन भागिनेयेन ॥ स बोधिसत्त्वस्य जातमात्रस्य बह्वन्याश्चर्याद्भुतप्रातिहार्याण्यद्राक्षीत् । गगणतलगतांश्च देवपुत्रान् बुद्धशब्दमनुश्रावयतोऽम्बराणि च भ्रामयत इतस्ततः प्रमुदितान् भ्रमतोऽद्राक्षीत् ॥ तस्यैतदभूत् । यन्वहं व्यवलोकयेयमिति ॥ स दिव्येन चक्षुषा सर्वं जम्बुद्वीपमनुविलोकयन्नद्राक्षीत् कपिलाह्वये महापुरवरे राज्ञः शुद्धोदनस्य गृहे कुमारं जातं शतपुण्यतेजस्तेजितं सर्वलोकमहितं द्वात्रिंशन्महापुरुषलक्षणैः समलंकृतगात्रं । दृष्ट्वा च पुनर्नरदत्तं मानवकमामन्त्रयते स्म । यत् खलु मानवक जानीया जम्बुद्वीपे महारत्नमुत्पन्नं । कपिलवस्तुनि महानगरे राज्ञः शुद्धोदनस्य गृहे कुमारो जातः शतपुण्यतेजस्तेजितः सर्वलोकमहितो द्वात्रिंशन्महापुरुषलक्षणैः समन्वागतः ॥ स चेत्सोऽगारमध्यावसिष्यति राजा भविष्यति चतुरङ्गश्चक्रवर्ती विजितवान् । धार्मिको धर्मराजो जानपदस्थामवीर्यप्राप्तः सप्तरत्नसमन्वागतः । तस्येमानि सप्त रत्नानि भवन्ति । तद्यथा । चक्ररत्नं हस्तिरत्नं अश्वरत्नं मणिरत्नं स्त्रीरत्नं गृहपतिरत्नं परिणायकरत्नं । एवं सप्तरत्नसंपूर्णश्चास्य पुत्रसहस्रं भविष्यति । शूराणां वीराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानां । स इमं महापृथिवीमण्डलं समुद्रपरिखमदण्डेनाशस्त्रेण स्वेन (धर्मेण) बलेनाभिभूयाभिनिर्जित्य राज्यं करिष्यत्यैश्वर्याधिपत्येन । स चेत्पुनरगारादनगारिकां प्रव्रजिष्यति । तथागतो भविष्यति अर्हन् सम्यक्संबुद्धो नेता अनन्यनेयः शास्ता लोके संबुद्धः । तदेतर्ह्युपसंक्रमिष्यावस्तद्द्रष्टुमिति ॥

अथ खल्वसितो महर्षिः सार्धं नरदत्तेन भागिनेयेन राजहंस इव गगणतलादभ्युन्नम्य समुत्प्लुत्य येन कपिलवस्तु महानगरं तेनोपसंक्रामदुपसंक्रम्य ऋद्धिं प्रतिसंहृत्य पद्भ्यामेव कपिलवस्तु महानगरं प्रविश्य येन राज्ञः शुद्धोदनस्य निवेशनं तेनोपसंक्रामदुपसंक्रम्य राज्ञः शुद्धोदनस्य गृहद्वारेऽस्थात् ॥

इति हि भिक्षवोऽसितो महर्षिः पश्यति स्म राज्ञः शुद्धोदनस्य गृहद्वारेऽनेकानि प्राणिशतसहस्राणि संनिपतितानि ॥ अथ खल्वसितो महर्षिर्दौवारिकमुपसंक्रम्यैवमाह । गच्छ त्वं भोः पुरुष राज्ञः शुद्धोदनस्य निवेदय द्वारे ऋषिर्व्यवस्थित इति ॥ परमेति दौवारिकोऽसितस्य महर्षेः प्रतिश्रुत्य येन राजा शुद्धोदनस्तेनोपसंक्रामदुपसंक्रम्य कृताञ्जलिपुटो राजानं शुद्धोदनमेवमाह । यत् खलु देव जानीया ऋषिजीर्णो वृद्धो महल्लको द्वारे स्थितः । एवं च वदति राजानमहं द्रष्टुकाम इति ॥ अथ राजा शुद्धोदनोऽसितस्य महर्षेरासनं प्रज्ञाप्य तं पुरुषमेवमाह । प्रविशतु ऋषिरिति ॥ अथ स पुरुषो राजकुलान्निष्क्रम्यासितं महर्षिमेवमाह । प्रविशेति ॥

अथ खल्वसितो महर्षिर्येन राजा शुद्धोदनस्तेनोपसंक्रामदुपसंक्रम्य पुरतः स्थित्वा राजानं शुद्धोदनमेवमाह । जय जय महाराज चिरमायुः पालय धर्मेण राज्यं कारयेति ॥

अथ स राजा शुद्धोदनोऽसितस्य महर्षेरर्घपाद्यमर्चनं च कृत्वा साधु सुष्ठु च परिगृह्य आसनेनोपनिमन्त्रयते स्म । सुखोपविष्टं चैनं ज्ञात्वा सगौरवः सुप्रतीस एवमाह । न स्माराम्यहं तव ऋषे दर्शनं । तत्केनार्थेनेहाभ्यागतोऽसि किं प्रयोजनं ॥

एवमुक्ते ऽसितो महर्षी राजानं शुद्धोदनमेतदवोचत् । पुत्रस्ते महाराज जातस्तमहं द्रष्टुकाम इहागत इति ॥

राजा आह । स्वपिति महर्षे कुमारो मुहूर्तमागमय यावदुत्थास्यतीति ॥

ऋषिरवोचत् । न महाराज तादृशा महापुरुषाश्चिरं स्वपन्ति जागरशीलास्तादृशाः सत्पुरुषा भवन्ति ॥

इति हि भिक्षवो बोधिसत्त्वो ऽसितस्य महर्षेरनुकम्पया जागरणनिमित्तमकरोत् ॥ अथ खलु राजा शुद्धोदनः सर्वार्थसिद्धं कुमारमुभाभ्यां पाणिभ्यां साधु च सुष्ठु चानुपरिगृह्यासितस्य महर्षेरन्तिकमुपनामयति स्म ॥

इति ह्यसितो महर्षिर्बोधिसत्त्वमवलोक्य द्वात्रिंशता महापुरुषलक्षणैः समन्वागतमशीत्यनुव्यञ्जनसुविचित्रगात्रं शक्रब्रह्मलोकपालातिरेकवपुषं दिनकरशतसहस्रातिरेकतेजसं सर्वाङ्गसुन्दरं दृष्ट्वा चोदानमुदानयति स्म । आश्चर्यपुद्गलो वतायं लोके प्रादुर्भूतः (महाश्चर्यपुद्गलो वतायं लोके प्रादुर्भूतः) । इत्युत्थायासनात्कृताञ्जलिपुटो बोधिसत्त्वस्य चरणयोः प्रणिपत्य प्रदक्षिणीकृत्य च बोधिसत्त्वमङ्केन परिगृह्य निध्यायन्नवस्थितो ऽभूत् ॥ सो ऽद्राक्षीद्बोधिसत्त्वस्य द्वात्रिंशन्महापुरुषलक्षणानि यैः समन्वागतस्य पुरुषपुद्गलस्य द्वे गती भवतो नान्या । स चेदगारमध्यावसति राजा भवति । चतुरङ्गश्चक्रवर्ती पूर्ववद्यावद्दैवैश्वर्याधिपत्येन । स चेत्पुनरगारादनगारिकां प्रव्रजति तथागतो भविष्यति विघुष्टशब्दः सम्यक्संबुद्धः ॥ स तं दृष्ट्वा प्रारोदीदश्रूणि च प्रवर्तयन् गभीरं च निःश्वसति स्म ॥

अद्राक्षीद्राजा शुद्धोदनो ऽसितं महर्षिं रुदन्तमश्रूणि च
र्तयमानं गम्भीरं च निःश्वसन्तं । दृष्ट्वा च संहर्षितरोमकूपजा-
वरितं त्वरितं दीनमना असितं महर्षिमेतदवोचत् । किमिदमृषे
ऽसि अश्रूणि च प्रवर्तयसि गम्भीरं च निःश्वससि । मा खलु
ारस्य काचिद्विप्रतिपत्तिः ॥

एवमुक्ते ऽसितो महर्षी राजानं शुद्धोदनमेवमाह । नाहं
राज कुमारस्यार्थेन रोदिमि नाप्यस्य काचिद्विप्रतिपत्तिः । किं
ानमहं रोदिमि ॥ तत्कस्माद्धेतोः । अहं च महाराज जीर्णो
महल्लको ऽयं च सर्वार्थसिद्धः कुमारो ऽवश्यमनुत्तरां सम्यक्सं-
ंमभिसंभोत्स्यत्यभिसंबुध्य चानुत्तरं धर्मचक्रं प्रवर्तयिष्यति ।
र्तितं श्रमणेन वा ब्राह्मणेन वा देवेन वा मारेण वा अन्येन
पुनः केनचिल्लोके सहधर्मेण । सदेवकस्य लोकस्य हिताय
ाय धर्मं देशयिष्यति । आदौ कल्याणं मध्ये कल्याणं पर्यवसाने
ाणं स्वर्थं सुव्यञ्जनं केवलं परिपूर्णं परिशुद्धं पर्यवदातं ब्रह्मचर्यं
ानां संप्रकाशयिष्यति । अस्मात्तं धर्मं श्रुत्वा जातिधर्माणः सत्त्वा
ा परिमोक्ष्यन्ते । एवं जराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्यो-
ासेभ्यः परिमोक्ष्यन्ते । रागद्वेषमोहाग्निसंतप्तानां सत्त्वानां सद्धम-
र्षेण प्रह्लादनं करिष्यति । नानाकुदृष्टिग्रहणप्रस्कन्धानां सत्त्वानां
ग्प्रयातानामृजुमार्गेण निर्वाणपथमुपनेष्यति । संसारपञ्जरचारका-
ानां क्लेशबन्धनबद्धानां सत्त्वानां बन्धननिर्मोक्षं करिष्यति ।
ानतमस्तिमिरपटलपर्यवनद्धनयनानां सत्त्वानां प्रज्ञाचक्षुरुत्पा-
ष्यति । क्लेशशल्यविद्धानां सत्त्वानां शल्योद्धरणं करिष्यति । तद्यथा

महाराज औदुम्बरपुष्पं कदाचित्कर्हिचिल्लोके उत्पद्यते । एवमेव महाराज कदाचित्कर्हिचिद्बहुभिः कल्पकोटिनयुतैर्बुद्धा भगवन्तो लोके उत्पद्यन्ते ॥ सो ऽयं कुमारो ऽवश्यमनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते । अभिसंबुध्य च सत्त्वकोटीनियुतशतसहस्राणि संसारसागरात् पारमुत्तारयिष्यति । अमृते च प्रतिष्ठापयिष्यति ॥ वयं च तं बुद्धरत्नं न द्रक्ष्याम इत्येव तदहं महाराज रोदिमि परिदीनमना दीर्घं च निश्वसामि । यदहमिमं नारोग्ये ऽपि राधयिष्यामि ॥

यथा ह्यस्माकं महाराज मन्त्रवेदशास्त्रेष्वागच्छति । नार्हति सर्वार्थसिद्धः कुमारो ऽगारमध्यावसितुं ॥ तत्कस्य हेतोः । तथा हि महाराज सर्वार्थसिद्धः कुमारो द्वात्रिंशता महापुरुषलक्षणैः समन्वागतः ॥ कतमैर्द्वात्रिंशता । तद्यथा । उष्णीषशीर्षो महाराज सर्वार्थसिद्धः कुमारः । अनेन महाराज प्रथमेन महापुरुषलक्षणेन समन्वागतः सर्वार्थसिद्धः कुमारः । भिन्नाञ्जनमयूरकलापाभिनीलवलितप्रदक्षिणावर्तकेशः । समविपुलललाटः । ऊर्णा महाराज सर्वार्थसिद्धस्य कुमारस्य भ्रुवोर्मध्ये जाता हिमरजतप्रकाशा । गोपक्ष्मनेत्रः । अभिनीलनेत्रः । समचत्वारिंशद्दन्तः । अविरलदन्तः । शुक्लदन्तः । ब्रह्मस्वरो महाराज सर्वार्थसिद्धः कुमारः । रसरसाग्रवान् । प्रभूततनुजिह्वः । सिंहहनुः । सुसंवृत्तस्कन्धः । सप्तोत्सदः । चितान्तरांसः । सूक्ष्मसुवर्णवर्णच्छविः । स्थितो ऽनवनतप्रलम्बबाहुः । सिंहपूर्वार्धकायः । न्यग्रोधपरिमण्डलो महाराज सर्वार्थसिद्धः कुमारः । एकैकरोमा । ऊर्ध्वाग्राभिप्रदक्षिणावर्तरोमाः । कोशोपगतवस्तिगुह्यः । सुविवर्तितोरुः । एणेयमृगराजजङ्घः । दीर्घाङ्गुलिः । आयतपार्ष्णिपादः ।

उत्सङ्गपादः। मृदुतरुणहस्तपादः। जालाङ्गुलिहस्तपादः। दीर्घाङ्गुलिरधःक्रमतलयोर्महाराज सर्वार्थसिद्धस्य कुमारस्य चक्रे जाते चित्रे (अर्चिष्मती प्रभास्वरे सिते) सहस्रारे सनेमिके सनाभिके। सुप्रतिष्ठितसमपादो महाराज सर्वार्थसिद्धः कुमारः। अनेन महाराज द्वात्रिंशत्तमेन महापुरुषलक्षणेन समन्वागतः सर्वार्थसिद्धः कुमारः। न च महाराज चक्रवर्तिनामेवंविधानि लक्षणानि भवन्ति। बोधिसत्त्वानां च तादृशानि लक्षणानि भवन्ति॥

संविद्यते खलु पुनर्महाराज सर्वार्थसिद्धस्य कुमारस्य काये ऽशीत्यनुव्यञ्जनानि। यैः समन्वागतः सर्वार्थसिद्धः कुमारो नार्हत्यगारमध्यावसितुं। अवश्यमभिनिष्क्रमिष्यति प्रव्रज्यायै॥ कतमानि च महाराज तान्यशीत्यनुव्यञ्जनानि। तद्यथा। तुङ्गनखश्च महाराज सर्वार्थसिद्धः कुमारः। ताम्रनखश्च स्निग्धनखश्च वृत्ताङ्गुलिश्च अनुपूर्वचित्राङ्गुलिश्च गूढशिरश्च गूढगुल्फश्च घनसधिश्च अविषमसमपादश्च आयतपार्ष्णिश्च महाराज सर्वार्थसिद्धः कुमारः। स्निग्धपाणिलेखश्च तुल्यपाणिलेखश्च गम्भीरपाणिलेखश्च अजिह्मपाणिलेखश्च अनुपूर्वपाणिलेखश्च बिम्बोष्ठश्च नोच्चवचनशब्दश्च मृदुतरुणताम्रजिह्वश्च गजगर्जिताभिस्तनितमेघस्वरमधुरमञ्जुघोषश्च परिपूर्णव्यञ्जनश्च महाराज सर्वार्थसिद्धः कुमारः। प्रलम्बबाहुश्च शुचिगात्रवस्तुसंपन्नश्च मृदुगात्रश्च विशालगात्रश्च अदीनगात्रश्च अनुपर्वोन्नतगात्रश्च सुसमाहितगात्रश्च सुविभक्तगात्रश्च पृथुविपुलसुपरिपूर्णजानुमण्डलश्च वृत्तगात्रश्च महाराज सर्वार्थसिद्धः कुमारः। सुपरिमृष्टगात्रश्च अजिह्मवृषभगात्रश्च अनुपूर्वगात्रश्च गम्भीरनाभिश्च अजिह्मनाभिश्च अनुपूर्वनाभिश्च शुच्याचारश्च

ऋषभवत्समन्तप्रासादिकश्च परमसुविशुद्धवितिमिरालोकसमन्तप्रभश्च नागविलम्बितगतिश्च महाराज सर्वार्थसिद्धः कुमारः। सिंहविक्रान्तगतिश्च ऋषभविक्रान्तगतिश्च हंसविक्रान्तगतिश्च अभिप्रदक्षिणावर्तगतिश्च वृत्तकुक्षिश्च मृष्टकुक्षिश्च अजिह्मकुक्षिश्च चापोदरश्च व्यपगतच्छन्ददोषनीलकालकादुष्टशरीरश्च वृत्तदंष्ट्रश्च महाराज सर्वार्थसिद्धः कुमारः। तीक्ष्णदंष्ट्रश्च अनुपूर्वदंष्ट्रश्च तुङ्गनासश्च शुचिनयनश्च विमलनयनश्च प्रहसितनयनश्च आयतनयनश्च विशालनयनश्च नीलकुवलयदलसदृशनयनश्च सहितभ्रूश्च महाराज सर्वार्थसिद्धः कुमारः। चित्रभ्रूश्च असितभ्रूश्च संगतभ्रूश्च अनुपूर्वभ्रूश्च पीनगण्डश्च अविषमगण्डश्च व्यपगतगण्डदोषश्च अनुपहतक्रुष्टश्च सुविदितेन्द्रियश्च सुपरिपूर्णेन्द्रियश्च महाराज सर्वार्थसिद्धः कुमारः। संगतमुखललाटश्च परिपूर्णोत्तमाङ्गश्च असितकेशश्च सहितकेशश्च (सुसंगतकेशश्च) सुरभिकेशश्च अपरुषकेशश्च अनाकुलकेशश्च अनुपूर्वकेशश्च सुकुञ्चितकेशश्च श्रीवत्सस्वस्तिकनन्द्यावर्तवर्धमानसंस्थानकेशश्च महाराज सर्वार्थसिद्धः कुमारः। इमानि तानि महाराज सर्वार्थसिद्धस्य कुमारस्याशीत्यनुव्यञ्जनानि। यैः समन्वागतः सर्वार्थसिद्धः कुमारो नार्हत्यगारमध्यावसितुं। अवश्यमभिनिष्क्रमिष्यति प्रव्रज्यायै।

अथ खलु राजा शुद्धोदनोऽसितस्य महर्षेः सकाशात्कुमारस्येदं व्याकरणं श्रुत्वा संतुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजात उत्थायासनाद्बोधिसत्त्वस्य चरणयोः प्रणिपत्येमां गाथामभाषत।

वन्दितस्त्वं सुरैः सेन्द्रैः ऋषिभिश्चासि पूजितः।
वैद्यं सर्वस्य लोकस्य वन्दे ऽहमपि त्वां विभो॥

इति हि भिक्षवो राजा शुद्धोदनो ऽसितं महर्षिं सार्धं नरदत्तेन भागिनेयेनानुरूपेण भक्तेन सतर्पयति स्म । संतर्प्याभिछाद्य प्रदक्षिणमकरोत् ॥ अथ खल्वसितो महर्षिस्तत एवर्द्धा विहायसा प्राक्रमत् । येन स्वाश्रमस्तेनोपासंक्रामत् ॥

अथ (खलु द्वयं संक्रम्य) तत्र खल्वसितो महर्षिर्नरदत्त माणवकमेतदवोचत् । यदा त्वं नरदत्त शृणुया बुद्धो लोके उत्पन्न इति तदा त्वं गत्वा तस्य शासने प्रव्रजेः । तत्ते भविष्यति दीर्घरात्रमर्थाय हिताय सुखायेति ॥

तत्रेदमुच्यते ।

दृष्ट्वा देवगणान्नभस्तलगतान् बुद्धश्रवोद्गारिणो
देवर्षीरसितो ऽद्रिकन्दरगतः प्रीति परां प्राप्तवान् ।
बुद्धो नाम पद किमेतदिह भोः हर्षावहं प्राणिनां
प्रह्लादं मम काय एति सुखितं शान्तं च चित्तं परं ॥

किं देवो त्वसुरो ऽथवापि स भवेद् गरुडो ऽथवा किन्नरः
बुद्धो नाम किमेतदश्रुतपदं प्रीतिकरं मोदनं ।
दिव्या चक्षुष प्रेक्षते दशदिशः शैलान् महीं सागरान्
भूयः पश्यति चाद्भुतं बहुविधं भूमौ गिरौ सागरे ॥

आभेयं प्रविराजते सुरुचिरा प्रह्लादयन्ती तनुं
जाताश्चैव यथा हि शैलशिखरे स्निग्धाः प्रवाडाङ्कुराः ।
वृक्षाश्चैव यथा सुपुष्पभरिता नानाफलैर्मण्डिताः
सुव्यक्तं त्रिभवे भविष्यति लघु रत्नोद्भवः शोभनः ॥

भूमिर्भाति यथा च पाणिसदृशा सर्वा समा निर्मला
देवाश्चैव यथा प्रहृष्टमनसः खे भ्रामयन्त्यम्बरान् ।
यद्वत्सागरनागराजनिलये रत्नाः स्रवन्ते ऽद्भुताः
सुव्यक्तं जिनरत्न जम्बुनिलये धर्माकरस्योद्भवः ॥

यद्वच्छान्त अपाय दुःखविगताः सत्त्वाश्च सौख्यान्विताः
यद्वद्देवगणा नभस्तलगता गच्छन्ति हर्षान्विताः ।
यथ च स्निग्धरवं मनोज्ञ शृणुया दिव्यान संगीतिनां
रतनस्या इव प्रादुर्भावु त्रिभवे यस्या निमित्ता इमे ॥

असितः प्रेक्षति जम्बुसाह्वयमिदं दिव्येन वै चक्षुषा
सो ऽद्राक्षीत् कपिलाह्वये पुरवरे शुद्धोदनस्यालये ।
जातो लक्षणपुण्यतेजभरितो नारायणस्थामवान्
दृष्ट्वा चात्तमना उदग्रमनसः स्थामास्य संवर्धितः ॥

उद्युक्तस्त्वरितो ऽतिविस्मितमना चासौ स्वशिष्यान्वितः
आगत्वा कपिलाह्वयं पुरवरं द्वारि स्थितो भूपतेः ।
अनुबद्धा बहुप्राणिकोटिनयुता दृष्ट्वा ऋषिर्जीर्णकः
अवची सारथि राज्ञ वेदय लघुं द्वारे ऋषिः तिष्ठति ॥

श्रुत्वा चाशु प्रविश्य राजभवनं राज्ञस्तमाख्यातवान्
द्वारि देव तपस्वि तिष्ठति महान् जीर्णो ऋषिर्जर्जरः ।
सो चापी अभिनन्दते ऋषिवरः प्राविष्टु राज्ञो गृहं
आज्ञा दीयतु ताव पार्थिववरा देमि प्रवेशं तथा ॥

स्थाप्या चासनमस्य चाह नृपतिः गच्छ प्रवेशं दद
असितः सारथिवाक्य श्रुत्व मुदितः प्रीत्या सुखेनान्वितः ।

शीतं वारि यथाभिकाङ्क्षि तृषितो भुक्त्वादितो चाशनं
तद्वत्सुख्यभिनन्दितो ऋषिवरः तं द्रष्टु सत्त्वोत्तमं ॥

जय भोः पार्थिव इत्युवाच मुदितो चायुं चिरं पालय
वृद्धिं कृत्व निषण्ण दान्तमनसः शान्तेद्रियः सूरतः ।
राजा वै अभिवाद्य तं सुनिभृतं प्रोवाच किं कारणं
आगामस्तव पार्थिवेन्द्रनिलये तद्ब्रूहि शीघ्रं मुने ॥

पुत्रस्ते वररूप पारमिगतो जातो महातेजवान्
द्वात्रिंशद्वरलक्षणैः कवचितो नारायणस्थामवान् ।
तं द्रष्टुं हि ममेप्सितं नरपते सर्वार्थसिद्धं शिशुं
इत्यर्थं समुपागतोऽस्मि नृपते नास्त्यन्यकार्यं मम ॥

साधु स्वागतु याचसे किलमितः प्रीतोऽस्मि ते दर्शनात्
एषोऽसौ शयितः कुमार वरदो द्रष्टुं न शक्योऽधुना ।
साधू ताव मुहूर्तमागम इहा यद्द्रक्ष्यसे निर्मलं
चन्द्रं वा यथ पूर्णमासि विमलं तारागणैर्मण्डितं ॥

यद चासौ प्रतिबुद्ध सारथिवरः परिपूर्णचन्द्रप्रभः
तद राजा प्रतिगृह्य वह्निवपुषं सूर्यातिरेकप्रभं ।
हन्ता पश्य ऋषे नृदेवमहितं हेमाग्रबिम्बोपमं
असितो दृष्ट च तस्य तौ सुचरणौ चक्राङ्कितौ शोभनौ ॥

प्रत्युत्थाय ततः कृताञ्जलिपुटो चरणानि सो वन्दते
अङ्के गृह्य महात्मशास्त्रकुशलो निध्यायतो प्रेक्षते ।
सोऽपश्यद्वरलक्षणैः कवचितं नारायणस्थामवं
शीर्षं कम्प्य स वेदशास्त्रकुशलो द्वे तस्य पश्यद्गती ॥

राजा वा भवि चक्रवर्ति बलवान् बुद्धो व लोकोत्तमः
वाष्पं त्यक्त सुदीनकायमनसो गम्भीर निश्वस्य च ।
उद्विग्नश्च बभूव पार्थिववरः किं ब्राह्मणो रोदिती
मा विघ्नं खलु पश्यते ऽयमसितः सर्वार्थसिद्धस्य मे ॥

भूतं व्याहर किं तु रोदिषि ऋषे श्रेयो ऽथ किं पापकं
पापं नास्ति न चान्तरायमिह भोः सर्वार्थसिद्धस्य ते ।
आत्मानं बहु सोचमी नरपते जीर्णो ऽस्मि यज्जर्जरः
यद्‌यं भेष्यति बुद्ध लोकमहितो धर्मं यदा वक्ष्यते ॥

न द्रक्षे अहु लब्धप्रीतिमनसो इत्यर्थं रोदाम्यहं
यस्या कायि भवन्ति लक्षणवरा द्वात्रिंशति निर्मला ।
द्वे तस्या गतयो न अन्य तृतिया जानीष्व एवं नृप
राजा वा भवि चक्रवर्ति बलवान् बुद्धो ऽथ लोकोत्तमः ॥

नायं कामगुणेभिरर्थिकु पुनः बुद्धो अयं भेष्यति
श्रुत्वा व्याकरणं ऋषेः स नृपतिः प्रीतिं सुखं लब्धवान् ।
प्रत्युत्थाय ततः कृताञ्जलिपुटो चरणावसौ वन्दते
देवैस्त्वं त्वभिपूजितः सुबलवान् ऋषिभिश्च संवर्णितः ॥

वन्दे त्वां वरसार्थवाह त्रिभवे सर्वे जगे पूजितं
असितः प्राह च भागिनेय मुदितः संश्रूयतां भाषतो ।
बुद्धाबोधि यदा शृणोसि जगतो वर्तेति चक्रं ह्ययं
शीघ्रं प्रव्रज शासने ऽस्य मुनये तत्प्राप्स्यसे निर्वृतिं ॥

वन्दित्वा चरणौ ह्यमौ मुनिवरः कृत्वा च प्रादक्षिणं
लाभा ते नृपते सुलब्ध विपुला यस्येदृशस्ते सुतः ।

एषो लोक सदेवकं समनुजं धर्मेण तर्पेष्यति
निष्क्रामं कपिलाह्वयादृषिवरो ऽरण्ये स्थितः स्वाश्रमे ॥ इति ॥

इति हि भिक्षवो जातमात्रस्य बोधिसत्त्वस्य महेश्वरो देवपुत्रः शुद्धावासकायिकान्देवपुत्रानामन्त्र्यैवमाह । यो ऽसौ मार्षा असंख्येयकल्पकोटिनियुतशतसहस्रसुकृतकर्मदानशीलक्षान्तिवीर्यध्यानप्रज्ञोपायश्रुतचरणव्रततपःसुचरितचरणः । महामैत्रीमहाकरुणामहामुदितासमन्वागतः । उपेक्षासमुद्गतचित्तः । सर्वसत्त्वहितसुखोद्यतः । दृढवीर्यकवचसुसंनाहसंनद्धः । पूर्वजिनकृतकुशलमूलोदितः । शतपुण्यलक्षणसमलंकृतः । सुकृतनिश्चयपराक्रमः । परचक्रप्रमथनः । सुविमलशुद्धाशयसंपन्नः सुचरितचरणो महाज्ञानकेतुध्वजः । मारबलान्तकरणः । त्रिसाहस्रमहासाहस्रसार्थवाहः । देवमनुष्यपूजितमहायज्ञयष्टः । सुसमृद्धपुण्यनिचयनिस्सरणाभिप्रायो जातिजरामरणान्तकरः सुजातजातः । इक्ष्वाकुराजकुलसंभूतो जगद्विबोधयिता बोधिसत्त्वो महासत्त्वो मनुष्यलोक उपपन्नो न चिरादसावनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते । हन्त गच्छामस्तमभिवन्दितुं मानयितुं पूजयितुमभिस्तोतुमन्येषां च मानाभिभूतानां देवपुत्राणां मानमददर्पच्छेदनार्थं । ते ऽस्मानभिवन्दमानान्दृष्ट्वा ते ऽपि बोधिसत्त्वं वन्दिष्यन्ति मानयिष्यन्ति पूजयिष्यन्ति च । तत्तेषां भविष्यति दीर्घरात्रमर्थाय हिताय सुखाय यावदमृताधिगमाय । राज्ञश्च शुद्धोदनस्य जयवृद्धिरनुश्राविता भविष्यति । तत्त्वव्याकरणेन च बोधिसत्त्वं व्याकृत्य पुनरप्यागमिष्याम इति ॥

अथ खलु महेश्वरो देवपुत्रो द्वादशभिर्देवपुत्रशतसहस्रैः परिवृतः पुरस्कृतः सर्वकपिलवस्तुमहानगरमवभासेन स्फुरयित्वा येन राज्ञः शुद्धोदनस्य निवेशनं तेनोपसंक्रामदुपसंक्रम्य दौवारिके निवेद्य राज्ञाभ्यनुज्ञातो राजकुलं प्रविश्य बोधिसत्त्वस्य पादौ शिरसाभिवन्द्यैकांसमुत्तरासङ्गं कृत्वानेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य बोधिसत्त्वमङ्के समारोप्य राजानं शुद्धोदनमाश्वासयति स्म । तुष्टो महाराज भव परमप्रीतश्च ॥ तत्कस्माद्धेतोः । यथा महाराज बोधिसत्त्वस्य लक्षणैरनुव्यञ्जनैश्च कायः समलंकृतो यथा च कुमारोऽभिभवति सदेवमानुषासुरलोकं वर्णेन तेजसा च यशसा लक्ष्म्या च निःसंशयं महाराज बोधिसत्त्वोऽनुत्तरा सम्यक्संबोधिमभिसंभोत्स्यते ॥

इति हि भिक्षवो महेश्वरो देवपुत्रः सार्धं शुद्धावासकायिकैर्देवपुत्रैर्बोधिसत्त्वस्य महत्पूजोपस्थानं कृत्वा बोधिसत्त्वं तत्त्वव्याकरणेन व्याकृत्य पुनरपि स्वभवनं प्राक्रामत् ॥

तत्रेदमुच्यते ।

जातस्य तस्य गुणसागरसागरस्य
ज्ञात्वा सुरेश्वरमरुद्भवते उदग्रः ।
यस्या सुदुर्लभश्रवो बहुकल्पकोट्या
हन्तेथ तं व्रजम पूजयितुं मुनीन्द्रं ॥

परिपूर्णद्वादशसहस्र मरुद्भिशुद्धा
मणिरत्नचूडसमलंकृत ईर्यवन्तः ।
कपिलाह्वयं पुरवरं समुपेत्य शीघ्रं
द्वारि स्थिता नरपतेः सुविलम्बचूडाः ॥

ते द्वारपालमवदन् सुमनोज्ञघोषाः
प्रतिवेदयस्व नृपते भवनं प्रविश्य ।
दौवारिको वचन श्रुत्व गृहं प्रविष्टः
प्रह्वकृताञ्जलिपुटो नृपतिं बभाषे ॥

जय देव नित्यमनुपालय दीर्घमायुः
द्वारे स्थिता विपुलपुण्यविशुद्धभासः ।
मणिरत्नचूडसुविभूषित दर्यवन्तः
परिपूर्णचन्द्रवदना शशिनिर्मलाभाः ॥

छायां न तेष नृपते क्वचिदप्यपश्यन्
शब्दं न चैव चरणोत्क्षिपणे शृणोमि ।
न च मेदिनीं विचरतो रजमुत्क्षिपन्ति
तृप्तिं न यान्ति च जनाः समुदीक्षतां वै ॥

कायप्रभा सुविपुला च विभाति तेषां
वाचा मनोज्ञ यथ नास्ति ह मानुषाणां ।
गम्भीरश्लक्ष्णसुशिला च सुश्राकरा च
शङ्का हि मे सुरगणा न हि ते मनुष्याः ॥

वरपुष्पमाल्य अनुलेपनपट्टदामा
पाणी गृहीत्वन उदीक्षिषु गौरवेण ।
निस्संशयं नृपति द्रष्टु कुमारमेते
देवाधिदेव मरुतागत पूजनार्थं ॥

राजा निशाम्य वचनं परमं उदग्रो
गच्छा भणाहि प्रविशन्तु गृहं भवन्तः ।

न हि मानुषाण इयमीदृश ऋद्धि काचि
यथ भाषसे च गुण तेष यथा च ईर्या ॥

दौवारिकः कृतपुटो मरुतैवमाह
प्रविशी भवन्त अनुज्ञातु नराधिपेन ।
ते हृष्टतुष्टमनसो वरमाल्यहस्ता
गेहं प्रविष्ट नृपतेरमरालयं वा ॥

दृष्ट्वा च तां सुरवरां प्रविशन्त गेहं
प्रत्युत्थितो नृपतिरञ्जलि संप्रगृह्य ।
सविद्ययन्त इम आसन रत्नपादा
अत्रा निषीदत भवन्ननुकम्प्य बुद्ध्या ॥

ते मानदर्पविगता स्थित आसनेषु
यस्यार्थि आगत इहा नृपते शृणुष्व ।
पुत्रस्तवातिपृथुपुण्यविशुद्धकायो
जातः सुजातचरणं वय द्रष्टुकामाः ॥

अस्मो विधिज्ञ वरलक्षणलक्षणज्ञा
येषां तथा भवति या गति य प्रयोगः ।
तत्साधु पार्थिववर प्रजहस्व खेदं
पश्याम लक्षणविचित्रविभूषिताङ्गं ॥

स स्त्रीगणैः परिवृतो नृपतिः प्रहृष्टो
गृह्य कुमारमसमं ज्वलनार्चिवर्णं ।
उपनामयन् सुरवरां सुविलम्बचूडां
द्वारात्तु निष्क्रमतु कम्पित त्रिसहस्राः ॥

दृष्ट्वैव ते सुरवरा क्रम नायकस्य
ताम्रां नखां विमलपत्रविशुद्धतेजा ।
ते उत्थिता त्वरित रूपविलम्बचूडा
मूर्ध्नाभिवन्दिषु क्रमां विमलप्रभस्य ॥

यथ लक्षणा यथ च दर्शित लक्षिता च
यथ पुण्यतेजि शिरि मूर्ध विलोकितं च ।
यथ द्वर्य नेत्र विमलाप्रभ ऊर्णकोशा
निःसंशयं स्पृशति बोधि विजित्य मारं ॥

ते तं स्तुवन्ति गुणभूत यथार्थदर्शी
ध्यायी गुणां विगतक्लेशतमोनुदस्य ।
सुचिरेण सत्त्वरतनस्य हि प्रादुर्भावो
जातीजरामरणक्लेशरणं जहस्य ॥

आदीप्त सर्वत्रिभवं त्रिभिरग्नितप्तं
संकल्परागविषयारणि उत्थितेन ।
त्वं धर्ममेघ त्रिसहस्र स्फरित्व धीरा
अमृतोदकेन प्रशमेष्यसि क्लेशतापं ॥

त्वं मैत्रवाक्य करुणान्वित श्लक्ष्णवाक्य
ब्रह्मस्वरारचितघोष मनोज्ञवाणि ।
त्रिसहस्र आज्ञपरिविज्ञपनी जगस्य
क्षिप्रं प्रमुञ्च भगवन् महबुद्धघोषं ॥

भग्ना कुतीर्थिकगणा विपरीतदृष्टिः
भवरागबन्धननिमग्नस्थिता भवाग्रे ।

हेतु प्रतीत्य भव शून्य शुणित्व धर्मा
सिंहस्य कोष्टुकगणेव पलायिनास्ति ॥

भित्त्वा अविद्यपटलं महक्लेशधूमं
पर्युत्थिता जनतये नियतप्रकाशे ।
ज्ञानार्चि प्रज्ञप्रभविद्यु विलोकितेन
सर्वं जगे विधमये महदन्धकारं ॥

लाभा सुलब्ध विपुला मरुमानुषाणां
यत्रोद्भवोऽद्भुत इहेदृशि शुद्धसत्त्वे ।
पिथिता अपायपथ स्फीत मरुत्पथानि
भेष्यन्ति सत्त्वरतनेन विबोधकेन ॥

वर्षित्व दिव्यकुसुमां कपिलाह्वयेस्मिन्
कृत्वा प्रदक्षिण स्तवित्व च गौरवेण ।
बुद्ध सुबुद्ध इति वाक्यमुदीरयन्तः
प्रक्रान्त ते सुरगणा गगणे सलीलाः ॥ इति ॥

॥ इति श्रीललितविस्तरे जन्मपरिवर्तो नाम सप्तमोऽध्यायः ॥

इति हि भिक्षवो यामेव रात्रिं बोधिसत्त्वो जातस्तस्यामेव रात्र्यां विंशति कन्यासहस्राणि क्षत्रियब्राह्मणनैगमगृहपतिमहासालकुलेषु जाताः । ताश्च सर्वा मातापितृभिर्बोधिसत्त्वाय दत्ता उपस्थानपरिचर्यायै । विंशति च कन्यासहस्राणि राज्ञा शुद्धोदनेन दत्तानि बोधिसत्त्वस्योपस्थानपरिचर्यायै । विंशति च कन्यायहस्राणि मित्रामात्या-

त्मज्ञातिसालोहितैर्दत्तानि बोधिसत्त्वस्योपस्थानपरिचर्यायै । विंशति च कन्यासहस्राणि अमात्यपार्षद्यैर्दत्तानि बोधिसत्त्वस्योपस्थानपरिचर्यायै ॥

तदा च भिक्षवो महल्लकमहल्लिकाः शाक्याः संनिपत्य राजानं शुद्धोदनमुपसंक्रम्यैवमाहुः । यत्खलु देव जानीयाः । देवकुलं कुमार उपनीयतामिति ॥ राजा आह । साधूपनीयतां कुमारस्तेन हि मण्ड्यतां नगरमुपशोभ्यन्तां वीथिचत्वरशृङ्गाटकान्तरापणरथ्यामुखानि । अपनीयन्ताममङ्गल्याः काणकुब्जबधिरान्धमूकविसंस्थितविरूपरूपा अपरिपूर्णेन्द्रियाः । उपनाम्यन्तां मङ्गलानि । घुष्यन्तां पुण्यभेर्यस्ताड्यन्तां मङ्गल्यघण्टाः । समलंक्रियन्तां पुरवरद्वाराणि । वाद्यन्तां सुमनोज्ञतूर्यताडावचराणि । संनिपात्यन्तां सर्वकोट्टराजानः । एकीभवन्तु श्रेष्ठिगृहपत्यमात्यदौवारिकपारिषद्याः । युज्यन्ता कन्यारथाः । उपानाम्यन्तां पूर्णकुम्भाः । संनिपात्यन्तामधीयाना ब्राह्मणाः । अलंक्रियन्तां देवकुलानि ॥

इति हि भिक्षवो यथोक्तपूर्वं सर्वं कृतमभूत् ॥

ततो राजा शुद्धोदनः स्वगृहं प्रविश्य महाप्रजापतीं गौतमीमामन्त्र्यैवमाह । अलंक्रियतां कुमारो देवकुलमुपनेष्यत इति ॥ साध्वितिप्रतिश्रुत्य महाप्रजापती गौतमी कुमारं मण्डयति स्म ॥

ततः कुमारो मण्ड्यमानः प्रहसितवदनो व्यपगतभृकुटिकः परममधुरया वाचा मातृस्वसारमेवमाह । अम्ब कुत्राहमुपनेष्यत इति ॥ आह । देवकुलं पुत्रेति ॥ ततः कुमारः स्मितमुपदर्शयन् प्रहसितवदनो मातृस्वसारं गाथाभिरध्यभाषत ।

जातस्य मह्यमिह कम्पित त्रिसहस्रं
शक्रश्च ब्रह्म असुराश्च महोरगाश्च ।

चन्द्रश्च सूर्य तथ वैश्रवण कुमारो
मूर्ध्नाक्रमेषु निपतित्व नमस्ययन्ति ॥
कतमो ऽन्यु देव मम उत्तरियो विशिष्टो
यस्मिन्मम प्रणयसे त्वमिहाद्य अम्ब ।
देवातिदेव अहु उत्तमु सर्वदेवैः
देवो न मेऽस्ति सदृशः कुत उत्तरं वा ॥
लोकानुवर्तन प्रती इति अम्ब यास्ये
दृष्ट्वा विकुर्वित ममा जनता उदग्राः ।
अधिमात्र गौरव करिष्यति चित्रकारः
ज्ञास्यन्ति देवमनुजा स्वय देवदेवः ॥

इति हि भिक्षवः सर्वैर्वर्णैः स्तुतिमङ्गलैः प्रत्युपस्थितैरपरिमितालंकारालंकृतेषु वीथिचत्वरशृङ्गाटकान्तरापणमुखेष्वन्तःपुरे कुमारस्य रथमलंकृत्य राजा शुद्धोदनो ब्राह्मणनैगमश्रेष्ठिगृहपत्यमात्यकोट्टराजदौवारिकपारिषद्यमित्रज्ञातिपरिवृतः पुरस्कृतो धूपनधूपितेन मुक्तपुष्पाभिकीर्णेन हयगजरथपत्तिकलिलेनोच्छ्रितछत्रध्वजपटाकेन नानातूर्यसंप्रवादितेन मार्गेण कुमारं गृहीत्वा गच्छति स्म । देवताशतसहस्राणि बोधिसत्त्वस्य रथं वहन्ति स्म । अनेकानि च देवपुत्राप्सरःकोटिनियुतशतसहस्राणि गगणतलगतानि पुष्पवर्षाण्यभिप्रवर्षन्ति स्म । तूर्याणि च प्रवादयन्ति स्म ॥ इति हि राजा शुद्धोदनो महता राजव्यूहेन महता राजर्द्ध्या महता राजानुभावेन कुमारं गृहीत्वा देवकुलं प्रविशति स्म ॥ समनन्तरप्रतिष्ठापितस्य बोधिसत्त्वेन दक्षिणचरणयोः क्रमतलस्तस्मिन् देवकुले ऽथ ता अचे-

तन्यो देवप्रतिमाः । तद्यथा । शिवस्कन्दनारायणकुवेरचन्द्रसूर्यवैश्रवणशक्रब्रह्मलोकपालप्रभृतयः प्रतिमाः । सर्वा स्वेभ्यः स्वेभ्यः स्थानेभ्यो व्युत्थाय बोधिसत्त्वस्य क्रमतलयोर्निपतन्ति स्म ॥ तत्र देवमनुष्यशतसहस्राणि हीहीकारकिलकिलाप्रमुखैः प्रक्ष्वेडितशतसहस्राणि प्रामुञ्चंश्चैलविक्षेपाणि चाकार्षुः । सर्वं च कपिलवस्तुमहानगरं षड्विकारं प्राकम्पितं । दिव्यानि च कुसुमानि प्रावर्षन् । तूर्यशतसहस्राणि चाघट्टितानि प्रणेदुः ॥ येषां च देवानां ताः प्रतिमास्ते सर्वे स्वस्वरूपमुपदर्श्येमा गाथा अभाषत ।

नो मेरु गिरिराज पर्वतवरो जातू नमे सर्षपे
नो वा सागर नागराजनिलयो जातू नमे गोष्पदे ।
चन्द्रादित्य प्रभंकरा प्रभकरा खद्योतके नो नमे
प्रज्ञापुण्यकुलोदितो गुणधरः कस्मान्नमे देवते ॥

यद्वत् सर्षप गोष्पदे व सलिलं खद्योतका वा भवेत्
एवं च त्रिसहस्रदेवमनुजा ये केचि मानाश्रिताः ।
मेरुसागरचन्द्रसूर्यसदृशो लोके स्वयंभूत्तमो
यं लोको ह्यभिवन्द्य लाभ लभते स्वर्गं तथा निर्वृतिं ॥

अस्मिन्खलु पुनर्भिक्षवो बोधिसत्त्वेन महासत्त्वेन देवकुले प्रवेशे संदर्श्यमाने द्वात्रिंशतां देवपुत्रशतसहस्राणामनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पद्यन्ते ॥ अयं भिक्षवो हेतुरयं प्रत्ययो येनोपेक्षको बोधिसत्त्वो भवति स्म । देवकुलमुपनीयमान इति ॥

॥ इति श्रीललितविस्तरे देवकुलोपनयनपरिवर्तो नाम अष्टमोऽध्यायः ॥

अथ खलु भिक्षव उदयनो नाम ब्राह्मणो राज्ञः पुरोहित उदायिनः पिता स पञ्चमात्रैर्ब्राह्मणशतैः परिवृतो हस्तोत्तरे चित्रानक्षत्रे राजानं शुद्धोदनमुपसंक्रम्यैवमाह। यत्खलु देवो जानीयादाभरणानि कुमाराय क्रियन्तामिति॥ तं राजा आह। बाढं गाढं क्रियतामिति॥

तत्र राज्ञा शुद्धोदनेन पञ्चमात्रैश्च शाक्यशतैः पञ्चमात्राण्याभरणशतानि कारितान्यभूवन्। तद्यथा। हस्ताभरणानि पादाभरणानि मूर्धाभरणानि कण्ठाभरणानि मुद्रिकाभरणानि कर्णिकायाकेयूराणि मेखलासुवर्णसूत्राणि किङ्किनीजालानि रत्नजालानि मणिप्रत्युप्तानि पादुका नानारत्नसमलंकृता हाराः कटका हर्षा मुकुटानि। कारयित्वा च पुष्यनक्षत्रयोगेनानुयुक्तेन ते शाक्या राजानं शुद्धोदनमुपसंक्रम्यैवमाहुः। हन्त देव मण्ड्यतां कुमार इति॥ राजा आह। अलमलंकृतश्च पूजितश्च भवद्भिः कुमारः। मयापि (कुमारस्य) सर्वाभरणानि कारितानि॥ ते ऽवोचन्। सप्तसप्तरात्रिन्दिवान्यप्यस्माकमाभरणानि कुमारः काय आबध्नातु। ततो ऽस्माकममोघो व्यायामो भविष्यतीति॥

तत्र रात्रौ विनिर्गतायामादित्य उदिते विमलव्यूहनामोद्यानं तत्र बोधिसत्त्वो निर्गतो ऽभूत्। तत्र महाप्रजापत्या गौतम्या बोधिसत्त्वो ऽङ्के गृहीतो ऽभूत्॥ अशीतिश्च स्त्रीसहस्राणि प्रत्युद्गम्य बोधिसत्त्वस्य वदनं प्रेक्षन्ते स्म। दश च कन्यासहस्राणि प्रत्युद्गम्य बोधिसत्त्वस्य वदनं प्रेक्षन्ते स्म। पञ्च च ब्राह्मणसहस्राणि प्रत्युद्गम्य

बोधिसत्त्वस्य वदनं प्रेक्षन्ते स्म ॥ तत्र यानि भद्रिकेण शाक्यराजेनाभरणानि कारितान्यभूवन्। तानि बोधिसत्त्वस्य काये आबध्यन्ते स्म। तानि समनन्तराबद्धानि बोधिसत्त्वस्य कायप्रभया जिह्मीकृतान्यभूवन्। न भासन्ते स्म। न तपन्ति स्म। न विरोचन्ते स्म। तद्यथापि नाम जाम्बूनदस्य सुवर्णस्य पुरतो मसिपिण्ड उपनिक्षिप्तो न भासति न तपति न विरोचते। एवमेव तान्याभरणानि बोधिसत्त्वस्य कायप्रभया पृष्टानि न भासन्ते न तपन्ति न विरोचन्ते स्म ॥ एवं या याभरणविकृतिर्बोधिसत्त्वस्य काये आबध्यते स्म। सा सा जिह्मीभवति स्म। तद्यथापि नाम मसिपिण्डः ॥

तत्र विमला नामोद्यानदेवता सा औदारिकमात्मभावमभिसंदर्श्य पुरतः स्थित्वा राजानं शुद्धोदनं तंश्च महान्तं शाक्यगणं गाथाभिरभिभाषते स्म।

सर्वेयं त्रिसहस्रमेदिनी सनगरनिगमा
पूर्णा काञ्चनसंचिता भवेत् सुरुचिर विमला।
एका काकिनि जाम्बुकाञ्चने भवति उपहता
ना भासी इतरः स काञ्चन प्रभसिरिरहितः ॥

जाम्बूकाञ्चनसंनिभा पुनर्भवेत् सकर इय मही
रोमे आभ प्रमुक्त नायके हिरिसिरि भरिते।
ना भासी न तपी न सोभते न च प्रभवति
आभाये सुगतस्य कायि नो भवति यथ मसिः ॥

स्वे तेजेन अयं स्वलंकृतो गुणशतभरितो
नो तस्याभरणा विरोचिषू सुविमलवपुषः।

चन्द्रसूर्यप्रभश्च ज्योतिषा तथ मणिज्वलना:
शक्रब्रह्मप्रभा न भासते पुरत श्रिरिघने ॥
यस्या लक्षणि कायु चिचितः पुरिमशुभफलैः
किं तस्या भरणेभिरित्वरैः परकृतकरणैः ।
अपनेथा भरणा म हेठता अबुध बुधकरं
नायं कृत्तिमभूषणार्थिक परममतिकरः ॥
चेटस्याभरणानि देथिमे सुरुचिर विमला
सहजातो य सुभूषि छन्दको नृपतिकुलशुभे ।
तुष्टा शाकिय विस्मिताश्च अभवन्प्रमुदितमनसो
वृद्धिः शाक्यकुलनन्दस्य चोत्तमा भविष्यति विपुला ॥

इत्युक्त्वा सा देवता बोधिसत्त्वं दिव्यैः पुष्पैरभ्यवकीर्य तत्रैवान्तरधात् ॥

॥ इति श्रीललितविस्तरे आभरणपरिवर्तो नाम नवमोऽध्यायः ॥

इति हि भिक्षवः संवृद्धः कुमारः । तदा माङ्गल्यशतसहस्रैः लिपिशालामुपनीयते स्म । दशभिर्दारकसहस्रैः परिवृतः पुरस्कृतः । दशभिश्च रथसहस्रैः खादनीयभोजनीयस्वादनीयपरिपूर्णैर्हिरण्यसुवर्णपरिपूर्णैश्च । येन कपिलवस्तुनि महानगरे वीथिचत्वररथ्यान्तरापणमुखेष्वभ्यवकीर्यते स्म अभिविश्राम्यन्ते । अष्टाभिश्च तूर्यशतसहस्रैः प्रघुष्यमाणैर्महता च पुष्पवर्षेणाभिप्रवर्षता वितर्दिनिर्यूहतोरणगवा-

क्षहर्म्यकूटागारप्रासादतलेषु कन्याशतसहस्राणि सर्वालंकारभूषिताः स्थिता अभूवन् । बोधिसत्त्वं प्रेक्षमाणाः कुसुमानि च क्षिपन्ति स्म । अष्टौ च मरुत्कन्यासहस्राणि विगलितालंकाराभरणालंकृतानि रत्नभद्रं करेण गृहीतानि मार्गं शोधयन्त्यो बोधिसत्त्वस्य पुरतो गच्छन्ति स्म । देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगाश्चार्धकायिका गगणतला-त्पुष्पपट्टदामान्यभिप्रलम्बयन्ति स्म । सर्वे च शाक्यगणाः शुद्धोदनं राजानं पुरस्कृत्य बोधिसत्त्वस्य पुरतो गच्छन्ति स्म । अनेनैवंरूपेण व्यूहेन बोधिसत्त्वो लिपिशालामुपनीयते स्म ॥

समनन्तरप्रवेशितस्य बोधिसत्त्वो लिपिशालां । अथ विश्वामित्रो नाम दारकाचार्यो बोधिसत्त्वस्य श्रियं तेजश्चासहमानो धरणितले निविष्टोऽधोमुखः प्रपतति स्म ॥ तं तथा प्रपतितं दृष्ट्वा शुभाङ्गो नाम तुषितकायिको देवपुत्रो दक्षिणेन करतलेन परिगृह्योत्थापयति स्म । उत्थाप्य च गगणतलस्थो राजान शुद्धोदनं त च महान्तं जनकायं गाथाभिरध्यभाषत् ।

शास्त्राणि यानि प्रचरन्ति मनुष्यलोके
संख्या लिपिश्च गणनापि च धातुतन्त्रं ।
ये शिल्पयोग पृथु लौकिक अप्रमेयाः
तेष्विषु शिक्षितु पुरा बहुकल्पकोट्यः ॥

किं तू जनस्य अनुवर्तनतां करोति
लिपिशालमागतु सुशिक्षितु शिष्यणार्थं ।
परिपाचनार्थं बहुदारक अग्रयाने
अन्यांश्च सत्त्वनयुतानमृते विनेतुं ॥

लोकोत्तरेषु चतुसत्यपथे विधिज्ञो
हेतुप्रतीत्यकुशलो यथ संभवन्ति ।
यथ चानिरोधक्षयु संस्थितु सीतिभावः
तस्मिन्विधिज्ञ किमथो लिपिशास्त्रमाचे ॥

नेतस्य आचरिय उत्तरि वा त्रिलोके
सर्वेषु देवमनुजेष्वयमेव जेष्ठः ।
नामापि तेष लिपिनां न हि वित्थ यूयं
यत्रेष शिक्षितु पुरा बहुकल्पकोट्यः ॥

सो चित्तधार जगतां विविधा विचित्रा
एकक्षणेन अयु जानति शुद्धसत्त्वः ।
अदृश्यरूपरहितस्य गतिं च वेत्ति
किं वा पुनो ऽथ लिपिनो ऽक्षरदृश्यरूपां ॥

इत्युक्त्वा स देवपुत्रो बोधिसत्त्वं दिव्यैः कुसुमैरभ्यर्च्य तत्रैवान्तर्दधे ॥

तत्र धात्र्यश्च चेटीवर्गाश्च स्थापिता अभूवन् । परिशेषाः शाक्याः शुद्धोदनप्रमुखाः प्रक्रामन्तः ॥

अथ बोधिसत्त्व उरगसारचन्दनमयं लिपिफलकमादाय दिव्यार्षसुवर्णतिरकं समन्तान्मणिरत्नप्रत्युप्तं विश्वामित्रमाचार्यमेवमाह । कतमां मे भो उपाध्याय लिपिं शिक्षापयसि । ब्राह्मीखरोष्टीपुष्करसारिं । अङ्गलिपिं वङ्गलिपिं मगधलिपिं मङ्गल्यलिपिं अङ्गुलीयलिपिं सकारिलिपिं ब्रह्मवलिलिपिं पारुष्यलिपिं द्राविडलिपिं किरातलिपिं दाक्षिण्यलिपिं उग्रलिपिं संख्यालिपिं अनुलोमलिपिं अवमूर्धलिपिं

दरदलिपिं खाष्यलिपिं चीनलिपिं लूनलिपिं हूनलिपिं मध्याक्षरविस्तरलिपिं पुष्पलिपिं देवलिपिं नागलिपिं यक्षलिपिं गन्धर्वलिपिं किन्नरलिपिं महोरगलिपिं असुरलिपिं गरुडलिपि मृगचक्रलिपिं वायसरुतलिपिं भौमदेवलिपिं अन्तरीक्षदेवलिपिं उत्तरकुरुद्वीपलिपिं अपरगोडानीलिपिं पूर्वविदेहलिपि उत्क्षेपलिपिं निक्षेपलिपिं विक्षेपलिपिं प्रक्षेपलिपिं सागरलिपिं वज्रलिपिं लेखप्रतिलेखलिपिं अनुद्रुतलिपिं शास्त्रावर्ता गणनावर्तलिपिं उत्क्षेपावर्तलिपिं (निक्षेपावर्तलिपिं) पादलिखितलिपिं द्विरुत्तरपदसंधिलिपिं यावद्दशोत्तरपदसंधिलिपिं मध्याहारिणीलिपिं सर्वरुतसंग्रहणीलिपिं विद्यानुलोमाविमिश्रितलिपिं ऋषितपस्तप्तां रोचमानां धरणीप्रेक्षिणीलिपिं गगणप्रेक्षिणीलिपिं सर्वौषधिनिष्यन्दां सर्वसारसंग्रहणीं सर्वभूतरुतग्रहणीं । आसां भो उपाध्याय चतुष्षष्टीलिपीनां कतमां त्वं शिष्यापयिष्यसि ॥

अथ विश्वामित्रो दारकाचार्यो विस्मितः प्रहसितवदनो निहतमानमददर्प इमां गाथामभाषत ।

आश्चर्यं शुद्धसत्त्वस्य लोके लोकानुवर्तिनो ।
शिक्षितः सर्वशास्त्रेषु लिपिशालामुपागतः ॥
येषामहं नामधेयं लिपीनां न प्रजानमि ।
तत्रैष शिक्षितसन्तो लिपिशालामुपागतः ॥
वक्त्रं चास्य न पश्यामि मूर्धानं तस्य नैव च ।
शिष्ययिष्ये कथं ह्येनं लिपिप्रज्ञाय पारगं ॥
देवदेवो ह्यतिदेवः सर्वदेवोत्तमो विभुः ।
असमश्च विशिष्टश्च लोकेष्वप्रतिपुद्गलः ॥

अस्यैव त्वनुभावेन प्रज्ञोपाये विशेषतः ।
शिक्षितं शिष्ययिष्यामि सर्वलोकपरायणं ॥

इति हि भिक्षवो दश दारकसहस्राणि बोधिसत्त्वेन सार्धं लिपिं शिष्यन्ते स्म ॥ तत्र बोधिसत्त्वाधिष्ठानेन तेषां दारकाणां मातृकां वाचयतां । यदा अकारं परिकीर्तयन्ति स्म । तदा अनित्यः सर्वसंस्कारशब्दो निश्चरति स्म । आकारे परिकीर्त्यमाने आत्मपरहितशब्दो निश्चरति स्म । इकारे इन्द्रियवैकल्यशब्दः । ईकारे ईतिबहुलं जगदिति । उकारे उपद्रवबहुलं जगदिति । ऊकारे ऊनसत्त्वं जगदिति । एकारे एषणासमुत्थानदोषशब्दः । ऐकार ऐर्यापथश्रेयानिति । ओकारे ओघोत्तरशब्दः । औकारे औपपादुकशब्दः । अंकारे अमोघोत्पत्तिशब्दः । अःकारे अस्तंगमनशब्दो निश्चरति स्म ॥ ककारे कर्मविपाकावतारशब्दः । खकारे खसमसर्वधर्मशब्दः । गकारे गम्भीरधर्मप्रतीत्यसमुत्पादावतारशब्दः । घकारे घनपटलाविद्यामोहान्धकारविधमनशब्दः । ङकारे ऽङ्गविशुद्धिशब्दः । चकारे चतुरार्यसत्यशब्दः । छकारे छन्दरागप्रहाणशब्दः । जकारे जरामरणसमतिक्रमणशब्दः । झकारे झषध्वजबलनिग्रहणशब्दः । ञकारे ज्ञापनशब्दः । टकारे पटोपच्छेदनशब्दः । ठकारे ठपनीयप्रश्नशब्दः । डकारे डमरमारनिग्रहणशब्दः । ढकारे मीढविषया इति । णकारे रेणुक्लेशा इति । तकारे तथतासंभेदशब्दः । थकारे थामबलवेगवैशारद्यशब्दः । दकारे दानदमसंयमसौरभ्यशब्दः । धकारे धनमार्याणां सप्तविधमिति । नकारे नामरूपपरिज्ञाशब्दः । पकारे परमार्थशब्दः । फकारे फलप्राप्तिसाक्षात्क्रियाशब्दः । बकारे बन्धनमोक्षशब्दः ।

भकारे भवविभवशब्दः । मकारे मदमानोपशमनशब्दः । यकारे यथावद्धर्मप्रतिवेधशब्दः । रकारे रत्यरतिपरमार्थरतिशब्दः । लकारे लताछेदनशब्दः । वकारे वरयानशब्दः । शकारे शमथविपश्यनाशब्दः । षकारे षडायतननिग्रहणाभिज्ञज्ञानावाप्तिशब्दः । सकारे सर्वज्ञज्ञानाभिसंबोधनशब्दः । हकारे हतक्लेशविरागशब्दः । क्षकारे परिकीर्त्यमाने क्षणपर्यन्ताभिलाप्य सर्वधर्मशब्दो निश्चरति स्म ॥

इति हि भिक्षवस्तेषां दारकाणां मातृकां वाचयतां बोधिसत्त्वानुभावेनैव प्रमुखान्यसंख्येयानि धर्ममुखशतसहस्राणि निश्चरन्ति स्म ॥

तदानुपूर्वेण बोधिसत्त्वेन लिपिशालास्थितेन द्वात्रिंशद्दारकसहस्राणि परिपाचितान्यभूवन् । अनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पादितानि द्वात्रिंशद्दारिकासहस्राणि ॥ अयं हेतुरयं प्रत्ययो यच्छिक्षितोऽपि बोधिसत्त्वो लिपिशालामुपागच्छति स्म ॥

इति श्रीललितविस्तरे लिपिशालासंदर्शनपरिवर्तो नाम दशमो ऽध्यायः ॥

इति हि भिक्षवो यावद्विवृद्धः कुमारः । अथापरेण समयेन कुमारस्तदन्यैः कुमारैरमात्यपुत्रैः सार्धं कृषिग्राममवलोकयितुं गच्छति स्म । अवलोक्य च कृषिकर्मान्तमन्यत उद्यानभूमिं प्रविशति स्म ॥ संविग्नमनास्तत्र बोधिसत्त्व एकाकी अद्वितीयोऽनुचङ्क्रम्यमाणोऽनुविचरन् जम्बुवृक्षमपश्यत् प्रासादिकं दर्शनीयं । तत्र बोधिसत्त्वश्छायायां पर्यङ्केन निषीदति स्म । निषण्णश्च बोधिसत्त्वश्चित्तैकाग्रतामासादयति

स्म । आसाद्य च विविक्तं कामैर्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसंपद्य विहरति स्म ॥

स वितर्कविचाराणां व्युपसमाद्ध्यात्मसंप्रसादाच्चेतस एकोतिभावादवितर्कमविचारं समाधितं प्रीतिसुखं द्वितीयं ध्यानमुपसंपद्य विहरति स्म ॥

स प्रीतेर्विरागादुपेक्षको विहरति स्म । स्मृतिमान् संप्रजानन् सुखं च कायेन प्रतिसंवेदयति स्म ॥ यत्तदार्या आचक्षते उपेक्षकः स्मृतिमान्सुखविहारी निष्प्रीतिक तृतीयं ध्यानमुपसंपद्य विहरति स्म ॥

स सुखस्य च प्रहाणाद्दुःखस्य च प्रहाणात् पूर्वमेव च सौमनस्यदौर्मनस्ययोरस्तंगमाददुःखासुखमुपेक्षास्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसंपद्य विहरति स्म ॥

तेन च समयेन पञ्च ऋषयो बाह्याः पञ्चाभिज्ञाः ऋद्धिमन्तो विहायसंगमा दक्षिणाया दिश उत्तरां दिशं गच्छन्ति स्म । ते तस्य वनखण्डस्योपरि गच्छन्तः प्रत्याहता इव न शक्नुवन्ति स्म गन्तुं । ते संविग्नरोमकूपजाता इमां गाथामभाषन्त ।

वयमिह मणिवज्रकूटं गिरिं मेरुमभ्युन्नतं तिर्यगत्यर्थविस्तारिकं
गज इव सहकारशाखाकुलां वृक्षवृन्दां प्रदारित्व निर्धावितानिकशः ।
वयमिह मरुणां पुरिं चाप्यसक्ता गता यक्षगन्धर्ववेश्मानि चोर्ध्वं नभे निश्रिता
इम पुन वनखण्डमासाद्य सीदाम भोः कस्य लक्ष्मी निवर्तेति ऋद्धेर्बलं ॥ इति ॥

अथ या तत्र वनखण्डदेवता सा तानृषीन् गाथयाध्यभाषत् ।

नृपतिपतिकुलोदितः शाक्यराजात्मजो बालसूर्यप्रकाशप्रभः
स्फुटितकमलगर्भवर्णप्रभश्चारुचन्द्राननो लोकजेष्ठो विदुः ।
अयमिह वनमाश्रितो ध्यानचिन्तापरो देवगन्धर्वनागेन्द्रयक्षार्चितो
भवशतगुणकोटिसंवर्धितस्तस्य लक्ष्मी निवर्तेति ऋद्धिर्बलं ॥ इति ॥

ततस्ते ऽधस्तादवलोकयन्तो ऽद्राक्षुः कुमार श्रिया तेजसा च जाज्वल्यमानं ॥ तेषामेतदभूत् । को न्वयं निषण्णो मा हैव वैश्रवणो धनाधिपतिर्भवेत् । आहो स्विन्मारः कामाधिपतिः । अथ महोरगेन्द्रः । अथेन्द्रो वज्रधरः । अथ रुद्रः कुम्भाण्डाधिपतिः । अथ कृष्णो महोत्साहः । उत चन्द्रो देवपुत्रः । उत सूर्यः सहस्ररश्मिः । उत राजा चक्रवर्ती भविष्यति ॥ तस्यां च वेलायामिमां गाथामभाषन्त ।

रूपं वैश्रवणातिरेकवपुषं व्यक्तं कुबेलो ह्ययं
आहो वज्रधरस्य चैव प्रतिमा चन्द्रो ऽथ सूर्यो ह्ययं ।
कामाग्राधिपतिश्च वा प्रतिकृती रुद्रस्य कृष्णस्य वा
श्रीमान् लक्षणचिचिताङ्गमनघो बुद्धो ऽथ वा स्यादयं ॥ इति ॥

ततः सा वनदेवता तानृषीन् गाथया प्रत्यभाषत् ।

या श्री वैश्रवणे च वै निवसते या वा सहस्रेक्षणे
लोकानां परिपालकेषु चतुषू या चासुरेन्द्रश्रिया ।
ब्रह्मे या च सहापतौ निवसते कृष्णे च या च श्रिया
सा श्री प्राप्य इमं हि शाक्यतनयं नोपैति कांचित्कलां ॥

अथ खलु ते ऋषयस्तस्या देवताया वचनमुपश्रुत्य धरणीतले प्रतिष्ठन्ते । ते पश्यन्ति स्म बोधिसत्त्वं ध्यायन्तमनिञ्ज्यमानेन कायेन तेजोराशिमिव ज्वलन्तं ॥ ते बोधिसत्त्वमुपनिध्याय गाथाभिरभितुष्टुवुः ॥ तत्रैक आह ।

लोके क्लेशाग्निसंतप्ते प्रादुर्भूतो ह्ययं ह्रदः ।
अयं तं प्राप्स्यते धर्मं यज्जगद् ह्लादयिष्यति ॥

अपरो ऽप्याह ।

अज्ञानतिमिरे लोके प्रादुर्भूतः प्रदीपकः ।
अयं तं प्राप्स्यते धर्मं यज्जगद्भासयिष्यति ॥

अपरो ऽप्याह ।

शोकसागरकान्तारे यानश्रेष्ठमुपस्थितं ।
अयं तं प्राप्स्यते धर्मं यज्जगत्तारयिष्यति ॥

अपरो ऽप्याह ।

क्लेशबन्धनबद्धानां प्रादुर्भूतः प्रमोचकः ।
अयं तं प्राप्स्यते धर्मं यज्जगन्मोचयिष्यति ॥

अपरो ऽप्याह ।

जराव्याधिक्लिष्टानां प्रादुर्भूतो भिषग्वरः ।
अयं तं प्राप्स्यते धर्मं जातिमृत्युप्रमोचकं ॥

अथ खलु ते ऋषयो बोधिसत्त्वमाभिर्गाथाभिरभिस्तुत्वा त्रिप्रदक्षिणीकृत्य विहायसा प्रक्रान्ताः ॥ राजापि शुद्धोदनो बोधिसत्त्वमपश्यन् बोधिसत्त्वेन विना न रमते स्म ॥ सो ऽवोचत् । कुमारः क्व गतो नैनं पश्यामीति ॥ तत्र महाजनकायो निर्धावितो ऽभूत्

कुमारं परिगवेषमाणः । ततो ऽन्यतम आमात्यो बोधिसत्त्वं पश्यति स्म जम्बुच्छायायां पर्यङ्कनिषण्णं ध्यायन्तं । सर्ववृक्षाणां च तस्मिन् समये छाया परिवृत्ताभूत् । जम्बुच्छाया च बोधिसत्त्वस्य कायं न विजहाति स्म ॥ स त दृष्ट्वा आश्चर्यप्राप्तस्तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातः शीघ्रं शीघ्र त्वरमाणरूपो राजानं शुद्धोदनमुपसंक्रम्य गाथाभ्यामध्यभाषत ।

पश्य देव कुमारो ऽयं जम्बुच्छायाहि ध्यायति ।
यथा शक्रो ऽथवा ब्रह्मा श्रिया तेजेन शोभते ॥
यस्य वृक्षस्य छायायां निषण्णो वरलक्षणः ।
सैनं न जहति छाया ध्यायन्तं पुरुषोत्तमं ॥

अथ राजा शुद्धोदनो येन स जम्बुवृक्षस्तेनोपसंक्रामत् । सो ऽद्राक्षीद्बोधिसत्त्वं श्रिया तेजसा च ज्वलन्तं दृष्ट्वा चेमा गाथामभाषत् ।

हुतासनो वा गिरिमूर्ध्नि संस्थितः शशीव नक्षत्रगणानुचीर्णः ।
वेपन्ति गात्राणि मि पश्यतो इमं ध्यायन्तु तेजो नु प्रदीपकल्पं ॥

स बोधसत्त्वस्य पादावभिवन्द्येमां गाथामभाषत् ।

यदा चासि मुने जातो यदा ध्यायसि चार्चिमन् ।
एकद्विरपि ते नाथ पादौ वन्दे विनायक ॥

तत्र त्रिफलवाहका दारकाः शब्दं कुर्वन्ति स्म । तानमात्या एवमाहुः । मा शब्दं मा शब्दं कार्ष्टेति ॥ ते ऽवोचन् । किमेतदिति ॥ अमात्या आहुः ।

व्यावृत्ते तिमिरनुदस्य मण्डले ऽपि व्योमाभं शुभवरलक्षणाग्रधारिं ।
ध्यायन्तं गिरिनिचलं नरेन्द्रपुत्रं सिद्धार्थं न जहति सैव वृक्षछाया ॥

तत्रेदमुच्यते ।

ग्रीष्मे वसन्त समुदागत जेष्ठमासे
संपुष्पिते कुसुमपल्लवसंप्रकीर्णे ।
क्रौञ्चामयूरशुकसारिकसंप्रघुष्टे
भूयिष्ठसाकियसुता अभिनिष्क्रमन्ति ॥

छन्दो ऽभ्युवाच परिवारितु दारिकेभिः
हन्ता कुमार वनि गच्छम लोचनार्थं ।
किं ते गृहे निवसतो हि यथा द्विजस्य
हन्त व्रजाम वय चोदननारिसंघं ॥

मध्याह्नकालसमये सुविशुद्धसत्त्वः
पञ्चाशतैः परिवृतैः सह चेटकेभिः ।
न च मातु नैव च पितु प्रतिवेदयित्वा
सो ऽबुद्ध निष्क्रमिति गच्छि कृषाणग्रामं ॥

तस्मिंश्च पार्थिववरस्य कृषाणग्रामे
जम्बुद्रुमो ऽभवदनेकविशालशाखः ।
दृष्ट्वा कुमार प्रतिबुद्धदुःखेन चोक्तो
धिक्संस्कृतेति बहुदुःख कृषी करोति ॥

सो जम्बुछायमुपगम्य विनीतचित्तो
तृणकानि गृह्य स्वय संस्तर संस्तरित्वा ।
पर्यङ्कमाभुजिय उज्जु करित्व कायं
चत्वारि ध्यान शुभ ध्यायि स बोधिसत्त्वः ॥

पञ्चा ऋषि खगपथेन हि गच्छमाना
जम्बूयमूर्ध्नि न प्रभोन्ति पराक्रमेतुं ।
ते विस्मिता निहतमानमदाश्च भूत्वा
सर्वे समग्रसहिता समुदीचयन्तो ॥

वय मेरु पर्वतवरं तथ चक्रवाडान्
निर्भिद्य गच्छम जवेन असज्जमानाः ।
ते जम्बुवृक्ष न प्रभोम अतिक्रमेतुं
को न्वत्र हेतुरयमद्य भविष्यतीह ॥

अवतीर्य मेदिनितले च प्रतिष्ठिहित्वा
पश्यन्ति शाक्यतनयं तहि जम्बुमूले ।
जम्बूनदार्चिसदृशं प्रभतेजरश्मिं
पर्यङ्कबन्धु तद ध्यायतु बोधिसत्त्वं ॥

ते विस्मिता दशनखा करियान मूर्ध्नि
प्रणता कृताञ्जलिपुटा निपतन् क्रमेषु ।
साधो सुजात सुमुखं करुणा जगस्य
शीघ्रं विबुद्ध अमृते विनयस्व सत्त्वान् ॥

परिवृत्त सूर्य न जही सुगतस्य छाया
ओलम्बते द्रुमवरं यथ पद्मपत्रं ।
देवा सहस्र बहवः स्थित अञ्जलीभिः
वन्दन्ति तस्य चरणौ कृतनिश्चयस्य ॥

शुद्धोदनश्च स्वगृहे परिमार्गमानः
संपृच्छते क्व नु गतः स हि मे कुमारः ।

मातृस्वसा अवचि मार्गत नो लभामि
संपृच्छता नरपते क्व गतः कुमारः ॥
शुद्धोदनस्त्वरितु पृच्छति काञ्चुकीयं
दौवारिकं तथपि चान्तजनं समन्तात् ।
दृष्टं कुमार मम केनचि निष्क्रमन्तो
शृणुते वरूपगतु देव कृषाणग्रामं ॥
सो शीघ्रमेव त्वरितं सह शाकियेभिः
निष्क्रान्तु प्रेक्षि कृषिग्रामगिरिं प्रविष्टं ।
यथ सूर्यकोटिनियुतानि समुद्गतानि
तथ प्रेक्षते हितकरं शिरिया ज्वलन्तं ॥
मुकुटं च खड्ग तथ पादुक छोरयित्वा
कृत्वा दशाङ्गुलि शिरे अभिवन्दिते तं ।
साधू सुभूतवचना ऋषयो महात्मा
व्यक्तं कुमार अभिनिष्क्रमि बोधिहेतोः ॥
परिपूर्णद्वादशशता सुप्रसन्नदेवाः
पञ्चाशता उपगता यथ शाकियानां ।
दृष्ट्वा च ऋद्धि सुगते गुणसागरस्य
संबोधिचित्तु जनयं दृढआशयेन ॥
सो कम्पयित्व त्रिसहस्र अशेषभूमिं
स्मृतु संप्रजानु प्रतिबुद्ध ततः समाधेः ।
ब्रह्मस्वरः पितरमालपते द्युतीमान्
उत्सृज्य तात कृषिग्राममतो गवेष ॥

यदि स्वर्णकार्यु अङ्ग स्वर्णप्रवर्षयिष्ये
यदि वस्त्रकार्यु अहमेव प्रदास्यि वस्त्रां ।
अथ धान्यकार्यु अहमेव प्रवर्षयिष्ये
सम्यकप्रयुक्त भव सर्वजगे नरेन्द्र ॥

अनुशासयित्व पितरं जनपारिषद्यां
तस्मिन् क्षणे पुरवरं पुन सो प्रवेक्षी ।
अनुवर्तमान जगतः स्थिहते पुरेस्मिन्
नैष्क्रम्ययुक्तमनसः सुविशुद्धसत्त्वः ॥ इति ॥

॥ इति श्रीललितविस्तरे कृषिग्रामपरिवर्तो नाम एकादशो ऽध्यायः॥

इति हि भिक्षवः संवृद्धे कुमारे राजा शुद्धोदनो ऽपरेण समयेन शाक्यगणेन सार्धं संस्थागारे निषण्णो ऽभूत् ॥ तत्र ते महल्लकमहल्लकाः शाक्या राजानं शुद्धोदनमेवमाहुः । यत्खलु देवो जानीयात् । अयं सर्वार्थसिद्धकुमारो नैमित्तिकैर्ब्राह्मणैः कृतनिश्चयैश्च देवैर्यद्भूयसैवं निर्दिष्टो यदि कुमारो ऽभिनिष्क्रमिष्यति । तथागतो भविष्यत्यर्हन् सम्यक्संबुद्धः ॥ उत नाभिनिष्क्रमिष्यति । राजा भविष्यति चक्रवर्ती चतुरङ्गो विजितवान् धार्मिको धर्मराजः सप्तरत्नसमन्वागतः । तस्येमानि सप्तरत्नानि भविष्यन्ति । तद्यथा । चक्ररत्नं हस्तिरत्नं अश्वरत्नं मणिरत्नं स्त्रीरत्नं गृहपतिरत्नं परिणायकरत्नं । एवं सप्तरत्नं संपूर्णं चास्य पुत्रसहस्रं भविष्यति । शूराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानां । स इमं पृथिवीमण्डलमदण्डेनाशस्त्रेणाभिनिर्जित्याध्यावसिष्यति सह

धर्मेणेति ॥ तस्मान्निवेशनं कुमारस्य क्रियतामिति । तत्र स्त्रीगणपरिवृतो रतिं वेत्स्यति । नाभिनिष्क्रमिष्यति एवमस्माकं चक्रवर्तिवंशस्य चानुपच्छेदो भविष्यति । मानिताश्च भविष्यामो ऽनवद्याश्च सर्वकोट्टराजभिः ॥

ततो राजा शुद्धोदन एवमाह । यद्येवं तेन हि व्यवलोकयत कतमा कन्या कुमारस्यानुरूपा स्यात् ॥

तत्र पञ्चमात्राणि शाक्यशतानि एकैक एवमाह । मम दुहितानुरूपा स्यात् कुमारस्य सुरूपा मम दुहितेति ॥

राजा प्राह । दुरासदः कुमारः । तत् प्रतिवेदयिष्यामस्तावत् कुमारस्य कतमा ते कन्या रोचत इति ॥

ततश्च ते सर्वे संनिपत्य कुमारस्यैनां प्रकृतिमारोचयन्ति स्म ॥ तान्कुमार उवाच । सप्तमे दिवसे प्रतिवचनं श्रोष्यथेति ॥

ततो बोधिसत्त्वस्यैतदभवत् ।

विदित मम अनन्तकामदोषाः सरणसवैरसशोकदुःखमूलाः ।
भयकरविषपत्रसंनिकाशाः ज्वलननिभा असिधारतुल्यरूपाः ॥
कामगुणि न मेऽस्ति छन्दरागो न च अहु शोभमि इस्त्रिगारमध्ये ।
यन्नु अहु वने वसेय तूष्णीं ध्यानसमाधिसुखेन शान्तचित्तः ॥ इति ॥

स पुनरपि मीमांसोपायकौशल्यमामुखीकृत्य सत्त्वपरिपाकमवेक्षमाणो महाकरुणां संजनय्य तस्यां वेलायामिमां गाथामभाषत ।

संकीर्णि पङ्कि पदुमानि विवृद्धिमन्ति
आकीर्ण राज नरमध्यि लभाति पूजां ।

यद् बोधिसत्त्व परिवारबलं लभन्ते
तद् सत्त्वकोटिनयुतान्यमृते विनेन्ति ॥

ये चापि पूर्वक अभूद्विदुबोधिसत्त्वाः
सर्वेभि भार्यसुत दर्शित इस्त्रिगाराः ।
न च रागरक्त न च ध्यानसुखेभि भ्रष्टाः
हन्तानुशिक्षयि अहंपि गुणेषु तेषां ॥

न च प्राकृता मम वधू अनुकूलया स्याद्
यस्या न इष्यतु गुणा सद् सत्यवाक्यं ।
या चित्ति मह्यमभिराधयते ऽप्रमत्ता
रूपेण जन्मकुलगोत्रतया सुशुद्धा ॥

सो गाथलेख लिखिते गुणअर्थयुक्ता
या कन्य ईदृश भवे मम तां वरेथा ।
न ममार्थु प्राकृतजनेन असंवृतेन
यस्या गुणा कथयमी मम तां वरेथा ॥

या रूपयौवनवरा न च रूपमत्ता
माता स्वसा व यथ वर्तति मैत्रचित्ता ।
त्यागे रता श्रमणब्राह्मणदानशीला
तां तादृशां मम वधूं वरयस्व तात ॥

यस्या न मानु न खिलो न च दोषमस्ति
न च शाठ्य ईर्ष्य न च माय न उज्जुभ्रष्टा ।
स्वप्नान्तरे ऽपि पुरुषे नपरे ऽभिरक्ता
तुष्टा स्वकेन पतिना (सह) शयते ऽप्रमत्ता ॥

न च गर्विता नपि च उद्धत न प्रगल्भा
निर्मान मानविगतापि च चेटिभूता ।
न च पानगृद्ध न रसेषु न शब्दगन्धे
निर्लोभभिध्यविगता स्वधनेन तुष्टा ॥

सत्ये स्थिता नपि च चञ्चल नैव भ्रान्ता
न च उद्धतोन्नतस्थिता ह्रिरिवस्त्रछन्ना ।
न च दृष्टिमङ्गलरता सद धर्मयुक्ता
कायेन वाच मनसा सद शुद्धभावा ॥

न च स्त्यानमिद्धबहुला न च मानमूढा
मीमांसयुक्त सुकृता सद धर्मचारी ।
श्वश्रौ च तस्य श्वशुरे यथशास्तृप्रेमा
दासीकलत्रजनि यादृशमात्मप्रेम ॥

शास्त्रे विधिज्ञ कुशला गणिका यथैव
पश्चात् स्वपेत् प्रथममुत्थिहते च शय्यात् ।
मैत्रानुवर्ति अकुहापि च मातृभूता
एतादृशीं मि नृपते वधुकां वृणीष्व ॥ इति ॥

अथ खलु भिक्षवो राजा शुद्धोदन इमा गाथा वाचयित्वा पुरोहितमामन्त्रयते स्म । गच्छ त्वं महाब्राह्मण कपिलवस्तुमहानगरे सर्वगृहाण्यनुप्रविश्य कन्या व्यवलोकय । यस्या एते गुणाः संविद्यन्ते । क्षत्रियकन्याया वा ब्राह्मणकन्याया वा वैश्यकन्याया वा शूद्रकन्याया वा । तां कन्यामस्माकं प्रतिवेदय ॥ तत्कस्माद्धेतोः । न हि कुमारः कुलार्थिको न गोत्रार्थिको । गुणार्थिक एव कुमारः ॥

तस्यां च वेलायामिमा गाथामभाषत ।

ब्राह्मणीं क्षत्रिया कन्यां वैश्यां शूद्रीं तथैव च ।
यस्या एते गुणा सन्ति ता मे कन्यां प्रवेदय ॥
न कुलेन न गोत्रेण कुमारो मम विस्मितः ।
गुणे सत्ये च धर्मे च तत्रास्य रमते मनः ॥ इति ॥

अथ खलु भिक्षवः स पुरोहितस्तं गाथालेखं गृहीत्वा कपिलवस्तुनि महानगरे गृहाद्गृहं व्यवलोकयन् गत्वा हिण्डन् कन्यां पर्येषते स्म । एवंगुणयुक्तामपश्यन् (न चैव गुणयुक्तां कन्यां) सो ऽनुपूर्वेण विचरन् येन दण्डपाणेः शाक्यस्य निवेशनं तेनोपसंक्रामत् । स तं निवेशनं प्रविष्टो ऽद्राक्षीत् कन्यामभिरूपां प्रासादिकां दर्शनीयां परमया शुभवर्णपुष्करतया समन्वागतां नातिदीर्घा नातिह्रस्वां नातिस्थूलां नातिकृशा नातिगौरां नातिकृष्णां प्रथमयौवनावस्थां स्त्रीरत्नमिवाख्यायमानां ॥

अथ सा दारिका पुरोहितस्य चरणौ गृहीत्वा एवमाह । केन ते महाब्राह्मण कार्यं ॥ पुरोहित आह ।

शुद्धोदनस्य तनयः परमाभिरूपो
द्वात्रिंशलक्षणधरो गुणतेजयुक्तः ।
तेनेति गाथलिखिता गुणये वधूनां
यस्या गुणास्ति हि इमे स हि तस्य पत्नी ॥

स तस्यास्तं लेखमुपनामयति स्म ॥

अथ सा दारिका तं गाथालेखं वाचयित्वा स्मितमुपदर्श्य तं पुरोहितं गाथया ऽध्यभाषत् ।

मह्यि ति ब्राह्मण गुणा अनुरूप सर्वे
सो मे पतिर्भवतु सौम्य सुरूपरूपः ।
भणहि कुमारु यदि कार्य मह्य विलम्ब
मा हीनप्राकृतजनेन भवेय वासः ॥ इति ॥

अथ खलु स पुरोहितो राजानं शुद्धोदनमुपसंक्रम्यैव तमर्थमारोचयति स्म । दृष्टा मया देव कन्या या कुमारस्यानुरूपा स्यात् ॥ आह । कस्यासौ ॥ आह । दण्डपाणेर्देव शाक्यस्य दुहिता ॥

अथ राज्ञः शुद्धोदनस्यैतदभवत् । दुरासदः कुमारः शुभाधिमुक्तश्च प्रायेण च मातृग्रामोऽसंविद्यमानगुणोऽपि गुणानामात्मनि प्रजानीते । यन्वहमशोकभाण्डकानि कारयेयं यानि कुमारः सर्वदारिकाभ्योऽनुप्रयच्छेत् । तत्र यस्यां दारिकायां कुमारस्य चक्षुरभिनिवेक्ष्यति तां कुमारस्य वरयिष्यामीति ॥

अथ खलु राजा शुद्धोदनोऽशोकभाण्डानि कारयति स्म । सुवर्णमयानि रूप्यमयानि नानारत्नमयानि । कारयित्वा च कपिलवस्तुनि महानगरे घण्टाघोषणां कारयामास । सप्तमे दिवसे कुमारो दर्शनं दास्यति । अशोकभाण्डकानि च दारिकाभ्यो विश्रामयिष्यति । तत्र सर्वदारिकाभिः संस्थागारे संनिपतितव्यमिति ॥

इति हि भिक्षवः सप्तमे दिवसे बोधिसत्त्वः संस्थागारमुपसंक्रम्य भद्रासने न्यषीदत् ॥ राजापि शुद्धोदनोऽदृश्यपुरुषान् स्थापयति स्म । यस्यां दारिकायां कुमारस्य चक्षुः संनिविशेत्तां ममारोचयध्वमिति ॥

इति हि भिक्षवो यावन्त्यः कपिलवस्तुनि महानगरे दारिकास्ताः सर्वा येन संस्थागारो येन च बोधिसत्त्वस्तेनोपासंक्रामन् । बोधिसत्त्वस्य दर्शनाय अशोकभाण्डकानि च प्रतिगृहीतुं ॥

इति हि भिक्षवो बोधिसत्त्वो यथागताभ्यस्ताभ्यो दारिकाभ्यो ऽशोकभाण्डकान्यनुप्रयच्छति स्म ॥ ताश्च दारिका न शक्नुवन्ति स्म बोधिसत्त्वस्य श्रियं तेजश्च सोढुं । ता अशोकभाण्डकानि गृहीत्वा शीघ्रं शीघ्रमेव प्रक्रामन्ति स्म ॥

अथ दण्डपाणेः शाक्यस्य दुहिता गोपा नाम शाक्यकन्या सा दासीगणपरिवृता पुरस्कृता येन सस्थागारो येन च बोधिसत्त्वस्तेनोपसंक्रामदुपसंक्रम्यैकान्ते ऽस्थात् । बोधिसत्त्वमनिमेषाभ्यां नयनाभ्यां प्रेक्षमाणा । तद्यथा । बोधिसत्त्वेन सर्वाण्यशोकभाण्डकानि दत्तानि ॥ तदा सा बोधिसत्त्वमुसंक्रम्य प्रहसितवदना बोधिसत्त्वमेवमाह । कुमार किं ते मयापनीतं यस्त्वं मा विमानयसि ॥

आह । नाहं त्वां विमानयाम्यपि तु खलु पुनस्त्वमभिपश्चादागतेति ॥ स तस्यै चानेकशतसहस्रमूल्यमङ्गुलीयकं निर्मुच्य प्रादात् ॥

सा प्राह । इदमहं कुमार तवान्तिकादर्हामि ॥

आह । इमानि मदीयान्याभरणानि गृह्यन्तां ॥

सा आह । न वयं कुमारं व्यलंकरिष्यामः । अलंकरिष्यामो वयं कुमारं । इत्युक्त्वा सा कन्या प्रक्रामत् ॥

ततस्तैर्गुह्यपुरुषैः राजानं शुद्धोदनमुपसंक्रम्यैष वृत्तान्तो निवेदितो ऽभूत् । देव दण्डपाणेः शाक्यस्य दुहिता गोपा नाम शाक्यकन्या तस्यां कुमारस्य चक्षुर्निविष्टं मुहूर्तं च तयोः संलापो ऽभूत् ॥

इत्येतत्खलु वचनं श्रुत्वा राजा शुद्धोदनो दण्डपाणेः शाक्यस्य पुरोहितं दौत्येन प्रेषयति स्म । या ते दुहिता सा मम कुमारस्य प्रदीयतामिति ॥

दण्डपाणिराह । आर्यकुमारो गृहे सुखसंवृद्धः । अस्माकं चायं कुलधर्मः शिल्पज्ञस्य कन्या दातव्या नाशिल्पज्ञस्येति ॥ कुमारश्च न शिल्पज्ञो नासिधनुष्कलापयुद्धसालम्भविधिज्ञः । तत्कथमशिल्पज्ञायाहं दुहितरं दास्यामि ॥

इत्येतच्च राज्ञः प्रतिवेदितं ॥ ततो राज्ञ एतदभवत् । द्विरपीदमहं सहधर्मेण चोदितः । यदापि मयोक्तं कस्माच्छाक्यकुमाराः कुमारस्योपस्थानाय नागच्छन्तीति । तदाप्यहमभिहितः । किं वयं मण्डकस्योपस्थानं करिष्याम इति । एतर्ह्यप्येवमिति । प्रध्यायन्निषण्णो ऽभूत् ॥

बोधिसत्त्वश्चैनं वृत्तान्तमश्रोषीत् । श्रुत्वा च येन राजा शुद्धोदनस्तेनोपसंक्रामदुपसंक्रम्यैवमाह । देव किमिदं दीनमनास्तिष्ठसि ॥

राजा आह । अलं ते कुमारा ऽनेन ॥

कुमार आह । देव सर्वथा तावदवश्यमेवमाख्यातव्यं ॥ यावत्त्रिरपि बोधिसत्त्वो राजानं शुद्धोदनं परिपृच्छति स्म ॥

ततो राजा शुद्धोदनो बोधिसत्त्वाय तां प्रवृत्तिमारोचयति स्म ॥ तां श्रुत्वा बोधिसत्त्व आह । देव अस्ति पुनरिह नगरे कश्चिद्यो मया सार्धं समर्थः शिल्पेन शिल्पमुपदर्शयितुं ॥

ततो राजा शुद्धोदनः प्रहसितवदनो बोधिसत्त्वमेवमाह । शक्यसि पुनस्त्वं पुत्र शिल्पमुपदर्शयितुं ॥ स आह । (वाढं) शक्यामि

देव तेन हि संनिपात्यन्तां सर्वशिल्पज्ञाः । येषां पुरतः स्व शिल्पमुपदर्शयिष्यामि ॥

ततो राजा शुद्धोदनः कपिलवस्तुनि महानगरवरे घण्टाघोषणां कारयति स्म । सप्तमे दिवसे कुमारः स्व शिल्पमुपदर्शयति । तत्र सर्वशिल्पज्ञैः संनिपतितव्यं ॥

तत्र सप्तमे दिवसे पञ्चमात्राणि शाक्यकुमारशतानि संनिपतितान्यभूवन् । दण्डपाणेश्च शाक्यस्य दुहिता गोपा नाम शाक्यकन्या जयपताका स्थापिताभूत् । यो वाचासिधनुष्कलापयुद्धसालम्भेषु जेष्यति तस्यैषा भविष्यतीति ॥

तत्र सर्वपुरतो देवदत्तः कुमारो नगरादभिनिष्क्रामति स्म ॥ श्वेतश्च हस्ती महाप्रमाणो बोधिसत्त्वस्यार्थे नगरं प्रवेश्यते स्म ॥ तत्र देवदत्तः कुमार ईर्ष्यया च शाक्यबलमदेन च मत्तः स त हस्तिनागं वामेन पाणिना शुण्डायां गृहीत्वा दक्षिणेन पाणिना चपेटया एकप्रहारेणैव हतोऽभूत् ॥

तस्यानन्तरं सुन्दरनन्दकुमारोऽभिनिष्क्रामति स्म । सोऽद्राक्षीत्तं हस्तिनागं नगरद्वारे हतं दृष्ट्वा च पर्यपृच्छत् । केनायं हत इति ॥ तत्र महाजनकाय आह । देवदत्तेनेति ॥ स आह । अशोभनमिदं देवदत्तस्य ॥ स त हस्तिनागं लाङ्गूले गृहीत्वा नगरद्वारादपकर्षति स्म ॥

तदनन्तरं बोधिसत्त्वो रथाभिरूढोऽभिनिष्क्रामति स्म । अद्राक्षीद्बोधिसत्त्वस्तं हस्तिनं हतं दृष्ट्वा च पर्यपृच्छत् । केनायं हत इति ॥ आहुः । देवदत्तेनेति ॥ आह । अशोभनं देवदत्तस्य । केन

पुनरस्मान्नगरद्वाराद्पकर्षित इति ॥ आरुः । सुन्दरनन्देनेति ॥ आह । शोभनमिदं सुन्दरनन्दस्य किं तु महाकायो ऽयं सत्त्वः सो ऽयं क्लिन्नः सर्वनगरं दौर्गन्ध्येन स्फुरिष्यतीति ॥

ततः कुमारो रथस्थ एवैकं पादं भूमौ प्रसार्य पादाङ्गुष्ठेन तं हस्तिनागं लाङ्गुले गृहीत्वा सप्त प्राकारान्सप्त च परिखानतिक्रम्य बहिर्नगरस्य क्रोशमात्रे प्रक्षिपति स्म ॥ यत्र च प्रदेशे स हस्ती पतितस्तस्मिन् प्रदेशे महद्बिलं संवृत्तं यत्सांप्रतं हस्तिगर्तेत्यभिधीयते ॥

तत्र देवमनुजाः शतसहस्राणि हाहाकारकिलकिलाप्रक्ष्वेडित-शतसहस्राणि प्रामुञ्चंश्चैलविक्षेपांश्चाकार्षुः ॥ गगणतलगताश्च देवपुत्रा इमे गाथे ऽभाषन्त ।

यथ मत्तगजेन्द्रगतीनां  पादाङ्गुष्ठतलेन गजेन्द्रं ।
सप्त पुरापरिखा अतिक्रम्य  क्षिप्तु बहि षुपुरातु अयं हि ॥
निःसंशयमेष सुमेधा  मानबलेन समुच्छ्रितकायान् ।
संसारपुरातु बहिर्धा  एक क्षपिष्यति प्रज्ञबलेन ॥

इति हि पञ्चमात्राणि शाक्यकुमारशतानि नगरान्निष्क्रम्य येनान्यतमः पृथिवीप्रदेशो यत्र शाक्यकुमाराः शिल्पमुपदर्शयन्ति स्म तेनोपसंक्रामन् ॥ राजापि शुद्धोदनो महल्लकमहल्लकाश्च शाक्या महांश्च जनकायो येनासौ पृथिवीप्रदेशस्तेनोपसंक्रामन्। बोधिसत्त्वस्य चान्येषां च शाक्यकुमाराणां शिल्पविशेष द्रष्टुकामाः ॥

तत्रादित एव ये शाक्यकुमारा लिप्यां पटुविधिज्ञास्ते बोधि-सत्त्वेन सार्धं लिपिं विशेषयन्ति स्म ॥ तत्र तैः शाक्यैर्विश्वामित्र आचार्यः साक्षी स्थापितो ऽभूत । स त्वं व्यवलोकय कतमो ऽत्र

कुमारो लिपिज्ञाने विशिष्यते यदि वा लेख्यतो यदि वा बङ्कलिपिनिर्याणतः ॥ अथ विश्वामित्र आचार्यः प्रत्यक्षो बोधिसत्त्वस्य लिपिज्ञाने स्मितमुपदर्शयन्निमे गाथे ऽभाषत ।

मानुष्यलोके ऽथ च देवलोके गन्धर्वलोके ऽप्यसुरेन्द्रलोके ।
यावन्ति केचिल्लिपि सर्वलोके तत्रैष पारंगतु शुद्धसत्त्वः ॥
नामापि यूयं च अहं च तेषां लिपीन जानाम न चाक्षराणां ।
यान्येष जानाति मनुष्यचन्द्रो अहमत्र प्रत्यक्षु विजेष्यते ऽयं ॥

शाक्या आहुः । विशिष्यतां तावत्कुमारो लिपिज्ञाने संख्याज्ञाने कुमारो विशेषयितव्यो जिज्ञास्यस्य ॥ तत्रार्जुनो नाम शाक्यगणको महामात्रः संख्यागणनासु पारंगतः स साक्षी स्थापितो ऽभूत् । स त्वं व्यवलोकय कतमो ऽत्र कुमारो विशिष्यते संख्यज्ञानत इति ॥ तत्र बोधिसत्त्वस्योद्दिशति स्म । एकस्य शाक्यकुमारो निक्षिपति स्म । न च परिप्रापयति स्म बोधिसत्त्वस्यैकद्वौ त्रयश्चत्वारः पञ्च दश विंशत्त्रिंशच्चत्वारिंशत्पञ्चाशच्छतं यावत्पञ्चापि शाक्यकुमारशतानि युगपत्काले निक्षिपन्ति स्म न च परिप्रापयन्ति स्म ॥ ततो बोधिसत्त्व आह । उद्दिशत यूयमहं निक्षेप्स्यामीति ॥ तत्रैकशाक्यकुमारो बोधिसत्त्वस्योद्दिशति स्म । न च परिप्रापयति स्म । द्वावपि त्रयो ऽपि पञ्चापि दशापि विंशत्यपि त्रिंशदपि चत्वारिंशदपि पञ्चाशदपि यावत्पञ्चापि शाक्यकुमारशतानि युगपदुद्दिशन्ति स्म । न च परिप्रापयन्ति स्म बोधिसत्त्वस्य निक्षिपतः ॥

बोधिसत्त्व आह । अलमलमनेन विवादेन सर्व इदानीमेकीभूत्वा ममोद्दिशताहं निक्षेप्स्यामीति ॥ तत्र पञ्चमात्राणि शाक्यकुमार-

शतान्येकवचनोदाहारिणापूर्वचरितं समुद्दिशन्ति स्म । बोधिसत्त्वश्चासंमूढो निक्षिपति स्म ॥ एवमपर्यन्ताः सर्वशाक्यकुमारा अथ पर्यन्तस्य बोधिसत्त्वः ॥

ततो ऽर्जुनो गणकमहामात्र आश्चर्यप्राप्त इमे गाथे ऽभाषत ।

ज्ञानस्य शीघ्रता साधु बुद्धे संपरिपृच्छता ।
पञ्चमात्रशतान्येते धिष्ठिता गणनापथे ॥
ईदृशी च इयं प्रज्ञा बुद्धिर्ज्ञानं स्मृतिर्मतिः ।
अद्यापि शिक्षते चायं गणितं ज्ञानसागरः ॥

ततः सर्वशाक्यगण आश्चर्यप्राप्तः परमविस्मयापन्नो ऽभूत् । एककण्ठाश्चेमां वाचमभाषन्त । जयति जयति भोः सर्वार्थसिद्धः कुमारः ॥ सर्वे चासनेभ्य उत्थाय कृताञ्जलिपुटा भूत्वा बोधिसत्त्वं नमस्कृत्य राजानं शुद्धोदनमेतदवोचन् । लाभास्ते महाराज परमसुलब्धाः । यस्य ते पुत्र एवं शीघ्रलघुजवचपलपरिपृच्छाप्रतिभान इति ॥

अथ स राजा शुद्धोदनो बोधिसत्त्वमेवमाह । शक्यसि पुत्रार्जुनेन गणकमहामात्रेण सार्धं संख्याज्ञानकौशल्यगणनागतिमनुप्रवेष्टुं ॥ बोधिसत्त्व आह । शक्यामि देव ॥ आह । तेन हि गण्यतां ॥

अथार्जुनो गणकमहामात्रो बोधिसत्त्वमेवमाह । जानीषे त्वं कुमार कोटिशतोत्तरां नाम गणनागतिं ॥ आह । जानाम्यहं ॥ आह । कथं पुनः कोटिशतोत्तरा गणनागतिरनुप्रवेष्टव्या ॥

बोधिसत्त्व आह । शतं कोटीनामयुतं नामोच्यते । शतमयुतानां नियुतो नामोच्यते । शतं नियुतानां कङ्करं नामोच्यते । शतं कङ्कराणां विवरं नामोच्यते । शतं विवराणामक्षोभ्यं नामोच्यते । शतमक्षोभ्याणां

विवाहं नामोच्यते। शतं विवाहानामुत्सङ्गं नामोच्यते। शतमुत्सङ्गानां बहुलं नामोच्यते। शतं बहुलाना नागबल नामोच्यते। शतं नागबलानां तिटिलम्भं नामोच्यते। शत तिटिलम्भानां व्यवस्थानप्रज्ञप्तिर्नामोच्यते। शतं व्यवस्थानप्रज्ञप्तीना हेतुहिलं नामोच्यते। शतं हेतुहिलाना करफुर्नामोच्यते। शत करफूणा हेत्विन्द्रिय नामोच्यते। शतं हेत्विन्द्रियाणां समाप्तलम्भ नामोच्यते। शतं समाप्तलम्भानां गणनागतिर्नामोच्यते। शतं गणनागतीना निरवद्य नामोच्यते। शतं निरवद्यानां मुद्राबल नामोच्यते। शतं मुद्राबलानां सर्वबलं नामोच्यते। शतं सर्वबलानां विसंज्ञागती नामोच्यते। शत विसंज्ञागतीनां सर्वसंज्ञा नामोच्यते। शत सर्वसंज्ञाना विभूतंगमा नामोच्यते। शतं विभूतंगमानां तल्लक्षणं नामोच्यते॥ इति हि तल्लक्षणगणनया सुमेरुपर्वतराजो लक्षनिक्षेपक्रियया परिक्षय गच्छेत्॥ अतोऽप्युत्तरि ध्वजाग्रवती नाम गणना। यस्यां गणनायां गङ्गानदीवालिकासमा लक्षनिक्षेपक्रियया परिक्षयं गच्छेयुः॥ अतोऽप्युत्तरि ध्वजाग्रनिशामणी नाम गणना। अतोऽप्युत्तरि वाहनप्रज्ञप्तिर्नाम। अतोऽप्युत्तरि इङ्गा नाम। अतोऽप्युत्तरि कुरुटु नाम। अतोऽप्युत्तरि कुरुटावि नाम। अतोऽप्युत्तरि सर्वनिक्षेपा नाम गणना। यस्यां गणनायां दश गङ्गानदीवालिकासमा लक्षनिक्षेपक्रियया परिक्षयं गच्छेयुः॥ अतोऽप्युत्तरि अग्रसारा नाम गणना। यत्र कोटीशतं गङ्गानदीवालिकासमा लक्षनिक्षेपाः परिक्षयं गच्छेयुः॥ अतोऽप्युत्तरि परमाणुरजःप्रवेशानुगता नाम गणना। यत्र तथागतं स्थापयित्वा बोधिमण्डवराग्रगतं च सर्वधर्माभिषेकाभिमुखं बोधिसत्त्वं नान्यः कश्चित्सत्त्वः

सत्त्वनिकाये संविद्यते य एतां गणनां प्रजानात्यन्यत्राहं वा यो वा स्यान्मादृशः । एवं चरमभाविको विनिष्क्रान्तगृहवासो बोधिसत्त्वः ॥

अर्जुनो ऽवोचत् । कथं कुमार परमाणुरजःप्रवेशगणनानुप्रवेष्टव्या ॥

बोधिसत्त्व आह । सप्त परमाणुरजांस्यणुः । सप्ताणवस्त्रुटिः । सप्तत्रुटिरेकं वातायनरजः । सप्त वातायनरजांस्येकं शशरजः । सप्त शशरजांस्येकमेडकरजः । सप्तैडकरजांस्येकं गोरजः । सप्त गोरजांस्येकं लिक्षारजः । सप्त लिक्षाः सर्षपः । सप्तसर्षपाद्यवः । सप्तयवादङ्गुलीपर्व । द्वादशाङ्गुलीपर्वाणि वितस्तिः । द्वे वितस्ती हस्तः । चत्वारो हस्ता धनुः । धनुसहस्रं मार्गध्वजाक्रोशः । चत्वारः क्रोशा योजनं ॥ तत्र को युष्माकं योजनपिण्डं प्रजानाति । कियन्ति तानि परमाणुरजांसि भवन्ति ॥

अर्जुनो ऽवोचत् । अहमेव तावत्कुमार संमोहमापन्नः । किमङ्ग पुनर्ये चान्ये ऽल्पबुद्धयः ॥ निर्दिशतु कुमारो योजनपिण्डं कियन्ति तानि परमाणुरजांसि भवन्तीति ॥

बोधिसत्त्वो ऽवोचत् । तत्र योजनपिण्डः परमाणुरजसां परिपूर्णमक्षोभ्यनयुतमेकं त्रिंशच्च कोटीनयुतशतसहस्राणि षष्टिश्च कोटीशतानि द्वात्रिंशतिश्च कोट्यः पञ्च च दशशतसहस्राणि द्वादश च सहस्राणि एतावान्योजनपिण्डः परमाणुरजोनिक्षेपस्थानेन प्रवेशेनायं जम्बुद्वीपः सप्तयोजनसहस्राणि । गोदानीयो ऽष्टौ योजनसहस्राणि । पूर्वविदेहो नव योजनसहस्राणि । उत्तरकुरुद्वीपो दशयोजनसहस्राणि ॥ अनेन प्रवेशेनेमं चातुर्द्वीपकं लोकधातुं प्रमुखं कृत्वा परिपूर्णकोटीशतं । चातुर्द्वीपकानां लोकधातूनां यत्र कोटीशतं महासमुद्राणां । कोटी-

शतं चक्रवाडमहाचक्रवाडानां । कोटीशतं सुमेरूणां पर्वतराजानां । कोटीशतं चातुर्महाराजिकानां देवानां । कोटीशतं त्रायत्रिंशानां । कोटीशतं यामानां । कोटीशतं तुषितानां । कोटिशत निर्माणरतीनां । कोटीशतं परनिर्मितवशवर्तीना । कोटीशतं ब्रह्मकायिकानां । कोटीशतं ब्रह्मपुरोहितानां । कोटीशतं ब्रह्मपार्षद्यानां । कोटीशतं महाब्रह्माणां । कोटिशतं परीत्ताभानां । कोटीशतं अप्रमाणाभानां । कोटीशतं आभास्वराणां । कोटीशतं परीत्तशुभानां । कोटीशतं अप्रमाणशुभानां । कोटीशतं शुभकृत्स्नानां । कोटीशतं अनभ्रकाणां । कोटीशतं पुण्यप्रसवानां । कोटीशतं बृहत्फलानां । कोटीशतं असंज्ञिसत्त्वानां । कोटीशतं अवृहानां । कोटीशतं अतपाना । कोटीशतं सुदृशानां । कोटीशां सुदर्शनानां । कोटीशतं अकनिष्ठानां देवानां ॥ अयमुच्यते त्रिसाहस्रमहासाहस्रलोकधातुर्विपुलस्य विस्तीर्णस्य । स यावन्ति योजनशतानि (परमाणुरजांसि त्रिसाहस्रमहासाहस्रलोकधातौ) यावन्ति योजनसहस्राणि । यावन्ति योजनकोट्यः । यावन्ति योजननयुतानि पेयालं यावद्यावन्तो योजनाग्रसारा गणनाक्रियन्त्येतानि परमाणुरजांसि । इत्याह । संख्यागणना व्यतिवृत्ता ह्येषां गणनां तदुच्यते ऽसंख्येयमिति । अतो ऽसंख्येयतमानि परमाणुरजांसि यानि त्रिसाहस्रमहासाहस्रलोकधातौ भवन्ति ॥

अस्मिन् खलु पुनर्गणनापरिवर्ते बोधिसत्त्वेन निर्दिश्यमाने अर्जुनो गणकमहामात्रः सर्वश्च शाक्यगणस्तुष्ट उदग्र आत्तमनाः प्रमुदित आश्चर्याद्भुतप्राप्तो ऽभूत् । ते सर्व एकैकैर्वस्त्रैः स्थिता अभूवन् । परिशिष्टैर्वस्त्राभरणैर्बोधिसत्त्वमभिच्छादयन्ति स्म ॥

अथ खल्वर्जुनो गणकमहामात्र इमे गाथे ऽभाषत ।

कोटीशतं च अयुता नयुतास्तथैव
नियुतानु कङ्करगती तथ बिम्बराश्च ।
अक्षोभिणी परमज्ञानु न मे ऽस्त्यतो ऽर्थं
मत उत्तरे गणनमप्रतिमस्य ज्ञानं ॥

अपि च भोः शाक्याः ।

त्रिसाहस्रि रजाग्रयन्तका तृणवन ओषधियो जलस्य विन्दून् ।
ऊंकारिण न्यसेय एकिनैषो को पुनि विस्मयु पञ्चभिः शतेभिः ॥

तत्र देवमनुजाः शतसहस्राणि हाहाकारकिलिकिलाप्रक्ष्वेडितशतसहस्राणि प्रामुञ्चन् ॥ गगणतलगताश्च देवपुत्रा इमा गाथा अभाषन्त ।

यावन्त सत्त्व निखिलेन त्रियध्वयुक्ताः
चित्तानि चैतसिकसंज्ञि वितर्कितानि ।
हीनाः प्रणीत तथ संक्षिपविक्षिपा ये
एकक्षि चित्तपरिवर्ति प्रजानि सर्वान् ॥

इति हि भिक्षवो ऽभिभूताः सर्वे शाक्यकुमारा अभूवन् । बोधिसत्त्व एव विशिष्यते । तदनन्तरं लङ्घिते प्लविते जविते सर्वत्र बोधिसत्त्व एव विशिष्यते स्म ॥ गगणतलगताश्च देवपुत्रा इमां गाथामभाषन्त ।

व्रततपसगुणेन संयमेन क्षमदममैत्रबलेन कल्पकोट्यः ।
अथ क्रतुलघुकायचित्तनेता तस्य जवस्य विशेषतां शृणोथ ॥

इह गृहगत युष्मि पश्यथा सत्त्वसारं अपि च दशसु दिक्षू गच्छते ऽयं क्षणेन ।
अपरिमितजिनाना पूजनामेष कुर्वन् मणिकनकविचित्रैर्लोकधातुष्वनन्ता ॥
न च पुन गति आगतिं च अस्या यूयं प्रजानथ तावदृद्धिप्राप्तो ।
को ऽत्र जविति विस्मयो जनेया असदृश एष करोथ गौरवो ऽस्मिन् ॥

एवं ज्ञात्वा बोधिसत्त्व एव विशिष्यते स्म ॥

तत्र शाक्या आहुः । युद्धेषु तावत्कुमारो विशेषयितव्यो जिज्ञास्यश्च ॥ तत्र बोधिसत्त्व एकान्ते स्थितो ऽभूत् । तानि च पञ्चमात्राणि शाक्यकुमारशतानि युगपद्युध्यन्ति स्म ॥

इति हि द्वात्रिंशच्छाक्यकुमारा. सालम्भाय स्थिताः । तदा नन्दश्चानन्दश्च बोधिसत्त्वमभिगतौ सालम्भाय तौ समनन्तरं स्पृष्टाविव बोधिसत्त्वेन पाणिना तौ बोधिसत्त्वस्य बलं तेजश्चासहमानौ धरणीतले प्रपतितावभूतां ॥ तदनन्तर देवदत्तः कुमारो गर्वितश्च मानी च बलवानिव तब्धः शाक्यमानेन च तब्धो बोधिसत्त्वेन सार्धं विस्पर्धमानः सर्वावन्तं रङ्गमण्डलं प्रदक्षिणीकृत्य विक्रीडमानो बोधिसत्त्वमभिपतति स्म । अथ बोधिसत्त्वो ऽसंभ्रान्त एवात्वरन् दक्षिणेन पाणिना सलीडं देवदत्तं कुमारं गृहीत्वा त्रिर्गगणतले परिवर्त्य माननिग्रहार्थमविहिंसाबुद्ध्या मैत्रेण चित्तेन धरणीतले निक्षिपति स्म । न चास्य कायं व्याबाधते स्म ॥

ततो बोधिसत्त्वो ऽप्याह । अलमलमनेन विवादेन सर्व एव एकीभूत्वा इदानीं सालम्भायागच्छतेति ॥

अथ ते सर्वे हर्षिताभूत्वा बोधिसत्त्वमभिनिपतिताः । ते समनन्तरस्पृष्टा बोधिसत्त्वेन बोधिसत्त्वस्य श्रियं तेजश्च कायबलं स्थामं चासहमानाः स्पृष्टमात्रा एव बोधिसत्त्वेन धरणितले प्रापतन् ॥ तत्र मरुन्मनुजशतसहस्राणि हीहीकारकिलिकिलाप्रक्ष्वेडितशतसहस्राण्यकार्षुः ॥ गगणतलगताश्च देवपुत्रा महान्तं पुष्पवर्षमभिप्रवृष्यैकस्वरेणेमां गाथामभाषन्त ।

यावन्त सत्त्वनयुता दशसू दिशासु
ते दुष्टमल्लमहनग्नसमा भवेयुः ।
एकक्षणेन निपतेयु नरर्षभस्य
संस्पृष्टमात्र निपतेयु क्षितीतलेस्मि ॥

मेरुः सुमेरु तथ वज्रकचक्रवाडाः
ये चान्य पर्वत क्वचिद्दशसू दिशासु ।
पाणिभ्य गृह्य मसिचूर्णनिभां प्रकुर्यात्
को विस्मयो मनुजआश्रयके असारे ॥

एषो द्रुमेन्द्रप्रवरे महदुष्टमल्लं
मारं ससैन्यसबलं सहयं ध्वजाग्रे ।
मैत्रीबलेन विनिहत्य हि कृष्णबन्धुं
यावत् पृसिष्यति अनुत्तरबोधिसान्तं ॥ इति ॥

एवं ज्ञात्वा बोधिसत्त्व एव विशिष्यते स्म ॥

अथ दण्डपाणिः शाक्यकुमारानेतदवोचत् । जिज्ञासितमिदं दृष्टं च हन्तेदानीमिषुक्षेपमुपदर्शयतेति ॥ तत्रानन्दस्य द्वयोः क्रो-

शयोरयस्मयी भेरी लब्धं स्थापिताभूत् । अस्यानन्तरं देवदत्तस्य चतुर्षु क्रोशेष्वयस्मयी भेरी स्थापिताभूत् । सुन्दरनन्दस्य षट्सु क्रोशेष्वयस्मयी भेरी स्थापिताभूत् । दण्डपाणेर्योजनद्वये ऽयस्मयी भेरी स्थापिताभूत् । बोधिसत्त्वस्य दशसु क्रोशेष्वयस्मयी भेरी स्थापिताभूत् । तस्यानन्तर सप्त ताला अयस्मयी वराहप्रतिमा यन्त्रयुक्ता स्थापिताभूत् ॥ तत्रानन्देन द्वाभ्यां क्रोशाभ्यां भेर्याहताभूत् । ततोत्तरि न शक्नोति स्म ॥ देवदत्तेन चतुःक्रोशस्था भेर्याहताभूत् । नोत्तरि शक्नोति स्म ॥ सुन्दरनन्देन षट्क्रोशस्था भेर्याहताभूत् । नोत्तरि शक्नोति स्म ॥ दण्डपाणिना द्वियोजनस्था भेर्याहताभूत् । निर्विद्धा च नोत्तरि शक्नोति स्म ॥ तत्र बोधिसत्त्वस्य यद्यदेव धनुरुपनाम्यते स्म । तत्तदेव विच्छिद्यते स्म ॥

ततो बोधिसत्त्व आह । अस्तीह देव नगरे किंचिदन्यद्धनुर्यन्ममारोपण सहेत कायबलस्थामं च ॥ राजा आह । अस्ति पुत्र ॥ कुमार आह । क्व तद्देव ॥ राजा आह । तव पुत्र पितामहः सिंहहनुर्नामाभूत् । तस्य यद्धनुस्तदेव तर्हि देवकुले गन्धमाल्यैर्महीयते न पुनस्तत्कश्चिच्छक्नोति स्म तद्धनुरारोपयितुं प्रागेव पूरयितुं ॥

बोधिसत्त्व आह । आनीयतां देव तद्धनुर्जिज्ञासिष्यामहे ॥

तावद्यावत्तद्धनुरुपनामितमभूत् । तत्र सर्वे शाक्यकुमाराः परमेणापि प्रयत्नेन व्यायच्छमाना न शक्नुवन्ति स्म तद्धनुरारोपयितुं प्रागेव पूरयितुं ॥ ततस्तद्धनुर्दण्डपाणेः शाक्यस्योपनामितमभूत् । अथ दण्डपाणिः शाक्यः सर्वकायबलस्थाम संजनय्य तद्धनुरारोपयितुमारब्धो ऽभूत् । न च शक्नोति स्म ॥ यावद्बोधिसत्त्वस्योपनामितमभूत् ।

तद्बोधिसत्त्वो गृहीत्वा आसनादनुत्तिष्ठन्नेवार्धपर्यङ्कं कृत्वा वामेन पाणिना (गृहीत्वा) दक्षिणेन पाणिना एकाङ्गुल्यग्रेणारोपितवानभूत् ॥ तस्य धनुष आरोप्यमाणस्य सर्वं कपिलवस्तु महानगरं शब्देनाभिविज्ञप्तमभूत् । सर्वनगरजनश्च विह्वलीभूतो ऽन्योन्यमपृच्छत् । कस्यायमेवंविधः शब्द इति ॥ अन्ये तदवोचन् । सिद्धार्थेन किल कुमारेण पैतामहधनुरारोपितं तस्यायं शब्द इति ॥ तत्र देवमनुजशतसहस्राणि हाहाकारकिलिकिलाप्रक्ष्वेडितशतसहस्राणि प्रामुञ्चन् ॥ गगणतलगताश्च देवपुत्रा राजानं शुद्धोदनं तं च महान्तं जनकायं गाथयाध्यभाषन्त ।

यथ पूरित एष धनुर्मुनिना
न च उत्थितु आसनि नो च भुमी ।
निःसंशयु पूर्णमभिप्रायु मुनिर्
लघु भेष्यति जित्व च मारचमूं ॥

इति हि भिक्षवो बोधिसत्त्वस्तद्धनुः पूरयित्वेषुं गृहीत्वा तादृशेन बलस्थाम्ना तमिषुं क्षिपति स्म । येन या चानन्दस्य भेरी या च देवदत्तस्य यावत्सुन्दरनन्दस्य यावद्दण्डपाणेस्ताः सर्वा अभिनिर्भिद्य तां च दशक्रोशस्थां स्वकामयस्मयीं भेरीं सप्ततालां यन्त्रयुक्तावराहप्रतिमामभिनिर्भिद्य स इषुर्धरणीतलं प्रविश्य अदर्शनाभासो ऽभूत् ॥ यत्र च प्रदेशे स इषुर्भूमितलं भित्त्वा प्रविष्टस्तस्मिन्प्रदेशे कूपः संवृत्तः । यदद्यत्वे ऽपि शरकूप इत्यभिधीयते ॥ तत्र देवमनुष्य शतसहस्राणि हीहीकारकिलिकिलाप्रक्ष्वेडितशतसहस्राणि प्रामुञ्चन् । सर्वश्च शाक्यगणो विस्मितो ऽभूत् । आश्चर्यप्राप्तः ॥ आश्चर्यं भो न च

नामानेन योग्या कृता इदं चेदृशं शिल्पकौशलं ॥ गगणतलगताश्च देवपुत्रा राजानं शुद्धोदन त च महान्तं जनकायमेवमाहुः। कोऽत्र विस्मयो मनुजाः। तत्कस्मात्।

एष धरणिमण्डे पूर्वबुद्धासनस्थः
समथ धनुगृहीत्वा शून्यनैरात्मबाणैः।
क्लेशरिपुनिहत्वा दृष्टिजालं च भित्त्वा
शिवविरजमशोकां प्राप्स्यते बोधिमग्र्यां ॥

एवमुक्त्वा ते देवपुत्रा बोधिसत्त्वं दिव्यैः पुष्पैरभ्यवकीर्य प्राक्रामन् ॥ एवं लङ्घिते प्राग्वल् लिपिमुद्रागणनासंख्यासालम्भ-धनुर्वेदे जविते प्लविते तरणे इष्वस्त्रे हस्तिग्रीवायामश्वपृष्ठे रथे धनुष्कलापे स्थैर्यस्थाम्नि सुशौर्ये बाहुव्यायामे अङ्कुशग्रहे पाशग्रहे उद्याने निर्याणे अवयाने मुष्टिबन्धे पदबन्धे शिखाबन्धे छेद्ये भेद्ये दालने स्फालने अक्षुण्णवेधित्वे मर्मवेधित्वे शब्दवेधित्वे दृढप्रहारित्वे अक्षक्रीडायां काव्यकरणे ग्रन्थे चित्रे रूपे रूपकर्मणि (धीते) अग्निकर्मणि वीणायां वाद्ये नृत्ये गीते पठिते आख्याने हास्ये लास्ये नाट्ये विडम्बिते माल्यग्रन्थने संवाहिते मणिरागे वस्त्ररागे मायाकृते स्वप्नाध्याये शकुनिरुते स्त्रीलक्षणे पुरुषलक्षणे अश्वलक्षणे हस्तिलक्षणे गोलक्षणे अजलक्षणे मिश्रलक्षणे कौटुभेश्वरलक्षणे निर्घण्टे निगमे पुराणे इतिहासे वेदे व्याकरणे निरुक्ते शिक्षायां छन्दस्विन्यां यज्ञकल्पे ज्योतिषे सांख्ये योगे क्रियाकल्पे वैशिके वैशेषिके अर्थविद्यायां बार्हस्पत्ये आश्चिर्ये आसुर्ये मृगपक्षिरुते हेतुविद्यायां जलयन्त्रे मधूच्छिष्टकृते सूचिकर्मणि बिदलकर्मणि पत्रच्छेद्ये गन्धयुक्तौ

इत्येवमाद्यासु सर्वकर्मकलासु लौकिकादिषु दिव्यमानुष्यकातिक्रान्तासु सर्वत्र बोधिसत्त्व एव विशिष्यते स्म ॥

अथ खलु पुनस्तेन समयेन दण्डपाणिः शाक्यः स्वां दुहितरं गोपां शाक्यकन्यां बोधिसत्त्वाय प्रादात्। सा च राज्ञा शुद्धोदनेनानुपूर्वेण बोधिसत्त्वस्य वृताभूत् ॥

तत्र खल्वपि बोधिसत्त्वश्चतुरशीतिस्त्रीसहस्राणां मध्ये प्राप्तो लोकानुभवनतया रममाणं क्रीडयन्तं परिचारयन्तमात्मानमुपदर्शयति स्म ॥ तासां चतुरशीति स्त्रीसहस्राणां गोपा शाक्यकन्या सर्वासामग्रमहिष्यभिषिक्ताभूत् ॥

तत्र खल्वपि गोपा शाक्यकन्या न कंचिद्दृष्ट्वा वदनं छादयति स्म। श्वश्रू वा श्वशुरं वान्तर्जनं वा। ते तामुपध्यायन्ति स्म। विचारयन्ति स्म। नववधूका हि नाम प्रतिलीना तिष्ठतीयं। पुनर्विवृतैव सर्वदा इति ॥ ततो गोपा शाक्यकन्या एतां प्रकृतिं श्रुत्वा सर्वस्यान्तर्जनस्य पुरतः स्थित्वा इमा गाथा अभाषत।

विवृतः शोभते आर्य आसनस्थानचङ्क्रमे।
मणिरत्नं ध्वजाग्रे वा भासमानं प्रभास्वरं ॥
गच्छन्वै शोभते आर्य आगच्छन्नपि शोभते।
स्थितो वाथ निषण्णो वा आर्यः सर्वत्र शोभते ॥
कथयं शोभते आर्यस्तूष्णीभूतो ऽपि शोभते।
कलविङ्को यथा पक्षी दर्शनेन स्वरेण वा ॥
कुशचीरनिवस्तो वा मन्दचैलः कृशंतनुः।
शोभते ऽसौ स्वतेजेन गुणवान् गुणभूषितः ॥

सर्वेण शोभति आर्यो यस्य पाप न विद्यते ।
कियद्विभूषितो बालः पापचारी न शोभते ॥

ये किल्बिषा स्वहृदये मधुरासु वाचं
कुम्भो विषस्मि परिषिक्त यथामृतेन ।
दुस्पर्शशैलशिलवत् कथिनान्तरात्मा
सर्पस्य वा बिरसु दर्शन तादृशानां ॥

सर्वेषु ते नमिषु सर्वमुपैति सौम्या
सर्वेषु तीर्थमिव सर्वजगोपजीव्याः ।
दधिक्षीरपूर्णघटतुल्य सदैव आर्या
शुद्धात्मदर्शनु सुमङ्गलु तादृशाना ॥

यैः पापमित्र परिवर्जित दीर्घरात्र
कल्यानमित्ररतनैश्च परिगृहीताः ।
पापं विवर्जयि निवेशयि बुद्धधर्मे
सफलं सुमङ्गलु सुदर्शनु तादृशाना ॥

ये कायसंवृत सुसंवृतकायदोषाः
ये वाचसंवृत सदा नवकीर्णवाचः ।
गुप्तेन्द्रिया सुनिभृताश्च मनःप्रसन्नाः
किं तादृशान वदनं प्रतिच्छादयित्वा ॥

वस्त्रासहस्र यदि छादयि आत्मभावं
चित्तं च येषु विवृतं न हिरी न लज्जा ।
न च येषु ईदृशगुणा नपि सत्यवाक्यं
नग्ने विनग्नतर ते विचरन्ति लोके ॥

याश्चित्तगुप्त सततेन्द्रियसंयताश्च
न च अन्यसत्त्वमनसा स्वपतीन तुष्टाः ।
आदित्यचन्द्रसदृशा विवृतप्रकाशा
किं तादृशान वदनं प्रतिच्छादयित्वा ॥

अपि च ।

जानन्ति आशयु मम ऋषयो महात्मा
परचित्तबुद्धिकुशलास्तथ देवसंघाः ।
यथ मह्य शीलगुणसंवरु अप्रमादो
वदनावगुण्ठनमतः प्रकरोमि किं मे ॥

अश्रौषीद्भिक्षवो राजा शुद्धोदनो गोपायाः शाक्यकन्याया इमामेवंरूपां सर्वां गाथां प्रतिभाननिर्देशं श्रुत्वा च पुनस्तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातोऽनेकरत्नप्रत्युप्तेन दूष्ययुगेन कोटीशतसहस्रमूल्येन च मुक्ताहारेणाभिजातलोहितमुक्ताप्रत्युप्तया च सुवर्णमालया गोपां शाक्यकन्यामभिच्छाद्यैनमुदानमुदानयति स्म ।

यथा च पुत्रो मम भूषितो गुणैः तथा च कन्या स्वगुणा प्रभासते ।
विशुद्धसत्त्वौ तदुभौ समागतौ समेति सर्पिर्यथ सर्पिमण्डे ॥ इति ॥

(अनुपूर्वेण यथा पूर्ववद्बोधिसत्त्वप्रमुखा स्वपुरं प्रक्रामन्त)

॥इति श्रीललितविस्तरे शिल्पसंदर्शनपरिवर्तो नाम द्वादशमोऽध्यायः॥

इति हि भिक्षव आत्मकृतहर्षमुदीरयन्त आगता आसन् बोधिसत्त्वस्यान्तःपुरमध्यगतस्यानेकैर्देवैर्नागयक्षगन्धर्वासुरगरुडकिन्नरमहोरग-

शक्रब्रह्मलोकपालाः । ये बोधिसत्त्वस्य पूजाकर्मणि औत्सुक्यमापत्स्यन्ते स्म ॥

तत्र भिक्षवोऽपरेण समयेन सर्वकुलानां देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगशक्रब्रह्मलोकपालानामेतदभवत् । अतिचिरं बतायं सत्पुरुषोऽन्तःपुरे विलम्बितो ये चास्येमे दीर्घरात्रं परिपाचिताः सत्त्वाश्चतुर्भिः सग्रहवस्तुभिर्दानेन प्रियवाक्येनार्थक्रियया समानार्थतया यस्य बोधिप्राप्तस्य धर्मं देशितमाज्ञास्यन्ति तत्सहैव च तानि धर्मभाजनानि सर्वाण्यन्तर्हितानि भविष्यन्ति । बोधिसत्त्वश्च पश्चादभिनिष्क्रम्यानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते ॥

ततस्ते सगौरवाः सप्रतीक्षाः प्राञ्जलीभूता बोधिसत्त्वं नमस्यन्ति स्म । एवमाभिप्रायाश्चोदीक्षमाणा स्थिता अभूवन् । कदा च नाम तद्भविष्यति यद्वम वरप्रवरं शुद्धसत्त्वमभिनिष्क्रामन्त पश्येमाभिनिष्क्रम्य च तस्मिन्महाद्रुमराजमूलेऽभिनिषद्य सबलं मारं धर्षयित्वानुत्तरां सम्यक्संबोधिमभिसंबुद्धं दशभिस्तथागतबलैः समन्वागतं चतुर्भिश्च तथागतवैशारद्यैः समन्वागतमष्टादशभिश्चावेणिकैर्बुद्धधर्मैः समन्वागतं त्रिपरिवर्तद्वादशाकारमनुत्तरं धर्मचक्रं प्रवर्तयन्त महता बुद्धविक्रीडितेन सदेवमानुषासुरलोकं यथाधिमुक्त्या सुभाषितेन संतोषयन्तमिति ॥

तत्र भिक्षवो बोधिसत्त्वो दीर्घरात्रमसंख्येयान्कल्पानुपादाय सततं समितमपरप्रणेयोऽभूत् । सर्वलौकिकलोकोत्तरेषु धर्मेषु स्वयमेवाचार्यः सर्वकुशलमूलधर्मचर्यासु दीर्घकालं च कालज्ञो वेलाज्ञः समयज्ञोऽभूदच्युतोऽभिज्ञः पञ्चाभिज्ञाभिः समन्वागतोऽभूत् । ऋद्धिपादविक्रीडितः सर्वेन्द्रियकुशलः कालाकालज्ञः कालवेदी महा-

सागर इव प्राप्तां वेलां नातिक्रामति स्म ॥ सो ऽभिज्ञज्ञानबलेन समन्वागतः स्वयमेव सर्वं जानाति स्म । अस्यायं कालः प्रग्रहस्यायं कालो निग्रहस्यायं कालः संग्रहस्यायं कालो ऽनुग्रहस्यायं काल उपेक्षाया अयं कालो भाषितस्यायं कालस्तूष्णीभावस्यायं कालो निष्क्रम्यस्यायं कालः प्रव्रज्याया अयं कालः स्वाध्यायस्यायं कालो योनिशोमनस्कारस्यायं कालः प्रविवेकस्यायं कालः क्षत्रियपर्षदमुपसंक्रमितुं पेयालं यावदयं कालो ब्राह्मणगृहपतिपर्षदमुपसंक्रमितुं । अयं कालो देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगशक्रब्रह्मलोकपालभिक्षुभिक्षुण्युपासकोपासिकापर्षदमुपसंक्रमितुं । अयं कालो धर्मदेशनाया अयं कालः प्रतिसंलयनस्य । सर्वत्र बोधिसत्त्वो नित्यकालं कालज्ञो भवति स्म । कालवेषी ॥

अथ च पुनर्भिक्षवो धर्मताप्रतिलम्भ एष चरमभाविकानां बोधिसत्त्वानां यदवश्यं दशदिग्लोकधातुस्थितैर्बुद्धैर्भगवद्भिरन्तःपुरमध्यगताः संगीतितूर्यनिर्नादितैरेभिरेवंरूपैर्धर्ममुखैः संचोदितव्या भवन्ति ॥

तत्रेदमुच्यते ।

ये सत्त्वाग्रा दशदिग्लोके तेषु विशेषात्तत्र रतितुरियैः ।
गाथा गीता इम रतिमधुरा संचोदिन्ती नरवरप्रवरं ॥
पूर्वि तुभ्यं अयु क्षतु प्रणिधी दृष्ट्वा सत्त्वान्दुःखशतभरितां ।
लेनं त्राणं जगनिजशरणे भेष्ये नाथो हितकरु परमः ॥
साधो वीरा स्मर चरिपुरिमां या ते आसीज्जगहितप्रणिधिः ।
कालो वेला अयु तव समयो निष्क्रम्याही ऋषिवरप्रवरा ॥

यस्यार्थे ते धनवरविविधा त्यक्ता पुर्वे शिरकरचरणा ।
भेष्ये बुद्धो नरमरुदमको लोकस्याग्रो गुणशतनिचितः ॥
त्वं शीलेन व्रततपचरितः त्व क्षान्तीये जगहितकरणः ।
त्वं वीर्येणा शुभगुणनिचितो ध्याने प्रज्ञे न तु समु त्रिभवे ॥
क्रोधाविष्टा खिलमलबहुला ते मैत्रीये त्वयि स्फुट सुगता ।
कारुण्यं ते बहुविधमबुधे मिथ्यात्विषू शुभगुणरहिते ॥
पुण्यज्ञाने शुभनिचितात्मा ध्यानाभिज्ञो प्रतपसि विरजो ।
ओभासेसी दश दश दिशतो मेघामुक्तः शशिरिव विमलः ॥
एते चान्ये बहुविधरुचिरा तूर्यघोषा जिनरुतरवना ।
ये चोदेन्ती सुरनरमहितं निष्क्रम्याही अयु तव समयु ॥ इति ॥

बोधिसत्त्वस्य खलु पुनर्भिक्षवस्तस्मिन्गृहवरप्रधाने सर्वोपकरणसमृद्धिसमुदिते यथाभिप्रायसुखविहारानुकूले अमरपुरभवनप्रकाशे वितर्दिनिर्यूहतोरणगवाक्षहर्म्यकूटागारप्रासादवरप्रवरे सर्वरत्नविचित्रालंकारविविधभक्तिसुविभक्ते उच्छ्रितछत्रध्वजपताकानेकरत्नकिङ्किणीजालसमलंकृते अनेकपट्टदामशतसहस्राभिप्रलम्बिते नानारत्नप्रत्युप्ते मुक्ताहाराभिप्रलम्बिते विचित्रपट्टरत्नसंक्रमोपशोभिते अवसक्तपट्टमाल्यदामकलापे गन्धघटिकानिर्धूपिते अवश्यायपटविततविताने सर्वर्तुकपुष्पपरमसुगन्धिसुरुचिराभिप्रकीर्णपुष्करिणीपुण्डरीकनवनलिनीजालसंस्थानपरिभोगबहुले पत्रगुप्तशुकसारिककोकिलहंसमयूरचक्रवाककुनालकलविङ्कजीवंजीवकादिनानाविधद्विजगणमधुरस्वरनिकूजिते नीलवैडूर्यमये धरणीतलसंस्थानपरिभोगे सर्वरूपप्रतिभाससंदर्शने अतृप्तनयनाभिरम्ये परमप्रीतिप्रामोद्यसंजनने तस्मिन्गृहवरप्रधाने ऽध्यावसतो

बोधिसत्त्वस्योदारवरशरणभवननिवासिनो ऽमलविमलनिर्मलाङ्गस्यामुक्तमाल्याभरणस्य प्रवरसुरभिगन्धानुलेपनानुलिप्तगात्रस्य शुक्लशुभविमलविशुद्धनिर्मलवस्त्रप्रावृतशरीरस्यानेकदिव्यदूष्यशूक्ष्मसुविन्यस्तमृदुकाचिलिन्दिकसुखसंस्पर्शवराङ्गरचितशयनवरतलाभिरूढस्यामरवधूभिरिव सर्वतोऽनवद्याप्रतिकूलदर्शनशुभोपचारचरितस्याभिरूपान्तःपुरमध्यगतस्य शङ्खभेरीमृदङ्गपणवतुणववीणावल्लकिसम्पताडकिपललनकुलसुघोषकमधुरवेणुनिर्नादितघोषरुतनानातूर्यसंगीतिसंप्रयोगप्रतिबोधितस्य ये च नारीगणाः स्निग्धमधुरमनोज्ञस्वरवेणुनिर्नादितनिर्घोषरुतेन बोधिसत्त्वं प्रतिसंबोधयन्ति स्म ॥ तेषां दशदिगवस्थितानां बुद्धानां भगवतामधिस्थानेन तेभ्यो वेणुतूर्यनिर्नादनिर्घोषरुतेभ्य इमा बोधिसत्त्वस्य संचोदना गाथा निश्चरन्ति स्म ।

या नार्यो मुदितमनाः प्रसन्नचित्ता
वेणुभ्यो मधुरमनोरमं रणन्ते ।
आवेशाद्दशदिग्गतां जिनोत्तमानां
गाथेमा विविध विचित्रचित्ररूपाः ॥

पूर्वे ते अयु (क्रतु) पणिधी अभूषि वीरा
दृष्ट्वेमां जनत सदा अनाथभूतां ।
शोचिष्ये जरमरणात्तथान्यदुःखाद्
बुद्धित्वा पदमजरं परं अशोकं ॥ ० ॥

तत्साधो पुरवर इत शीघ्रं निष्क्रम्या पुरिमऋषिभि चीर्णं ।
आक्रम्या धरणितलप्रदेशं संबुद्ध्या असदृशजिनज्ञानं ॥

पूर्वे ते धनरतन विचित्रा त्यक्ताभूत्करचरणप्रियात्मा ।
एषो ऽद्या तव समयु महर्षे धर्मौघं जगि विभज अनन्तं ॥
शीलं ते शुभविमलमखण्डं पूर्वान्ते वर सततमभूषी ।
शीलेनानतिसदृशु महर्षे सोचेही जगु विविधकिलेशैः ॥
क्षान्तीये भव शतचरितस्त्वं क्षान्त्यास्ते जगि विविधदुरुक्ताः ।
क्षान्तीये क्षमदमनिरतात्मा नैष्क्रम्ये मति कुरु द्विपदेन्द्रा ॥
वीर्यं ते दृढमचलमकम्प्यं पूर्वान्ते पृथु सुगत अभूवन् ।
धर्षित्वा नमुचिशठससैन्यं सोषिष्ये क्षय सकलअपायात् ॥
यस्यार्थे व्रततप चरितस्त्वं ध्यायित्वा कलिकलुषकिलेषां ।
त्वं वर्षा अमृतजलममोघं तर्पेही चिरतृषितअनाथां ॥
तां पूर्वां गिरवरमनुचिन्त्या निष्क्रम्या पुरवर इत शीघ्रं ।
बुद्धित्वा पदममृतमशोकं तर्पिष्ये अमृतरसि तृषार्त्तां ॥
प्रज्ञाया परिचरि कुशल त्वं ज्ञानं ते पृथु विपुलमनन्तं ।
मूढानां विमतिपथस्थितानां प्रज्ञाभां शुभरुचिर कुरु त्वं ॥
मैत्रायां भव शतचरितस्त्वं कारुण्ये वरमुदित उपेक्षे ।
यामेवा वरचरि चरितस्त्वं तामेवा चरि विभज जगस्य ॥
एवं ता दशदिश जिनतेजैर् गाथा वै गुणकुसुमविचित्राः ।
तूर्येभ्यो विविधमनुरवन्ते चोदिन्ती शयनगतकुमारं ॥ ० ॥

यद् पुन प्रमुदित रतिकर प्रमदा
सुरुचिर सुमधुर प्रभणिषु तुरियैः ।
अथ जिन दशदिशि सुरनरदमकाः
गिरिवरमनुरवि ततु रवि तुरियैः ॥

ज्ञात त्वयि हितकर बहुगुण जनतो
    निर्जिनितु जिनगुण विचरति गतिषू ।
स्मर स्मर पुरिमक व्रततपचरणा
    लघु व्रज द्रुमवरु स्पृश पदममृतं ॥

सुतृषित नरमरु जिनगुणरहिता
    त्वयि मतिप्रतिबलु अमृतरसदृदा ।
दशबलगुणधर बुधजनमहितं
    लघु त्वयि नरपति विभजहि अमृतं ॥

त्यजि त्वयि पुरि भवि धनमणिकनका
    सखि प्रियसुत महि सनगरनिगमा ।
शिरमपि त्यजि स्वकु करचरनयना
    जगति य हितकरु जिनगुणनिरता ॥

पुरि तुम नरवर सुतु नृपु यद्भू
    नरु तव अभिमुख इम गिरमवची ।
दद मम इम महि सनगरनिगमां
    त्यजि तद् प्रमुदितु न च मनु क्षुभितो ॥

पुरि तुम नरपति स्वकु द्विज यद्भू
    गुरुजनि परिचरि न च द्रुहि परतो ।
स्थपयिसु द्विजवर बहुजन कुशले
    च्युतु ततु भवगतु मरुपुरनिलयं ॥

पुरि तुम नृपसुत ऋषिवरु यद्भू
    छिनि तव तनुरुह कलिनृपु रुषितो ।

क्षत त्वयि कुलक्रिय न च मनु क्षुभितो
पयु तव स्रवि तद् करतलचरणैः ॥

स्थमु पुन ऋषिसुतु त्वयि पुरि यदभू
व्रतरतु गुरुभरु गिरिवरनिलये ।
हत भव नृपतिन विषक्षत इषुणा
क्षप तव तहि नृप न च मनु क्षुभितो ॥

पुरि तुम गुणधर मृगपति यदभू
गिरिनदिबऊजलि दुयमनु पुरुषो ।
हित भव त्वयि नरु स्थलपथि स्थपितो
उपनयि तव अरि न च मनु क्षुभितो ॥

पुरि तुम नरवर त्यजिसुतु यदभू
मणि तव प्रपतितु जलधरि विपुले ।
च्यवयितु क्षपयितु त्वय महउदधिं
लभि तद् धनमणि दृढबल वृषभी ॥

पुरि तुम सुपुरुष ऋषिवरु यदभू
द्विज तव उपगतु भव मम शरणं ।
भणि ऋषि द्विजवर मम रिपुउपने
त्यजि त्वय स्वकि तनु न च द्विज त्यजसे ॥

स्थमु ऋषि उपगतु पुरि द्रुमनिलये
रुचि भणि तरुरुह कति द्रुम गणये ।
सुविदित सुगणित यथ तहि किशला
तथ तव अवितथ समगिर रचिता ॥

सुकु लसु गुणधर पुरि द्रुमि वसतो
 व्ययगतु न च त्यजि क्रतु स्मरि पुरिमं ।
मरुपति प्रमुदितु तव गुण स्मरतो
 श्रियकरि द्रुमवरि यथरिव पुरिमा ॥

इति तव असदृश व्रततपचरणा
 बहुगुण गुणधर गुणपथि चरतो ।
त्यजि महि सनगरि अयु तव समयो
 लघु जगु स्थपयहि जिनगुणचरणे ॥ ० ॥

यद प्रमदरतना शुभवस्त्रा भूषितगात्रा
 वरप्रवरु तुरिया सुमनोज्ञा संप्रभणीषु ।
अथ दशसू दिशतो जिनतेजैर्गाथ विचित्रा
 इति रविषू मधुरा रुतघोषा तूर्यस्वरेभ्यः ॥

तव प्रणिधी पुरिमे बहुकल्पां लोकप्रदीपा
 जरमरणग्रसिते अहु लोके त्राणु भविष्ये ।
स्मर पुरिमप्रणिधिं नरसिंहा या ति अभूषी
 अयु समयो त्वमिहा द्विपदेन्द्रा निष्क्रमणाय ॥

भवनयुते त्वमिहा बहुदानं दत्तमनेकं
 धनकनका रतना शुभवस्त्रा रत्नविचित्रा ।
करचरणा नयना प्रियपुत्रा राज्यसमृद्धं
 त्वयि त्यजितं न च ते खिलदोषा याचनकेषु ॥

शिशुनृपति त्वमिहा शशिकेतो आसि सुदंष्ट्रो
 क्षपकरुणामनसो मणिचूडो चन्द्रप्रदीपः ।

इति प्रमुखा करिया दृढसूरो राजसुनेत्रो
बहु नृपति नयुता रतदाने त्वं सविकुर्वन् ॥
तव सुगता चरितो बहुकल्पां शीलचरीये
मणिरत्ना विमला सदृशाभूच्छीलविशुद्धिः ।
त्वयि चरता चमरी यथ बालं रक्षितु शीलं
छतु त्वमिहा जगति विपुलार्थं शीलरतेना ॥
गजवरु त्वमिहा रिपुलुब्धे विद्धु इषूणा
छपकरुणा जनिया अतिरौद्रे छादितु शोभे ।
परित्यजि ते रुचिराशुभदन्ता न च त्यजि शीलं
इति प्रमुखा करिया बहु तुभ्यं शीलविकुर्वी ॥
त्वयि सहिता जगतो ऽहितनेका दुःखसहस्रा
बहुकटुकावचनं वधबन्धा क्षान्तिरतेना ।
परिचारित पुरिमे नर ये ते सर्वसुखेना
पुन वधकास्तव ते ह अभूवन्तञ्च ति क्षान्तं ॥
गिरिप्रवरानिलये तुम नाथा ऋषु यदासी
हिमकिरणा सलिला भयभीतं त्वं नरु गृह्य ।
परिचरसि विविधाफलमूलैः सर्वसुखेना
लघु बधकां स तवा उपनेत्री तं च ति क्षान्तं ॥
दृढु संस्थितमचलमकम्प्यं वीर्यु तवासीत्
व्रततपसा विविधागुणज्ञानं एषत बोधिं ।
छतु अबलो नमुची वशवर्ती वीर्यबलेना
अयु समयो त्वमिहा नरसिंहा निष्क्रमणाय ॥

हयप्रवरु त्वमिहा पुरि आसी हेमसुवर्णो
लघु गगणि व्रजसे कृपजातो राक्षसिद्वीपं ।
व्यसनगतमनुजान्तद् गृह्या क्षेमि थपेसी
इति प्रमुखा करिया बहु तुभ्यं वीर्यविकुर्वा ॥

दमसमथे नियमाहतक्लेशा ध्यायिन अग्रा
लघु चपलं विषयै रतिलोलं चित्तु दमित्वा ।
कृतु स्वगुणो त्वमिहा जगतो ऽर्थे ध्यानरतेना
अथु समयो त्वमिहा वरसत्वा ध्यानविकुर्वा ॥

त्वं पुरिमे ऋषिसुस्थितु आसी ध्यानरतीये
नृपरहिता मनुजा त्वमु गृह्या राज्यभिषिञ्ची ।
दशकुशली जनिता थपिता ते ब्रह्मपथेषु
च्युतमनुजा व्रजिषू तद सर्वे ब्रह्मनिकेतं ॥

दिशिविदिशि विविधागतिज्ञाने त्वं सुविधिज्ञो
परचरिता जगति रुतज्ञाने इन्द्रियज्ञाने ।
नयविनये विविधामतिधारि पारगतस्त्वं
अथु समयो त्वमिहा नृपसूना निष्क्रमणाय ॥

त्वयि पुरिमा जनिता इम दृष्ट्वा दृष्टिविपन्ना
जरमरणाविविधाबहुदुःखे चक्रगता हि ।
भवविभवंकरणी ऋजुमार्गे स्वामनुबद्धा
हततमस त्वमिहा कृतु लोके अर्थु महन्तो ॥

इति विविधा रुचिरागुणयुक्ता गाथ विचित्रा
ततु रविषु तुरियेभी जिनतेजा चोदयि वीरं ।

दुःखभरितजनते इह दृष्ट्वा मा त्वमुपेक्षा
अयु समयो त्वमिहा वरबुद्धे निष्क्रमणाय ॥ ० ॥

विचित्रवस्त्ररत्नहार गन्धमाल्यभूषिता
प्रसन्नचित्त प्रेमजात नारियो प्रहर्षिता ।
प्रबोधयन्ति ये ऽग्रसत्त्व तूर्यसप्रवादितैः
जिनानुभावि एवरूप गाथ तूर्य निश्चरी ॥

यस्यार्थि तुभ्य कल्पनेक त्यक्तु त्यागदुस्त्यजा
सुचीर्ण शीलु क्षान्तिवीर्य ध्यानप्रज्ञभाविता ।
जगद्धितार्थ सो ति कालु सांप्रतं उपस्थितो
नैष्क्रम्यबुद्धि चिन्तयाशु मा विलम्ब नायक ॥

त्यक्तु पूर्वि रत्नकोश स्वर्णरूप्यभूषणा
यष्टा ति यज्ञ नैकरूप तासु तासु जातिषु ।
त्यक्त भार्यपुत्रधीत कायु राज्यु जीवितं
बोधिहेतुरप्रमेय त्यक्तु दुस्त्यजा त्वया ॥

अभूषि त्वं अदीनपुण्य राज विश्रुतश्रियो
निमिन्धरो निमिश्च कृष्ण(बन्धु) ब्रह्मदत्त केशरी ।
सहस्रयज्ञ धर्मचिन्ति अर्चिमान्दृढधनु
सुचिन्तितार्थ दीनसत्त्व ये ति त्यक्त दुस्त्यजा ॥

सुतसोम दीप्तवीर्य पुष्यरश्मि यो सो ऽभू मह
त्यागवन्तु स्थामवन्तु यः कृतज्ञ त्वं अभूः ।
राजर्षि चन्द्ररूपवन्तु सूर सत्यवर्धनो
सुभाषितं गवेषि रजि असि सुमतिं च सूरतो ॥

चन्द्रप्रभो विशेषगामि रेणुभूदिशांपति
    प्रदानसूर काशिराजु रत्नचूड शान्तगः ।
एति चान्यि पार्थिवेन्द्र येभि त्यक्त दुस्त्यजा
    यथा ति वृष्ट त्यागवृष्टि एष धर्म वर्षही ॥

दृष्टा ति पूर्वि सत्त्वसार गङ्गवालुकोपमा
    कृता ति तेष बुद्धपूज अप्रमेयचिन्तिया ।
वराग्रबोधि एषमान सत्त्वमोक्षकारणाद्
    अयं स कालु प्राप्तु सूरु निष्क्रमा पुरोत्तमात् ॥

प्रथमेन ते अमोघदर्शि शालपुष्पपूजितो
    विरोचनः प्रसन्नचित्त प्रेक्षित क्षणान्तरं ।
हरीतकी च एक दत्त दुन्दुभिस्वराय ते
    तृणोल्क गृह्य धारिता ति दृष्ट चन्दनं गृहं ॥

पुरप्रवेशि रेणु दृष्ट क्षिप्तु चूर्णमुष्टिका
    धर्मेश्वराय साधुकारु दत्तु धर्मभासतो ।
नमो नमः समन्तदर्शि दृष्ट वाच भाषिता
    महार्चिस्कन्धि स्वर्णमाल क्षिप्त हर्षितेन ते ॥

धर्मध्वजो दशाप्रदानि रोधु मुञ्च मुष्टिना
    अशोकपुष्पि ज्ञानकेतु यवागुपान सारथिः ।
रत्नशिखी च दीपदानि पद्मयोनि ओषधी
    सर्वाभिभूस्य मुक्तहारि पद्मदानि सागरो ॥

वितानदानि पद्मगर्भि सिंहु वर्षसंस्तरे
    सालेन्द्रराज सर्पिदानि क्षीरत्यागि पुष्पितो ।

यशोदत्तु कुरुण्टपुष्पि सत्यदर्शि भोजने
कायुप्रणामि ज्ञानमेरु नागदत्तु चीवरे ॥

अत्युच्चगामि चन्दनाग्रि तिक्ष्णलोह मुष्टिना
महावियूह पद्मदानि रश्मिराज रत्नभिः ।
शाक्यमुनि च सुवर्णमुष्टि इन्द्रकेतु संस्तुतो
सूर्याननो वतंसकेहि स्वर्णपट्टि सूमती ॥

नागाभिभू मणिप्रदानि पुष्य दूष्यसस्तरे
भैषज्यराजु रत्नछत्रि सिहकेतु आसने ।
गुणाग्रधारि रत्नजालि सर्ववादि काश्यपो
गन्धाग्रि चूर्णि मुक्त अर्चिकेतु पुष्पचैत्यके ॥

अक्षोभ्यराज कूटागारि माल्य लोकपूजितो
तगरशिखि च राजत्यागि सर्वगन्धि दुर्जयो ।
महाप्रदीप आत्मत्यागि भूषणे पद्मोत्तरो
विचित्रपुष्पि धर्मकेतु दीपकारि उत्पलैः ॥

एति चान्यि सत्त्वसार ये ति पूर्वपूजिता
नानारूपविचित्र पूज अन्यजन्यकुर्वता ।
स्मराहि ते अतीतबुद्ध ता च पूज शास्तुनां
अनाथसत्त्व शोकपूर्ण मा उपेक्षि निष्क्रमा ॥

दीपङ्करे ति दृष्टमात्रि लब्ध क्षान्ति उत्तमा
अभिज्ञ पञ्च अच्युता ति लब्ध आनुलोमिका ।
अतोत्तरेण एकमेक बुद्ध पूजचिन्तिया
प्रवर्तिता असंख्यकल्प सर्वलोकधातुषू ॥

क्षीणा ति कल्प अप्रमेय ते च बुद्ध निर्वृता
तवापि सर्व आत्मभावि ते च नाम क्व गता ।
क्षयान्तधर्मि सर्वि भावु नास्ति नित्यु संस्कृते
अनित्य कामराज्यभोग निष्क्रमा पुरोत्तमात् ॥

जरा च व्याधि मृत्यु एन्ति दारुणो महाभया
हुताशनो व उग्रतेज भीमकल्पसंक्षये ।
क्षयान्तधर्मि सर्वि भावु नास्ति नित्यु संस्कृते
सुकृच्छ्रप्राप्तसत्त्व ** निष्क्रमा गुणंधरा ॥ ० ॥

यद नारिगणास्तूणवीणरवैः विविधैस्तुरियै प्रतिबोधयिषु ।
सुखशयनगतं मनुजाधिपतिं तद तूर्यरवौ अयु निश्चरते ॥
ज्वलितं त्रिभवं जरव्याधिदुखैः मरणाग्निप्रदीप्तमनाथमिदं ।
भवनि सरणे सद मूढ जगत् भ्रमती भ्रमरो यथ कुम्भगतो ॥
अध्रुवं त्रिभवं शरदभ्रनिभं नटरङ्गसमा जगि ऊर्मिचुति ।
गिरिनद्यसमं लघुशीघ्रजवं व्रजतायु जगे यथ विद्यु नभे ॥
भुवि देवपुरे त्रिअपायपथे भवतृष्णअविद्यवशा जनता ।
परिवर्तिषु पञ्चगतिष्वबुधाः यथ कुम्भकरस्य हि चक्रभ्रमी ॥
प्रियरूपवरैः सह स्निग्धरुतैः शुभगन्धरसै वरस्पर्शसुखैः ।
परिषिक्तमिदं कलिपाशजगत् मृगलुब्धकपाशि यथैव कपि ॥
सभया सरणा सद वैरकराः बहुशोक उपद्रव कामगुणाः ।
असिधारसमा विषपत्रनिभाः जहितार्यजनैर्यथ मीढघटाः ॥
स्मृतिशोककरास्तमसीकरणाः भयहेतुकरा दुखमूल सदा ।
भवतृष्णलताय विवृद्धकराः सभया सरणा सद कामगुणाः ॥

यथ अग्निखदा ज्वलिता सभयाः तथ काम इमे विदितार्यजनैः ।
महपङ्कसमा असिसुन्धुसमाः मधुदिग्ध इव क्षुरधार यथा ॥
यथ सर्पिसरो यथ मीढघटाः तथ काम इमे विदिता विदुषां ।
तथ सूलसमा द्विजपेशिसमाः यथ स्वान करङ्कसवैरमुखा ॥
उदचन्द्रसमा इमि कामगुणाः प्रतिबिम्ब इवा गिरिघोष यथा ।
प्रतिभाससमा नटरङ्गसमाः तथ स्वप्नसमा विदितार्यजनैः ॥
क्षणिका वसिका इमि कामगुणाः तथ मायमरीचिसमा अलिकाः ।
उदबुद्बुदफेनसमा वितथा परिकल्पसमुत्थित बुद्धबुधैः ॥
प्रथमे वयसे वररूपधरः प्रिय इष्टमतो इय बालचरी ।
जरव्याधिदुखै हततेजवपुं विजहन्ति मृगा इव शुष्कनदीं ॥
धनधान्यवरो बहुद्रव्यबली प्रिय इष्टमतो इय बालचरी ।
परिहीनधनं पुन कृच्छ्रगतं विजहन्ति नरा इव शून्यटवीं ॥
यथ पुष्पद्रुमो सफलेव द्रुमो नरु दानरतस्तथ प्रीतिकरो ।
धनहीन जरार्दितु याचनको भवते तद अप्रियु गृध्रसमः ॥
प्रभु द्रव्यबली वररूपधरः प्रियसंगमनेन्द्रियप्रीतिकरो ।
जरव्याधिदुखार्दितु क्षीणधनो भवते तद अप्रियु मृत्युसमः ॥
जरया जरितः समतीतवयो द्रुम विद्युहतेव यथा भवति ।
जरजीर्ण अगारु यथा सभयो जरनिःसरणं लघु ब्रूहि मुने ॥
जर शोषयते नरनारिगणं यथ मालुलता घनशालवनं ।
जर वीर्यपराक्रमवेगहरी जर पङ्कनिमग्न यथा पुरुषो ॥
जर रूपसुरूपविरूपकरी जर तेजहरी बलस्थामहरी ।
सहसौख्यहरी परिभावकरी जर मृत्युकरी जर ओजहरी ॥

बहुरोगशतै घनव्याधिदुखैः उपसृष्ट जगज्ज्वलतेव मृगाः ।
जरव्याधिगतं प्रसमीक्ष्य जगत् दुखनिःसरणं लघु देशयही ॥
शिशिरे हि यथा हिमधातु महान् तृणगुल्मवनौषधि ओजहरो ।
तथ ओजहरो अहुव्याधिजरो परिहीयति इन्द्रियरूपबलं ॥
धनधान्यमहार्थक्षयान्तकरो परितापकरः सहव्याधिजरो ।
प्रतिघातकरः प्रियु द्वेषकरः परिदाहकरो यथ सूर्य नभे ॥
मरणं च्यवनं चुतिकालक्रिया प्रियद्रव्यजनेन वियोगु सदा ।
अपुनागमनं च असंगमनं द्रुमपत्रफला नदिस्रोत यथा ॥
मरणं वशितामवशीकुरुते मरणं हरते नदि दारु यथा ।
असहायु नरो व्रजते ऽद्वितियो स्वककर्मफलानुगता विवशः ॥
मरणो ग्रसते बहुप्राणिशतं मकरेव जलाहरि भूतगणं ।
गरुडो उरगं मृगराजु गजं ज्वलनेव तृणोषधिभूतगणं ॥
इम ईदृशके बहुदोषशतैः जगु मोचयितुं कृत या प्रणिधि ।
स्मर तां पुरिमां प्रणिधानचरीं अयु कालु तवा अभिनिष्क्रमितुं ॥०॥

यद नारिगण प्रहर्षितो बोधयती तुरियैर्महामुनिं ।
तद गाथ विचित्र जिस्वरी तूर्यशब्दात् सुगतानुभावतः ॥
लघु तद्व्रजति सर्वसंस्कृतं अचिरस्थायि नभेव विद्युतः ।
अयु कालु तवा उपस्थितः समयो निष्क्रमणाय सुव्रत ॥
संस्कार अनित्य अध्रुवाः आमकुम्भोपम भेदनात्मकाः ।
परकेरकयाचितोपमाः पांशुनगरोपम तावकालिकाः ॥
संस्कार प्रलोपधर्मिमे वर्षकालि चलितं व लेपनं ।
नदिकूल इवा सवालुकं प्रत्ययाधीनस्वभावदुर्बलाः ॥

संस्कार प्रदीपअर्चिवत् क्षिप्रउत्पत्तिनिरोधधर्मिकाः ।
अनवस्थितमारुतोपमाः फेनपिण्डेव असार दुर्बलाः ॥
संस्कार निरीह शून्यकाः कदलीस्कन्धसमा निरीक्षतः ।
मायोपमचित्तमोहना बालउल्लापन उक्तमुष्टिवत् ॥
हेतूभि च प्रत्ययेभि चा सर्वसंस्कारगतं प्रवर्तते ।
अन्योन्यप्रतीत्यहेतुतः तदिदं बालजनो न बुध्यते ॥
यथ मुञ्जप्रतीत्यवल्वजं रज्जु व्यायामबलेन वर्तिता ।
घटियन्त्र सचक्र वर्तते एष एकैकस नास्ति वर्तना ॥
तथ सर्वभवाङ्गवर्तिनी अन्यमन्योपचयेन निश्रिता ।
एकैकस तेषु वर्तिनी पूर्वपरान्तत नोपलभ्यते ॥
बीजस्य सतो यथाङ्कुरो न च यो बीज स चैव अङ्कुरो ।
न च ततो न चैव तत् एवमनुच्छेद अशाश्वत धर्मता ॥
संस्कार अविद्यप्रत्ययाः ते संस्कारि न सन्ति तत्त्वतः ।
संस्कार अविद्य चैव हि शून्य एके प्रकृती निरीहकाः ॥
मुद्रात्प्रतिमुद्र दृश्यते मुद्रसंक्रान्ति न चोपलभ्यते ।
न च तत्र न चैव शाश्वतो एव संस्कारानुच्छेद शाश्वताः ॥
चक्षुश्च प्रतीत्यरूपतः चक्षुविज्ञानमिहोपजायते ।
न चक्षुषि रूपनिश्रितं रूपसंक्रान्ति न चैव चक्षुषि ॥
नैरात्म्यशुभाश्च धर्मिमे पुनरात्मेति शुभाश्च कल्पिताः ।
विपरीतमसद्विकल्पितं चक्षुविज्ञान ततोपजायते ॥
विज्ञान निरोधुसंभवं विज्ञानोत्पादव्ययं विपश्यति ।
अकहिं च गतं अनागतं शून्य मायोपम योगि पश्यति ॥

अरणिं यथ चोत्तरारणिं हस्तव्यायाम चयेभि संगति ।
इति प्रत्ययतो ऽग्नि जायते जातु क्रतार्थु लघु निरुध्यते ॥
अथ पण्डितु कश्चि मार्गते कुतयं आगतु कुत्र याति वा ।
विदिशो दिशि सर्वि मार्गतो नागति नास्य गतिश्च लभ्यते ॥
स्कन्धधात्वायतनानि धातवः तृष्ण अविद्या इति कर्मप्रत्यया ।
सामग्रि तु सत्त्वसूचना स च परमार्थ तु नोपलभ्यते ॥
कण्ठोष्ठप्रतीत्य तालुकं जिह्वापरिवर्ति अक्षरा ।
न च कण्ठगता न तालुके अक्षरैकैक तु नोपलभ्यते ॥
सामग्रिप्रतीत्यतश्च सा वाच मनबुद्धिवशेन निश्चरी ।
मनवाच अदृश्यरूपिणी बाह्यतो ऽभ्यन्तर नोपलभ्यते ॥
उत्पादव्यय विपश्यतो वाचरुतघोषस्वरस्य पण्डितः ।
क्षणिकां वशिकां तदादृशी सर्वावाचप्रतिश्रुतकोपमां ॥
यथ तन्त्रिप्रतीत्य दारु च हस्तव्यायाम त्रयेभि संगति ।
तुणवीणसुघोषकादिभिः शब्दो निश्चरते तदुद्भवः ॥
अथ पण्डितु कश्चि मार्गते कुतयं आगतु कुत्र याति वा ।
विदिशो दिशि सर्वि मार्गतः शब्दगमनागमन न लभ्यते ॥
तथ हेतुभि प्रत्ययेभि च सर्वसंस्कारगतं प्रवर्तते ।
योगी पुन भूतदर्शनात् शून्यसंस्कारनिरीह पश्यति ॥
स्कन्धायतनानि धातवः शून्यअध्यात्मिक शून्यबाह्यकाः ।
सत्त्वात्मविविक्तमनालया धर्माकाशस्वभावलक्षणाः ॥
इय ईदृश धर्मलक्षणा बुद्ध दीपंकरदर्शने त्वया ।
अनुबुद्ध स्वयं यथात्मना तथ बोधेहि सदेवमानुषां ॥

विपरीतअभूतकल्पितैः   रागदोषैः परिदह्यते जगत् ।
कृपमेघसमाम्बुशीतलां   मुञ्च धाराममृतस्य नायका ॥
त्वयि यस्य कृतेन पण्डिता   दत्तु दानं बहुकल्पकोटिषु ।
संप्राप्य हि बोधिमुत्तमां   आर्यधनसंग्रह करिष्य प्राणिनां ॥
तां पूर्वचरीमनुस्मरा   नार्यधनहीन दरिद्र दुःखितां ।
मा उपेक्षहि सत्त्वसारथे   आर्यधनसंग्रहि तेषु कुर्वहि ॥
त्वयि शील सदा सुरक्षितं   पिथनार्थाय अपायभूमिनां ।
स्वर्गामृतद्वारमुत्तमां   दर्शयिष्ये बहुसत्त्वकोटिनां ॥
तां पूर्वचरीमनुस्मरा   बद्धा द्वार निरयाय भूमिनां ।
स्वर्गामृतद्वार मुञ्चही   ऋध्यहि शीलवतो चिन्तितं ॥
त्वयि क्षान्ति सदा सुरक्षिता   प्रतिघक्रोधसमार्थ देहिनां ।
भावार्णव सत्त्वतारिया   स्थापयिष्ये सिवि क्षेमि निर्ज्वले ॥
तां पूर्वचरीमनुस्मरा   वैरव्यापादविहिंसआकुलां ।
मा उपेक्ष विहिंसचारिणः   क्षान्तिभूमीय स्थपे इमं जगत् ॥
त्वयि वीर्य यदर्थ सेवितं   धर्मनावं समुदानयित्वना ।
उत्तार्य जगद्भवार्णवात्   थापयिष्ये सिवि क्षेमि निर्ज्वले ॥
तां पूर्वचरीमनुस्मरा   चतुरोघैरिव मुह्यते जगत् ।
लघु वीर्यबलं पराक्रमा   सत्त्व संतारयही अनायकां ॥
त्वय ध्यानकिलेशध्येषणा   भाविता यस्य कृतेन सूरता ।
भ्रान्तेन्द्रिय प्राकृतेन्द्रियां   क्वापि चित्तार्थपथे स्थपेष्यहं ॥
तां पूर्वचरीमनुस्मरा   क्लेशजालैरिहमाकुलं जगत् ।
मा उपेक्षहि क्लेशपद्रुतां   ध्यानैकाग्रि स्थपेहिमां प्रजां ॥

त्वयि प्रज्ञा पुरा सुभाविता   मोहविद्यान्धतमोवृते जगे ।
बहुधर्मशताभिलोकने   दास्ये चक्षुषि तत्वदर्शनं ॥
तां पूर्वचरीमनुस्मरा   मोहविद्यान्धतमोवृते जगे ।
ददही वरप्रज्ञासुप्रभा   धर्मचक्षुं विमलं निरञ्जनं ॥
इयमीदृश गाथ निश्चरी   तूर्यसंगीतिरवातु नारिणां ।
यं श्रुत्व मिद्धं विवर्जिया   चित्तु प्रेषेति वराग्रबोधये ॥ इति ॥

इति हि भिक्षवो ऽन्तःपुरमध्यगतो बोधिसत्त्वो ऽविरहितो ऽभूद्धर्मश्रवणेन । अविरहितो ऽभूद्धर्ममनसिकारेण । तत्कस्माद्धेतोः । तथा हि भिक्षवो बोधिसत्त्वो दीर्घरात्रं सगौरवो ऽभूत् । धर्मेषु धर्मभानकेषु चाध्याशयेन धर्मार्थिको धर्मकामो धर्मरतिरतो ऽभूत् । धर्मपर्येष्ट्यतृप्तो यथाश्रुतधर्मसंप्रकाशकः । अनुत्तरो महाधर्मदानपतिः । निरामिषधर्मदेशको धर्मदानेनामत्सरः । आचार्यमुष्टिविगतो धर्मानुधर्मप्रतिपन्नो धर्मप्रतिपत्तिशूरः । धर्मलयनो धर्मत्राणो धर्मशरणो धर्मप्रतिशरणो धर्मपरायणः । धर्मनिध्याप्तिः क्षान्तिनिर्यातः प्रज्ञापारमिताचरित उपायकौशल्यगतिंगतः ॥

तत्र भिक्षवो बोधिसत्त्वो महोपायकौशल्यविक्रीडितेन सर्वान्तःपुरस्य यथाधिमुक्त्या ईर्यापथमुपदर्श्य पौर्विकाणां च बोधिसत्त्वानां लोकविषयसमतिक्रान्तानां लोकानुवर्तनक्रियाधर्मतामनुवर्त्य दीर्घरात्रं सुविदितकामदोषः सत्त्वपरिपाकवशादकामात्कामोपभोगं संदर्श्य अपरिमितकुशलमूलोपचयपुण्यसंभारबलविशेषणासदृशीलोकाधिपतेयतां संदर्श्य देवमनुष्यातिक्रान्तं सारोदारविविधविचित्ररूपशब्दगन्धरसस्पर्शपरमरतिरमणीयं कामरतिसौख्यमुपदर्श्य सर्वकाम-

रतिस्वविषयेष्वपर्यन्तत्वात् । स्वचित्तवशवर्तितां संदर्श्य पूर्वप्रणिधानबलसहायकुशलमूलोपचितान्सत्त्वान्समानसवासतया परिपाच्य सर्वलोकसंक्लेशमलासंक्लिष्टचित्ततयान्तःपुरमध्यगतो यथाभिनिमन्त्रितस्य सत्त्वधातोः परिपाककालमवेक्षमाणो भूयस्या मात्रया बोधिसत्त्वस्तस्मिन्समये पूर्वप्रतिज्ञामनुस्मरति स्म । बुद्धधर्मांश्चामुखीकरोति स्म । प्रणिधानबलं चाभिनिर्हरति स्म । सत्त्वेषु च महाकरुणामवक्रामति स्म । सत्त्वप्रमोक्षं च चिन्तयति स्म । सर्वसपदो विपत्तिपर्यवसाना इति प्रत्यवेक्षते स्म । अनेकोपद्रवभयबहुलं च ससारमुपपरीक्षते स्म । मारकलिपाशांश्च संछिनत्ति स्म । ससारप्रबन्धाच्चात्मानमुच्चारयति स्म । निर्वाणे च चित्त संप्रेषयति स्म ॥

तत्र भिक्षवो बोधिसत्त्वः पूर्वान्तत एव सुविदितसंसारदोषः सस्कृतेनाध्याशयेनानर्थिकः सर्वोपादानपरिग्रहैरनर्थिको बुद्धधर्मनिर्वाणाभिमुखः संसारपराङ्मुखस्तथागतगोचराभिरतः । मारविषयगोचरासंसृष्टः । आदीप्तभवदोषदर्शी त्रैधातुकान्निःशरणाभिप्रायः संसारदोषादीनवनिःशरणकुशलः प्रव्रज्याभिलाषी निष्क्रमणाभिप्रायो विवेकनिम्नो विवेकप्रवणो विवेकप्राग्भारः । आरण्यप्रारण्याभिमुखः प्रविवेकप्रशमाभिकाङ्क्षी आत्मपरहितप्रतिपन्नः । अनुत्तरप्रतिपत्तिशूरो लोकस्यार्थकामो हितकामः सुखकामो योगक्षेमकामो लोकानुकम्पको हितैषी मैत्रीविहारी महाकारुणिकः । संग्रहवस्तुकुशलः सततसमितमपरिखिन्नमानसः सत्त्वपरिपाकविनयकुशलः सर्वसत्त्वेष्वेकपुत्रकप्रेमानुगतमनसिकारः सर्ववस्तुनिरपेक्षपरित्यागी दानसंविभागरतः प्रयुक्तत्यागः प्रयतपाणित्यागशूरो यष्टयज्ञः सुसमृद्धपुण्यः सुसंगृहीतपुण्यः

परिष्कारविगतमलामात्सर्यसुनिगृहीतचित्तो ऽनुत्तरो महादानपतिर्दत्वा च विपाकाप्रतिकाङ्क्षी प्रदानशूरः। इच्छामहेच्छालोभद्वेषमदमानमोहमात्सर्यप्रमुखसर्वारिक्लेशगणप्रत्यर्थिकनिग्रहायाभ्युत्थितः। सर्वज्ञताचित्तोत्पादप्रबन्धाचलितः। महात्यागचित्तसंनाहसुसंनद्धः। लोकानुकम्पको हितैषी वर्मितकवचितवीर्यः सत्त्वप्रमोचालम्बनमहाकरुणाबलविक्रमपराक्रमः। अविवर्तिकसर्वसत्त्वसमचित्तत्यागप्रहरणो यथाभिप्रायसत्त्वाशयसंतोषणो बोधिभाजनीभूतः कालानुसधर्मवेधी बोधिपरिणामप्रणिधिः। अनवनामितध्वजस्त्रिमण्डलपरिशोधनदानपरित्यागी ज्ञानवरवज्रदृढप्रहरणः सुनिगृहीतक्लेशप्रत्यर्थिकः शीलगुणचारित्रप्रतिपन्नः स्वारक्षितकायवाङ्मनस्कर्मान्तो ऽणुमात्रावद्यभयदर्शी सुपरिशुद्धशीलः। अमलविमलनिर्मलचित्तः सर्वदुरुक्तदुरागतवचनपथाक्रोशपरिभाषणकुत्सनताडनतर्जनवधबन्धनो ऽवरोधनपरिक्लेशालुडितचित्तो ऽक्षुभितचित्तः। क्षान्तिसौरभ्यसंपन्नः। अक्षतो ऽनुपहतो ऽव्यापन्नचित्तः। सर्वसत्त्वहितार्थायोत्तप्तवीर्यारम्भी दृढसमादानसर्वकुशलमूलधर्मसमुदानयनाप्रत्युदावर्त्यस्मृतिमान्सुसंप्रज्ञासुसमाहितो ऽविक्षिप्तचित्तो ध्यानैकाग्रमनसिकारो धर्मप्रविचयकुशलो लब्धालोको विगततमोऽन्धकारः। अनित्यदुःखात्मा शुभाकारपरिभावितचेताः। स्मृत्युपस्थानसम्यकप्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गमार्गार्यसत्यसर्वबोधिपक्षधर्मसुपरिकर्मकृतमनसिकारः समथविपश्यनासुपर्यवदातबुद्धिः प्रतीत्यसमुत्पादसत्यदर्शी सत्यानुबोधादपरप्रत्ययस्त्रिविमोक्षसुखविक्रीडितो मायामरीचिस्वप्नोदकचन्द्रप्रतिश्रुत्काप्रतिभासोपमसर्वधर्मनयावतीर्णः ॥

इति हि भिक्षवो बोधिसत्त्वस्यैवं भवति प्रतिकृत्यैवं धर्मविहार्यैवं गुणमाहात्म्यविहार्यैवं सत्त्वार्थाभियुक्तविहार्यभूत् ॥ भूयस्या मात्रया आभिर्दशदिग्बुद्धाधिस्थानतूर्यसंगीतिर्विनिःसृताभिर्गाथाभिः संचोदितः स तस्यां वेलायां पूर्वेषां च बोधिसत्त्वानां चरमभवोपगतानामन्तःपुरपरिपाचितानि चत्वारि धर्ममुखान्यामुखीकरोति स्म । कतमानि चत्वारि । यदिदं दानं प्रियवचनमर्थक्रियां समानार्थतां च । चतुःसंग्रहवस्तुप्रयोगनिर्हारविशुद्धिं च नाम धर्ममुखमामुखीकरोति स्म । चिरत्नवंशसाधारणाभिप्रायो विप्रणाशसर्वज्ञताचित्तप्रणिधानबलाधानावैवर्त्यविषयं च नाम धर्ममुखमामुखीकरोति स्म । सर्वसत्त्वापरित्यागाध्याशयमहाकरुणावतारतां च नाम धर्ममुखमामुखीकरोति स्म । सर्वबोधिपक्षधर्मपदे प्रभेदार्थाभिनिश्चयज्ञानसंसारबलविशेषसमुदानयमहाव्यूह च नाम धर्ममुखमामुखीकरोति स्म ॥ इमानि चत्वारि धर्ममुखान्यामुखीकृत्य बोधिसत्त्वः सर्वस्यान्तःपुरस्य परिपाचनार्थं तस्या वेलायां तथारूपमृद्ध्यभिसंस्कारमभिसंस्करोति स्म । यथारूपेण ऋद्ध्यभिसंस्कारेणाभिसंस्कृतेन तेभ्यः संगीतिरुतेभ्यो बोधिसत्त्वानुभावेनेमान्येवंरूपाणि धर्ममुखशतसहस्राणि निश्चरन्ति स्म । तद्यथा ।

उदारछन्देन च आशयेन    अध्याशयेना करुणाय प्राणिषु ।
उत्पद्यते चित्त वराग्रबोधये    शब्दे च रूपस्तुरियेभि निश्चरी ॥
श्रद्धा प्रसादो अधिमुक्ति गौरवं    निर्माणता ओनमना गुरूणां ।
परिपृच्छता किं कुशलं गवेषणा    अनुस्मृतीभावनु शब्द निश्चरी ॥

दानि दमे संयमशीलशब्दः क्षान्तीय शब्दस्तथ वीर्यशब्दः ।
ध्यानाभिनिर्हारसमाधिशब्दः प्रज्ञा उपायस्य च शब्द निश्चरी ॥
मैत्राय शब्दः करुणाय शब्दो मुदिता उपेक्षाय अभिज्ञशब्दः ।
चतुसंग्रहावस्तुविनिश्चयेन सत्त्वान परिपाचनशब्द निश्चरी ॥
स्मृतिरुपस्थानप्रभेदशब्दः सम्यक्प्रहाणास्तथ ऋद्धिपादाः ।
पञ्चेन्द्रिया पञ्चबलप्रभेदा बोध्यङ्गशब्दस्तुरियेभि निश्चरी ॥
अष्टाङ्गिको मार्गवलप्रभेदः समथस्य शब्दो ऽथ विपश्यनायाः ।
अनित्यदुःखार्त्तिअनात्मशब्दः अशुभार्त्तिशब्दो तुरियेभि निश्चरी ॥
विरागशब्दश्च विवेकशब्दः क्षयज्ञानशब्दो अनुत्पादशब्दः ।
अनिरोधशब्दश्च अनालयं च निर्वाणशब्दस्तुरियेभि निश्चरी ॥
इम एव रूपास्तुरियेभि शब्दः संबोधिशब्दश्चनुभाव निश्चरी ।
यं श्रुत्व सर्वा प्रमदानुशिक्षिता वराग्रसत्त्वे प्रणिधेन्ति बोधये ॥

इति हि भिक्षवो ऽन्तःपुरमध्यगतेन बोधिसत्त्वेन तानि चतुरशीतिस्त्रीसहस्राणि परिपाचितान्यभूवन् । अनुत्तरायां सम्यक्संबोधौ बहूनि च देवताशतसहस्राणि ये च तत्र संप्राप्ता अभूवन् ॥

तथाभिनिष्क्रमणकाले तस्मिन्समये बोधिसत्त्वस्य ह्रीदेवो नाम तुषितकायिको देवपुत्रो ऽनुत्तरायाः सम्यक्संबोधेः स रात्रौ प्रशान्तायां द्वात्रिंशता देवपुत्रसहस्रैः परिवृतः पुरस्कृतो येन बोधिसत्त्वस्योपस्थानप्रासादस्तेनोपसंक्रामदुपसंक्रम्य गगणतलगत एव बोधिसत्त्वं गाथाभिरध्यभाषत ।

च्युति दर्शिता अतियशा जन्म च संदर्शितं पुरुषसिंह ।
अन्तःपुरं विदर्शितु कृतानुवृत्तिस्त्वया लोके ॥

परिपाचिता ति बहवो देवमनुजलोकि धर्ममनुप्राप्य ।
अयमद्य कालसमयो निष्क्रम्ये मति विचिन्तेहि ॥
नहि बद्ध मोचयाती न चान्धपुरुषेन दर्शियति मार्गः ।
मुक्तस्तु मोचयाती सचक्षुषा दर्शियति मार्गः ॥
ये सत्त्व कामदासा गृहे धने पुत्रभार्यपरिग्रद्धाः ।
ते तुभ्य शिष्यमाणा नैष्क्रम्यमतौ स्पृहां कुर्युः ॥
ऐश्वर्य कामक्रीडा चतुर्द्वीपा सप्तरत्न विजहित्वा ।
निष्क्रान्त त्वां विदित्वा स्पृहयेत्सनरामरो लोकः ॥
किं चापि ध्यानसौख्यैर्विहरसि धर्मैर्न चासि कामरतः ।
अथ पुन चिरप्रसुप्तां बोधय मरुमानुषशतानि ॥
अतिपतित यौवनमिदं गिरिनदि यथ चञ्चलप्रचलवेगा ।
गतयौवनस्य भवतो नैष्क्रम्यमतिर्न शोभेति ॥
तत्साधु तरुणरूपे प्रथमे वरयौवने ऽभिनिष्क्रम्य ।
उत्तारय प्रतिज्ञा कुरुष्व चार्थ सुरगणाना ॥
न च कामगुणरतीभिस्तृप्तिर्लवणोदधेर्यथाम्भोभिः ।
ते तृप्त येष प्रज्ञा आर्या लोकोत्तरा विरजा ॥
त्वमिह प्रियामनापो राज्ञः शुद्धोदनस्य राष्ट्रस्य ।
शतपत्रसदृशवदना नैष्क्रम्यमतिं विचिन्तेहि ॥
आदीप्तक्लेशतापैरनिःशरणैर्गाढबन्धनैर्बद्धां ।
शीघ्रं प्रमोक्षमार्गे स्थापय शान्ते असमवीरा ॥
त्वं वैद्यधातुकुशलश्चिरातुरां सत्त्वरोगसंस्पृष्टां ।
भैषज्यधर्मयोगैर्निर्वाणसुखे स्थपय शीघ्रं ॥

अन्धातमा अनयना मोहाकुलदृष्टिजालबद्धाः ।
प्रज्ञाप्रदीपचक्षुः शोधय शीघ्रं नरमरूणां ॥
समुदीक्षन्ते बहवो देवासुरनागयक्षगन्धर्वाः ।
द्रक्ष्याम बोधिप्राप्तं निरुत्तरं धर्म श्रोष्यामः ॥
द्रक्ष्यति च भुजगराजो भवनं अवभासितं तव श्रिरीये ।
करियति अनन्तपूजा पूरेहि व्रताशयस्तस्य ॥
चत्वारि लोकपालाः ससैन्यकास्ते तव प्रदीक्षन्ते ।
दास्याम चतुरि पात्रां बोधिध्वजि पूर्णमनसस्य ॥
ब्रह्मप्रशान्तचारी उदीक्षते मैत्रवाक्करुणलाभी ।
अध्येषिष्ये नरेन्द्रं वर्तेन्ति निरुत्तरं चक्रं ॥
बोधिपरिपाचिकापि च देवत अभिवुस्त बोधिमण्डेस्मिन् ।
उत्पत्स्ये ऽय सत्य ति द्रक्ष्याम्यभिबुध्यतो बोधिं ॥
सत्यं मि बोधिसत्त्वा अन्तःपुरिये क्रिया विदर्शेन्ति ।
पूर्वंगमो भव त्वं मा भेष्यसि पश्चिमस्तेषां ॥
मञ्जुरुत मञ्जुघोषा स्मराहि दीपंकरस्य व्याकरणं ।
भूतं तथा अवितथा जिनघोषरुतं उदीरेहि ॥
॥ इति श्रीललितविस्तरे संचोदनापरिवर्तो नाम त्रयोदशो ऽध्यायः ॥

इति हि भिक्षवो बोधिसत्त्वः संचोदितः सन् तेन देवपुत्रेण राज्ञः शुद्धोदनस्येमं स्वप्नमुपदर्शयति स्म । यद्राजा शुद्धोदनः सुप्तः स्वप्नान्तरगतो ऽद्राक्षीत् । बोधिसत्त्वं रात्रौ प्रशान्तायामभिनिष्क्रामन्तं

देवगणपरिवृतमभिनिष्क्रम्य प्रव्रजितं चाद्राक्षीत् काषायवस्त्रप्रावृतं ॥ स प्रतिविबुद्धः । त्वरितं त्वरितं काञ्चुकीयं परिपृच्छति स्म । कच्चित् कुमारो ऽन्तःपुरे ऽस्ति ॥ सो ऽवोचदस्ति देवेति ॥

ततो राज्ञः शुद्धोदनस्यान्तःपुरे शोकशल्यो हृदये ऽनुप्रविष्टो ऽभूत् । अभिनिष्क्रमिष्यति अवश्यं कुमारो ऽयं यथेमानि पूर्वनिमित्तानि संदृश्यन्ते स्म ॥

तस्यैतदभवत् । न खल्वयं कुमारेण कदाचिदुद्यानभूमिमभिनिर्गन्तव्यं । स्त्रीगणमध्ये ऽभिरत इहैव रम्यते नाभिनिष्क्रमिष्यतीति ॥

ततो राज्ञा शुद्धोदनेन कुमारस्य परिभोगार्थं त्रयो यथतुकाप्रासादाः कारिता अभूवन् । ग्रैष्मिको वार्षिको हैमन्तिकश्च ॥ तत्र यो ग्रैष्मिकः स एकान्तशीतलः । यो वार्षिकः स साधारणः । यो हैमन्तिकः स स्वभाव उष्णः ॥ एकैकस्य च प्रासादस्य सोपानानि पञ्चपञ्चपुरुषशतान्युत्क्षिपन्ति स्म । निक्षिपन्ति स्म । तेषां तथोत्क्षिप्यमाणानां निक्षिप्यमाणानां च शब्दो ऽर्धयोजने श्रूयते स्म । मा खलु कुमारो नभिज्ञात एवाभिनिष्क्रमिष्यतीति ॥ नैमित्तिकैर्वैपञ्चिकैश्च व्याहृतमभूत् । मङ्गलद्वारेण कुमारो ऽभिनिष्क्रमिष्यतीति ॥ ततो राजा मङ्गलद्वारस्य महान्ति कपाटानि कारयति स्म । एकैकं च कपाटं पञ्चपञ्चपुरुषशतान्युद्घाटयन्ति स्म । अपघाटयन्ति स्म । तेषां चार्धयोजनं शब्दो गच्छति स्म ॥ पञ्च चास्य कामगुणानसदृशानुपसंहरति स्म । गीतवादितनृत्यैश्चैनं सदैव युवतय उपतस्थुः ॥

अथ भिक्षवो बोधिसत्त्वः सारथिं प्राह । शीघ्रं सारथे रथं योजयोद्यानभूमिं गमिष्यामीति ॥ ततः सारथी राजानं

शुद्धोदनमुपसंक्रम्यैवमाह । देव कुमार उद्यानभूमिमभिनिर्यास्यतीति ॥

अथ राज्ञः शुद्धोदनस्यैतदभवत् । न कदाचिन्मया कुमार उद्यानभूमिमभिनिष्क्रमितः सुभूमिदर्शनाय । यन्वहं कुमारमुद्यानभूमिमभिनिष्क्रामयेयं । ततः कुमार स्त्रीगणपरिवृतो रतिं वेत्स्यते नाभिनिष्क्रमिष्यतीति ॥

ततो राजा शुद्धोदन स्नेहबहुमानाभ्यां बोधिसत्त्वस्य नगरे घण्टावघोषणां कारयति स्म । सप्तमे दिवसे कुमार उद्यानभूमिं निष्क्रमिष्यतीति (सुभूमिदर्शनाय) । तत्र भवद्भिः सर्वामनापानि चापनयितव्यानि । मा कुमारः प्रतिकूलं पश्येत् । सर्वमनापानि चोपसंहर्तव्यानि विषयाभिरम्याणि ॥

ततः सप्तमे दिवसे सर्वं नगरमलंकृतमभूत् । उद्यानभूमिमुपशोभितं नानारङ्गदूष्यवितानीकृतं छत्रध्वजपताकासमलंकृतं ॥ येन च मार्गेण बोधिसत्त्वो ऽभिनिर्गच्छति स्म । स मार्गः सिक्तः संमृष्टो गन्धोदकपरिषिक्तो मुक्तकुसुमावकीर्णो नानागन्धघटिकानिधूपितः पूर्णकुम्भोपशोभितः कदलीवृक्षोच्छ्रितो नानाविचित्रपटवितानविततो रत्नकिङ्किनीजालहारार्धहाराभिप्रलम्बितो ऽभूत् । चतुरङ्गसैन्यव्यूहितः परिवारश्चोद्युक्तो ऽभूत् कुमारस्यान्तःपुरं प्रतिमण्डयितुं ॥ (अथ शुद्धावासकायिका देवा निध्यापयन्ति स्म । बोधिसत्त्वमाहरितुं) ॥ तत्र बोधिसत्त्वस्य पूर्वेण नगरद्वारेणोद्यानभूमिमभिनिष्क्रामतो महता व्यूहेन । अथ बोधिसत्त्वस्यैवानुभावेन शुद्धावासकायिकैर्देवपुत्रैस्तस्मिन् मार्गे पुरुषो जीर्णो वृद्धो महल्लको धमनीसंततगात्रः खण्डदन्तो

वलीनिचितकायः पलितकेशः कुब्जो गोपानसीवक्रो विभग्नो दण्डपरायण आतुरो गतयौवनः खरखरावसक्तकण्ठः प्राग्भारेण कायेन दण्डमवष्टभ्य प्रवेपयमानः सर्वाङ्गप्रत्यङ्गैः पुरतो मार्गस्योपदर्शितोऽभूत् ॥

अथ बोधिसत्त्वो जानन्नेव सारथिमिदमवोचत् ।

किं सारथे पुरुष दुर्बल अल्पस्थामो
उच्छुष्कमांसरुधिरत्वचस्नायुनद्धः ।
श्वेतशिरो विरलदन्त कृशाङ्गरूपो
आलम्ब्यदण्ड व्रजति असुखं स्खलन्तः ॥

सारथिराह ।

एषो हि देव पुरुषो जरयाभिभूतः
क्षीणेन्द्रियः सुदुःखितो बलवीर्यहीनः ।
बन्धूजनेन परिभूत अनाथभूतः
कार्यासमर्थ अपविद्धु वनेव दारुः ॥

बोधिसत्त्व आह ।

कुलधर्म एष अयमस्य हितं भणाहि
अथवापि सर्वजगतोऽस्य इयं ह्यवस्था ।
शीघ्रं भणाहि वचनं यथ भूतमेतत्
श्रुत्वा तथार्थमिह योनिश चिन्तयिष्ये ॥

सारथिराह ।

नैतस्य देव कुलधर्म न राष्ट्रधर्मः
सर्वे जगस्य जर यौवनु धर्षयाति ।

तुभ्यं पि मातृपितृबान्धवज्ञातिसंघो
जरया अमुक्त न हि अन्य गतिर्जनस्य ॥

बोधिसत्त्व आह ।

धिक्सारथे अबुधबालजनस्य बुद्धिः
यद्यौवनेन मदमत्त जरां न पश्येत् ।
आवर्तयाशु मि रथं पुनरहं प्रवेक्ष्ये
किं मह्य क्रीडरतिभिर्जरयाश्रितस्य ॥

अथ बोधिसत्त्वः प्रतिनिवर्त्य रथवरं पुनरपि पुरं प्राविशत् ॥

इति हि भिक्षवो बोधिसत्त्वो ऽपरेण कालसमयेन दक्षिणेन नगरद्वारेणोद्यानभूमिमभिनिष्क्रमन्महता व्यूहेन सो ऽद्राक्षीन्मार्गे पुरुषं व्याधिस्पृष्टं दग्धोदराभिभूतं दुर्बलकायं स्वके मूत्रपुरीषे निमग्नमत्रा-णमप्रतिशरणं कृच्छ्रेणोच्छ्वसन्तं प्रश्वसन्तं । दृष्ट्वा च पुनर्बोधिसत्त्वो जानन्नेव सारथिमिदमवोचत् ।

किं सारथे पुरुष रूक्षविवर्णगात्रः
सर्वेन्द्रियेभि विकलो गुरु प्रश्वसन्तः ।
सर्वाङ्गशुष्क उदराकुलकृच्छ्रप्राप्तो
मूत्रे पुरीषि स्वकि तिष्ठति कुत्सनीये ॥

सारथिराह ।

एषो हि देव पुरुषो परमं गिलानो
व्याधीभयं उपगतो मरणान्तप्राप्तः ।
आरोग्यतेजरहितो बलविप्रहीनो
अत्राणद्वीपशरणो ह्यपरायणश्च ॥

बोधिसत्त्व आह ।

आरोग्यता च भवते यथ स्वप्नक्रीडा  
व्याधीभयं च इममीदृशु घोररूपं ।  
को नाम विज्ञपुरुषो इम दृष्ट्ववस्थां  
क्रीडारतिं च जनयेच्छुभसंज्ञतां वा ॥

अथ खलु भिक्षवो बोधिसत्त्वः प्रतिनिवर्त्य रथवरं पुनरपि पुरवरं प्राविक्षत् ॥

इति हि भिक्षवो बोधिसत्त्वोऽपरेण कालसमयेन पश्चिमेन नगरद्वारेणोद्यानभूमिमभिनिष्क्रमन्महता व्यूहेन सो ऽद्राक्षीत्पुरुषं मृतं कालगतं मञ्चे समारोपितं चैलवितानीकृतं ज्ञातिसंघपरिवृतं सर्वै रुदद्भिः क्रन्दद्भिः परिदेवमानैः प्रकीर्णकेशैः पांश्ववकीर्णशिरोभिरुरांसि ताडयद्भिरुत्क्रोशद्भिः पृष्ठतो ऽनुगच्छद्भिः । दृष्ट्वा च पुनर्बोधिसत्त्वो जानन्नेव सारथिमिदमवोचत् ।

किं सारथे पुरुष मञ्चपरि गृहीतो  
उद्धूतकेशनख पांशु शिरे क्षिपन्ति ।  
परिचारयित्व विहरन्त्युरस्ताडयन्तो  
नानाविलापवचनानि उदीरयन्तः ॥

सारथिराह ।

एषो हि देव पुरुषो मृतु जम्बुद्वीपे  
नहि भूयु मातृपितृ द्रक्ष्यति पुत्रदारां ।  
अपहाय भोगगृह(मातृपितृ)मित्रज्ञातिसंघं  
परलोकप्राप्तु नहि द्रक्ष्यति भूयु ज्ञातीं ॥

बोधिसत्त्व आह ।

धिग्यौवनेन जरया समभिद्रुतेन
आरोग्य धिग्विविधव्याधिपराहतेन ।
धिग्जीवितेन विदुषा नचिरस्थितेन
धिक्पण्डितस्य पुरुषस्य रतिप्रसङ्गैः ॥ ० ॥

यदि जर न भवेया नैव व्याधिर्न मृत्युः
तथपि च महदुःखं पञ्चस्कन्धं धरन्तो ।
किं पुन जरव्याधिर्मृत्यु नित्यानुबद्धाः
साधु प्रतिनिवर्त्या चिन्तयिष्ये प्रमोत्तं ॥ ० ॥

अथ खलु भिक्षवो बोधिसत्त्वः प्रतिनिवर्त्य तं रथवरं पुनरपि पुरं प्राविक्षत् ॥

इति हि भिक्षवो बोधिसत्त्वस्यापरेण कालसमयेनोत्तरेण नगरद्वारेणोद्यानभूमिमभिनिष्क्रामतस्तैरेव देवपुत्रैर्बोधिसत्त्वस्यानुभावेनैव तस्मिन्मार्गे भिक्षुरभिनिर्मितो ऽभूत् । अद्राक्षीद्बोधिसत्त्वस्तं भिक्षुं शान्तं दान्तं संयतं ब्रह्मचारिणमविक्षिप्तचक्षुषं युगमात्रप्रेक्षिणं प्रासादिकेनैर्यापथेन संपन्नं प्रासादिकेनाभिक्रमप्रतिक्रमेण संपन्नं प्रासादिकेनावलोकितव्यवलोकितेन प्रासादिकेन समिञ्जितप्रसारितेन प्रासादिकेन संघाटीपात्रचीवरधारणेन मार्गे स्थितं । दृष्ट्वा च पुनर्बोधिसत्त्वो जानन्नेव सारथिमिदमवोचत् ।

किं सारथे पुरुष शान्तप्रशान्तचित्तो
नोत्क्षिप्तचक्षु व्रजते युगमात्रदर्शी ।

काषायवस्त्रवसनो सुप्रशान्तचारी
पात्रं गृहीत्व न च उद्धतु उन्नतो वा ॥

सारथिराह ।

एषो हि देव पुरुषो इति भिक्षु नामा
अपहाय कामरतयः सुविनीतचारी ।
प्रव्रज्यप्राप्तु शममात्मन एषमाणो
संरागद्वेषविगतो ऽन्वेति पिण्डचर्या ॥

बोधिसत्त्व आह ।

साधू सुभाषितमिदं मम रोचते च
प्रव्रज्य नाम विदुभिः सततं प्रशस्ता ।
हितमात्मनश्च परसत्त्वहित च यत्र
सुखजीवितं सुमधुरं अमृतं फलं च ॥

अथ खलु भिक्षवो बोधिसत्त्वः प्रतिनिवर्त्य तं रथवर पुनरपि पुरवरं प्राविक्षत् ॥

इति हि भिक्षवो राजा शुद्धोदनो बोधिसत्त्वस्येमामेवंरूपां संचोदनां दृष्ट्वा श्रुत्वा च भूयस्या मात्रया बोधिसत्त्वस्य परिरक्षणार्थं प्राकारान्मापयते स्म । परिखाः खानयति स्म । द्वाराणि च गाढानि कारयति स्म । आरक्षान्स्थापयति स्म । शूरांश्चोदयति स्म । वाहनानि योजयति स्म । वर्माणि ग्राहयति स्म । चतुर्षु नगरद्वारशृङ्गाटकेषु चतुरो महासेनाव्यूहान्स्थापयति स्म बोधिसत्त्वस्य परिरक्षणार्थं । य एनं रात्रिंदिवं रक्षन्ति स्म । मा बोधिसत्त्वो ऽभिनिष्क्रमिष्यतीति ॥ अन्तःपुरे चाज्ञां ददाति स्म । मा स्म कदा-

चित्संगीतिं विच्छेत्स्यथ । सर्वरतिक्रीडाश्चोपसंहर्तव्या स्त्रीमायाश्चोपदर्शयत निर्बन्धत कुमारं यथानुरक्तचित्तो न निर्गच्छेत्प्रव्रज्यायै ॥

तत्रेदमुच्यते ।

द्वारि स्थापित युद्धशौण्डपुरुषाः खड्गायुधापाणयो
हस्ती अश्वरथाश्च वर्मितनरा आरूढ नागावली ।
परिखा खोटकतोरणाश्च महता प्राकार उच्छ्रापिता
द्वारा बद्ध सुगाढबन्धनकृताः क्रोशस्वरामुञ्चनाः ॥

सर्वे शाक्यगणा विषण्णमनसो रक्षन्ति रात्रिंदिवं
निर्घोषश्च बलस्य तस्य महतः शब्दो महा श्रूयते ।
नगरं व्याकुलु भीतत्रस्तमनसो मा स्याद्व्रजेत्सूरतो
मा भूच्छाक्यकुलोदितस्य गमने छिद्येत वंशो ह्ययं ॥

आज्ञाप्तो युवतीजनश्च सततं संगीति मा छेत्स्यथा
वस्थानं प्रकरोथ क्रीडरतिभिः निर्बन्धथा मानसं ।
ये वा इस्त्रियमाय नैकविविधा दर्शेथ चेष्टां बहूं
आरक्षां प्रकरोथ विघ्न कुरुथा मा खु व्रजेत्सूरतः ॥

तस्या निष्क्रमिकालि सारथिवरे पूर्वे निमित्ता इमे
हंसाक्रोञ्चमयूरसारिकशुका नो ते रुवं मुञ्चिषु ।
प्रासादेषु गवाक्षतोरणवरेष्वातालमञ्चेषु च
जिह्माजिह्मसुदुर्मना असुखिता ध्यायन्त्यधोमूर्धकाः ॥

पुडिनीपुष्करिणीषु पद्मरुचिरा म्लानानि म्लायन्ति च
वृक्षा शुष्कपलाश पुष्परहिताः पुष्पन्ति भूयो न च ।

वीणावल्लकिवंशतन्त्रिरचिता छिद्यन्त्यकस्मात्तदा
भेरीश्चैव मृदङ्ग पाण्यभिहता भिद्यन्ति नो वाद्यिषु ॥

सर्वं व्याकुलमासि तच्च नगरं निद्राभिभूतं भृशं
नो नृत्ते न च गायिते न रमिते भूयो मनः कस्यचित् ।
राजापी परमं सुदीनमनसः चिन्तापरो ध्यायते
हा धिक्शाक्यकुलस्य ऋद्धिविपुलो मा हैव संधक्ष्यते ॥

एकस्मिं शयने स्थिते स्थितमभूद्गोपा तथा पार्थिवौ
गोपा रात्रियि अर्धरात्रसमये स्वप्नानिमां पश्यति ।
सर्वेयं पृथिवी प्रकम्पितमभूच्छैला सकूटावटी
वृक्षा मारुतएरिता क्षिति पती उत्पाट्य मूलोद्धृताः ॥

चन्द्रासूर्य नभातु भूमिपतितौ सज्योतिषालंकृतौ
केशानद्दशि लून दक्षिणि भुजे मुकुटं च विध्वंसितं ।
हस्तौ छिन्न तथैव छिन्न चरणौ नग्नादृशी आत्मनं
मुक्ताहार तथैव मेखलमणी छिन्नादृशी आत्मनः ॥

शयनस्याद्दशि छिन्न पादचतुरो धरणीतलेस्मिं छत्री
छत्रे दण्डु सुचित्रु श्रीम रुचिरं छिन्नादृशी पार्थिवे ।
सर्वे आभरणा विकीर्ण पतिता मुह्यन्ति ते वारिणा
भर्तुश्चाभरणा सवस्त्रमुकुटा शय्यागता व्याकुला ॥

उल्कां पश्यति निष्क्रमन्त नगरात्तमसाभिभूतं पुरं
छिन्नां जालिकमद्दशाति सुपिने रतनामिकां शोभनां ।
मुक्ताहारु प्रलम्बमानु पतितः क्षुभितो महासागरं
मेरुं पर्वतराजमद्दशि तदा स्थानातु संकम्पितं ॥

एतानीदृश शाक्यकन्य सुपिनां सुपिनान्तरे अद्दृशी
दृष्ट्वा सा प्रतिबुद्ध रूक्षनयना स्वं स्वामिनं अब्रवीत् ।
देवा किं मि भविष्यते खलु भणा सुपिनान्तराणीदृशा
भ्रान्ता मे स्मृति नो च पश्यमि पुनः शोकार्दितं मे मनः ॥
श्रुत्वासौ कलविङ्कदुन्दुभिरुतो ब्रह्मस्वरः सुस्वरो
गोपामालपते भव प्रमुदिता पापं न ते विद्यते ।
ये सत्त्वा कृतपुण्यपूर्वचरिता तेषेति स्वप्ना इमे
को ऽन्यः पश्यति नैकदुःखविहितः स्वप्नान्तराणीदृशा ॥ ०॥

यत्ते दृष्टा मेदिनी कम्पमाना कूटाशैला मेदिनीये पतन्ता ।
देवा नागा राक्षसा भूतसंघाः सर्वे तुभ्यं पूज्यश्रेष्ठां करोन्ति ॥
यत्ते दृष्टा वृक्षमूलोद्धृतानि केशां लूनां दक्षिणेनादृशासि ।
क्षिप्रं गोपि क्लेशजालं छिनित्वा दृष्टीजालं उद्धरी संस्कृतातः ॥
यत्ते दृष्टौ चन्द्रसूर्यौ पतन्तौ दृष्टा नक्षत्रा ज्योतिषा नीपतन्तः ।
क्षिप्रं गोपि क्लेशशत्रू निहत्वा पूज्या लोके भाविनी त्वं प्रशस्या ॥
यत्ते दृष्टा मुक्तहारं विशीर्णं नग्नं भग्नं सर्वकायादृशासि ।
क्षिप्रं गोपि इस्त्रिकायं जहित्वा पुरुषस्त्वं वै भेष्यसे नोचिरेण ॥
यत्ते दृष्टं मञ्चकं छिन्नपादं छत्रे दण्डं रत्नचित्रं प्रभग्नं ।
क्षिप्रं गोपि ओघचत्वारि तीर्त्वा मां द्रष्टासी एकछत्रं त्रिलोके ॥
यत्ते दृष्टा भूषणा उह्यमाना चूडा वस्त्रा मह्य मञ्चे ऽदृशासि ।
क्षिप्रं गोपि लक्षणैर्भूषिताङ्गं मां संपश्यी सर्वलोकैः स्तुवन्तं ॥
यत्ते दृष्टा दीपकोटीशतानि नगरान्निष्क्रान्ता तत्पुरं चान्धकारं ।
क्षिप्रं गोपि मोहविद्यान्धकारे प्रज्ञालोके कुर्वमी सर्वलोकं ॥

यत्ते दृष्टं मुक्तहारं प्रभग्नं छिन्नं चैव स्वर्णसूत्रं विचित्रं ।
चिप्रं गोपे क्लेशजालं छिनित्वा संज्ञा सूत्रं उद्धरी संस्कृतातः ॥
यत्ते गोपे चित्तिकारं करोषी नित्यं पूजां गौरवेणोत्तमेन ।
नास्ती तुभ्यं दुर्गती नैव शोकः चिप्रं भोही प्रीतिप्रामोद्यलब्धा ॥
पूर्वे मह्यं दानु दत्तं प्रणीतं शीलं चीर्णं भाविता नित्यक्षान्ति ।
तस्मान्मह्यं ये प्रसादं लभन्ते सर्वे भोन्ती प्रीतिप्रामोद्यलाभाः ॥
कल्पाकोटी संस्कृता मे अनन्ता बोधीमार्गो शोधितो मे प्रणीतः ।
तस्मान्मह्यं ये प्रसादं करोन्ति सर्वे छिन्ना तेषु त्रीण्यपायाः ॥
हर्षं विन्दा मा च खेदं जनेहि तुष्टिं विन्दा संजनेही च प्रीतिं ।
चिप्रं भेष्ये प्रीतिप्रामोद्यलाभी सेही गोपे भद्रका ते निमित्ता ॥

सो पुण्यतेजभरितो सिरितेजगर्भो
पूर्वे निमित्तसुपिने इमि अद्दशासि ।
ये भोन्ति पूर्वशुभकर्मसमुच्चयानां
नैष्क्रम्यकालसमये नरपुङ्गवानां ॥
सो अद्दशासि च कराच्चरणाद्धताना
महसागरेभि चतुभिर्जल लोलयन्ता ।
सर्वामिमां वसुमतीं शयनं विचित्रं
मेरुं च पर्वतवरं शिरसोपधानं ॥
आभा प्रमुक्त सुपिने तद अद्दशासि
लोकि विलोकितु महातमसान्धकारं ।
छत्रोद्गतं धरणिये स्फरते त्रिलोकं
आभाय स्पृष्ट विनिपातदुःखा प्रशान्ता ॥

कृष्णा शुभा चतुरि प्राणक पाद लेखी
चतुवर्ण एत्व सकुनाद्भुत एकवर्णाः ।
मीढंगिरी परमहीन जुगुप्सनीया
अभिभूय चङ्क्रमति तत्र च नोपलिप्तो ॥

भूयो ऽदृशी सुपिनि नद्य जलप्रपूर्णा
बहुसत्त्वकोटिनयुतानि च उह्यमाना ।
सो नावकृत्व प्रतरित्व परां प्रतार्य
स्थापेति सो स्थलवरे अभये अशोके ॥

भूयो ऽदृशाति बहुआतुररोगस्पृष्टां
आरोग्यतेजरहितां बलविप्रहीनां ।
सो वैद्यभूत्व बहु ओषध संप्रयच्छा
मोचेति सत्त्वनयुतां बहुरोगस्पृष्टां ॥

सिंहासने व हि निषण्ण सुमेरुपृष्ठे
शिष्यां कृताञ्जलिपुटानमरान्नमन्तां ।
संग्राममध्यि जयु अदृशि आत्मनस्य
आनन्दशब्दममरां गगणे ब्रुवन्तः ॥

एवंविधा सुपिनि अदृशि बोधिसत्त्वो
मङ्गल्यसोभनव्रतस्य च पारिपूरिं ।
यां श्रुत्व देवमनुजा अभवन्प्रहृष्टा
न चिराद्भविष्यति अयं नरदेवदेवः ॥ इति ॥

॥ इति श्रीललितविस्तरे स्वप्नपरिवर्तो नाम चतुर्दशो ऽध्यायः ॥

अथ खलु भिक्षवो बोधिसत्त्वस्यैतदभूत् । अयुक्तमेतन्मम स्यादकृतज्ञता च यदहमप्रतिवेद्य महाराज्ञः शुद्धोदनस्याननुज्ञातश्च पित्रा निष्क्रमेयं । स रात्रौ प्रशान्तायां स्वकादुपस्थानप्रासादादवतीर्य राज्ञः शुद्धोदनस्य प्रासादतले प्रतिष्ठितोऽभूत् । प्रतिष्ठितमात्रस्य च पुनर्बोधिसत्त्वस्य सर्वोऽसौ प्रासाद आभया स्फुटोऽभूत् ॥ तत्र राजा प्रतिविबुद्धस्तां प्रभामद्राक्षीद् दृष्ट्वा च पुनस्त्वरितं त्वरितं काञ्चुकीयमामन्त्रयामास । किं भोः काञ्चुकीय सूर्योऽभ्युद्गतो येनेयं प्रभा विराजते ॥ काञ्चुकीय आह । अद्यापि तावद्देव रजन्या उपार्धं नातिक्रान्तं । अपि च देव ।

सूर्यप्रभाय भवते द्रुमकुड्यछाया
संतापयाति च तनुं प्रकरोति घर्मं ।
हंसामयूरशुककोकिलचक्रवाकाः
प्रत्यूषकालसमये स्वरुता रवन्ति ॥

आभा इयं तु नरदेव सुखा मनोज्ञा
प्रह्लादनी शुभकरी न करोति दाहं ।
कुड्या च वृक्ष अभिभूय न चास्ति छाया
निस्संशयं गुणधरो इह अद्य प्राप्तः ॥

सो प्रेक्षते दशदिशो नृपती विषण्णो
दृष्टश्च सो कमललोचन शुद्धसत्त्वः ।

सो ऽभ्युत्थितुं शयनि इच्छति न प्रभोति
पितृगौरवं जनयते वरशुद्धबुद्धिः ॥
सो च स्थिहित्व पुरतो नृपतिं अवोचत्
मा भूयु विघ्न प्रकरोहि म चैव खेदं ।
नैष्क्रम्यकालसमयो मम देव युक्तो
हन्त क्षमस्व नृपते सजनः सराष्ट्रः ॥
तं अश्रुपूर्णनयनो नृपती बभाषे
किंचित्प्रयोजनु भवेद्विनिवर्तने ते ।
किं याचसे मम वरं वद सर्वु दास्ये
अनुगृह्ण राजकुलु मां च इदं च राष्ट्रं ॥
तद बोधिसत्त्व अवची मधुरप्रलापी
इच्छामि देव चतुरो वर तान्मि देहि ।
यदि शक्यसे ददितु मह्य वसे ति तत्र
तद्द्रक्ष्यसे सद गृहे न च निष्क्रमिष्ये ॥
इच्छामि देव जर मह्य न आक्रमेय्या
शुभवर्णयौवनस्थितो भवि नित्यकालं ।
आरोग्यप्राप्तु भवि नो च भवेत व्याधिः
अमितायुषश्च भवि नो च भवेत मृत्युः
(संपत्तितश्च विपुला नु भवेद्विपत्तिः) ॥
राजा शृणित्व वचनं परमं दुःखार्तो
अस्थानु याचसि कुमार न मे ऽत्र शक्तिः ।

जरव्याधिमृत्युभयतश्च विपत्तितश्च
कल्पस्थितीय ऋषयो ऽपि न जातु मुक्ताः ॥

[श्रुत्वा वचनमत्र पितुः कुमारो ऽवचि]

यदिदानि देव चतुरो वर नो ददासि
जरव्याधिमृत्युभयतश्च विपत्तितश्च ।
हन्तः शृणुष्व नृपते अपरं वरैकं
अस्माच्च्युतस्य प्रतिसंधि न मे भवेया ॥

श्रुत्वैव चेम वचनं नरपुङ्गवस्य
तृष्णा तनुं च करि छिन्दति पुत्रस्नेहं ।
अनुमोदनी हितकरा जगति प्रमोचं
अभिप्रायु तुभ्य परिपूर्यतु यन्मतं ते ॥

अथ खलु भिक्षवो बोधिसत्त्वः प्रतिक्रम्य स्वके प्रासादे ऽभिरुह्य शयने निषसाद । न चास्य कश्चिद्गमनं वा आगमनं वा संजानीते स्म ॥

इति हि भिक्षवो राजा शुद्धोदनस्तस्या रात्र्या अत्ययेन सर्वं शाक्यगणं संनिपात्यैनां प्रवृत्तिमारोचयति स्म । अभिनिष्क्रमिष्यति कुमारस्तत्किं करिष्यामः ॥ शाक्या आहुः । रक्षां देव करिष्यामः । तत्कस्मात् । अयं च महाञ्शाक्यगणः स चैकाकी । तत्का तस्य शक्तिरस्ति बलादभिनिष्क्रमितुं ॥

तत्र तैः शाक्यै राज्ञा शुद्धोदनेन च पञ्च शाक्यकुमारशतानि कृतास्त्राणि कृतयोग्यानि इष्वस्त्रशिक्षितानि महानग्नबलोपेतानि पूर्वे नगरद्वारे स्थापितान्यभूवन् । बोधिसत्त्वस्य रक्षणार्थं । एकैकस्य

शाक्यकुमारः पञ्चरथशतपरिवारः । एकैकं च रथं पञ्चपत्तिशतपरिवारं स्थापितमभूत् । बोधिसत्त्वस्य रक्षणार्थं । एवं दक्षिणे पश्चिमे उत्तरे नगरद्वारे पञ्च पञ्च शाक्यकुमारशतानि कृतास्त्राणि कृतयोग्यानि इष्वस्त्रशिक्षितानि महानग्नबलोपेतानि । एकैकस्य शाक्यकुमारः पञ्चरथशतपरिवारः । एकैकं च रथं पञ्चपत्तिशतपरिवारं स्थापितमभूत् । बोधिसत्त्वस्य रक्षार्थं । महल्लकमहल्लिकाश्च शाक्याः सर्वचत्वरशृङ्गाटकपूगरथ्यास्वारक्षार्थं स्थिता अभूवन् । राजा च शुद्धोदनः पञ्चभिः शाक्यकुमारशतैः सार्धं परिवृतः पुरस्कृतः स्वके गृहद्वारे हयेषु च गजेषु च समभिरुह्य जागर्ति स्म ॥ महाप्रजापती च गौतमी चेटीवर्गमामन्त्रयते स्म ।

ज्वालेथ दीपविमलां ध्वजाग्रि मणिरत्न सर्वि स्थापेथा ।
ओलम्बयाथ हारां प्रभां कुरुत सर्वि गेहेस्मिन् ॥
संगीति योजयेथा जागरथ अतन्द्रिता इमां रजनीं ।
प्रतिरक्षथा कुमारं यथा अविदितो न गच्छेया ॥
वर्मित कलापहस्ता असिधनुशरशक्तितोमरगृहीताः ।
प्रियतनयरक्षणार्थं करोथ सर्वे महायत्नं ॥
द्वारा पिधेथ सर्वा सुयन्त्रितानिर्गडां दृढकपाटां ।
मुञ्चथ मा च अकाले मा अग्रसत्त्व इतु न व्रजेया ॥
मणिहारमुक्तहारां मुखपुष्पके अर्धचन्द्र संगृखलाः ।
मेखलकर्णिकमुद्रिक सुनिबद्धां नूपुरां कुरुत ॥
यदि सहस निष्क्रमेया नरमरुहित मत्तवारणविचारी ।
तथ तथ पराक्रमेया यथा विघातं न विन्देया ॥

या नारि शक्तिधारी शयनं परिवारयन्तु विमलस्य ।
म च भवथ निद्रविहताः पतंग इव रक्षथा नेत्रैः ॥
छादिथ रतनजालै इदं गृहं पार्थिवस्य रक्षार्थं ।
वेणूरवांश्च रवथा इमां रजनि रक्षथा विरजां ॥
अन्योन्य बोधयेथा म वसयथा रक्षथा इमां रजनीं ।
मा हु अभिनिष्क्रमेया विजह्य राष्ट्रं च राज्यं च ॥
एतस्य निर्गतस्या राजकुलं सर्विमं निरभिरम्यं ।
उच्छिन्नश्च भवेया पार्थिववंशश्चिरनुबद्धः ॥ इति ॥

अथ खलु भिक्षवो ऽष्टाविंशतिमहायक्षसेनापतयः पाञ्चिकयक्षसेनापतिपूर्वंगमानि च पञ्चहारितीपुत्रशतान्येकस्मिन्संनिपात्यैवं मतं विचारयन्ति स्म । अद्य मार्षा बोधिसत्त्वो ऽभिनिष्क्रमिष्यति । तस्य युष्माभिः पूजाकर्मणि औत्सुक्यमापत्तव्यं ॥

चत्वारश्च महाराजानो अडकवतीं राजधानीं प्रविश्य तां महतीं यक्षपर्षदमामन्त्रयते स्म । अद्य मार्षा बोधिसत्त्वो ऽभिनिष्क्रमिष्यति । स युष्माभिर्हयवरचरणपरिगृहीतो निष्क्रामयितव्यः ॥

सा च यक्षपर्षदाह ।

वज्रदृढ अभेद्य नारायणो आत्मभावो गुरु
वीर्यबलउपेतु सो ऽकम्पियो सवसत्त्वोत्तमः ।
गिरिवरमहमेरु उत्पाट्य शक्यं नभे धारितुं केनचित्
न तु जिनगुणमेरु शैलैर्गुरुः पुण्यज्ञानाश्रितः शक्य नेतुं क्वचित् ॥

वैश्रवण आह ।

ये मानगर्वित नरा गुरु तेषु शास्ता
ये प्रेमगौरवस्थिता लघु ते विजानि ।
अध्याशयेन अभियुज्यथ गौरवेण
लघु तं हि वेत्स्यथ खगा इव तूलपेसिं ॥

अहं च पुरतो यास्ये यूयं च वहथा हयं ।
नैष्क्रम्ये बोधिसत्त्वस्य पुण्यमार्जयामो बहु ॥

अथ खलु भिक्षवः शक्रो देवानामिन्द्रो देवांस्त्रायत्रिंशानामन्त्रयते स्म । अद्य मार्षा बोधिसत्त्वो ऽभिनिष्क्रमिष्यति । तत्र युष्माभिः सर्वैः पूजाकर्मणि औत्सुक्येन भवितव्यं ॥

तत्र शान्तमतिर्नाम देवपुत्रः स एवमाह । अहं तावत्कपिलवस्तुनि महानगरे सर्वस्त्रीपुरुषदारकदारिकाणां प्रस्वापनं करिष्यामि ॥

ललितव्यूहो नाम देवपुत्रः स एवमाह । अहमपि सर्वहयगजखरोष्ट्रगोमहिषस्त्रीपुरुषदारकदारिकाणां शब्दमन्तर्धापयिष्यामि ॥

व्यूहमतिर्नाम देवपुत्रः स एवमाह । अहं गगणतले सप्तरथविस्तारप्रमाणं रत्नवेदिकापरिवृतं सूर्यकान्तमणिरत्नप्रभोज्ज्वलितमुच्छ्रितछत्रध्वजपटाकं नानापुष्पाभिकीर्णं नानागन्धघटिकानिधूपितं मार्गव्यूहं करिष्यामि । येन मार्गेण बोधिसत्त्वो ऽभिनिष्क्रमिष्यति ॥

ऐरावणो नाम नागराजा स एवमाह । अहमपि च स्वस्यां शुण्डायां द्वात्रिंशद्योजनप्रमाणं कूटागारं मापयिष्यामि । यत्राप्सरसो

ऽभिरुह्य तूर्यसंगीतिसंप्रभणितेन महता गीतवादितेन बोधिसत्त्वस्योपस्थानपरिचर्यां कुर्वन्त्यो गमिष्यन्ति ॥

स्वयं च शक्रो देवानामिन्द्र एवमाह । अहं द्वाराणि विवरिष्यामि । मार्गं च संदर्शयामि ॥

धर्मचारी देवपुत्र आह । अहं विकृतमन्तःपुरमुपदर्शयिष्यामि ॥

संचोदको देवपुत्र आह । अहं बोधिसत्त्वं शयनादुत्थापयिष्यामि ॥

तत्र वरुणश्च नाम नागराजो मनस्वी च नागराजः सागरश्च नागराजो ऽनवतप्तश्च नागराजो नन्दोपनन्दौ नागराजावेवमाहुः । वयमपि बोधिसत्त्वस्य पूजाकर्मणे कालानुसारिमेघमभिनिर्मायोरगसारचन्दनचूर्णवर्षमभिवर्षयिष्यामः ॥

इति हि भिक्षवो देवनागयक्षगन्धर्वैश्चायमेवंरूपो निश्चयाभिप्रायश्चिन्तितो ऽभूद् व्यवसितश्च ॥ बोधिसत्त्वस्यैवं धर्मचिन्तानुप्रविष्टस्य संगीतिप्रासादेषु सुखशयनगतस्यान्तःपुरमध्यगतस्य पूर्वबुद्धचरितं विचिन्तयतः सर्वसत्त्वहितमनुचिन्तयतश्चत्वारि पूर्वप्रणिधानपदान्यामुखीभवन्ति स्म । कतमानि चत्वारि । पूर्वं मया स्वयंभुवामाधिपतेयतामभिलषता सर्वज्ञतां प्रार्थयमानेनैवं संनाहः संनद्धो ऽभूत् । सत्त्वान्दुःखितान्दृष्ट्वा अहो वताहं संसारमहाचारकबन्धनप्रक्षिप्तस्य लोकसंनिविष्टस्य संसारचारकं भित्त्वा बन्धनप्रमोक्षशब्दं चोदीरयेयं तृष्णाया सनिगडगाढबन्धनबद्धांश्च सत्त्वान्प्रमोचयेयं । इदं प्रथमं पूर्वप्रणिधानपदमामुखीभवति स्म ॥

अहो वताहं संसारमहाविद्यान्धकारगहनप्रक्षिप्तस्य लोकस्याज्ञानपटलतिमिरावृतनयनस्य प्रज्ञाचक्षुर्विरहितस्याविद्यामोहान्धकारस्य महान्तं धर्मालोकं कुर्यां । ज्ञानप्रदीपं चोपसंहरेयं त्रिविमोक्षसुखज्ञानवतौषधिसंप्रयोगेण चोपायप्रज्ञाज्ञानसंप्रयुक्तेन सर्वाविद्यान्धकारतमोहतं महत्तिमिरपटलकालुष्यमपनीय प्रज्ञाचक्षुर्विशोधयेयं । इदं द्वितीयं पूर्वप्रणिधानपदमामुखीभवति स्म ॥

अहो वताहं मानध्वजोच्छ्रितस्य लोकस्याहंकारममकाराभिनिविष्टस्यात्मनीयग्राहानुगमानसस्य संज्ञाचित्तदृष्टिविपर्यासविपर्यस्तस्यासंग्रहगृहीतस्यार्यमार्गोपदेशेनास्मिन्मानध्वजप्रपातनं कुर्यां । इतीदं तृतीयं पूर्वप्रणिधानपदमामुखीभवति स्म ॥

अहो वताहं व्युपशान्तस्य लोकस्य तन्द्राकुलजातस्य गुणावगुण्ठितभूतस्याजवंजवसमापन्नस्यास्माल्लोकात् परं लोकं परलोकादिमं लोकं संधावतः संसरतः संसारादभिनिवृत्तस्यालातचक्रसमारूढस्योपसमिकं प्रज्ञातृप्तिकरं धर्मं संप्रकाशयेयं । इतीदं चतुर्थं पूर्वप्रणिधानपदमामुखीभवति स्म ॥ इमानि चत्वारि पूर्वप्रणिधानपदान्यामुखीभवन्ति स्म ॥

तस्मिंश्च क्षणे धर्मचारिणा देवपुत्रेण शुद्धावासकायिकैश्च देवपुत्रैर्विकृतविगलितमन्तःपुरमुपदर्शितमभूत् । विसंस्थितं बीभत्सरूपमुपदर्श्य च गगणतलस्थास्ते बोधिसत्त्वं गाथाभिरध्यभाषन्त ।

अथाब्रुवन् देवसुता महर्द्धयो विबुद्धपद्मायतलोचनं तं ।
कथं तवास्मिन्नुपजायते रतिः श्मशानमध्ये समवस्थितस्य ॥

संचोदितः सोऽथ सुरेश्वरेभिः निरीक्षते ऽन्तःपुर तं मुहूर्तं ।
संप्रेषते पश्यति तां बिभत्सां श्मशानमध्ये वसितो ऽस्मि भूतं ॥

अद्राक्षीत् खल्वपि बोधिसत्त्वः सर्वावन्तं नारीगणं । व्यवलोकयन् पश्यति । तत्र काश्चिद्व्यपकृष्टवस्त्राः काश्चिद्विधूतकेश्यः काश्चिद्विकीर्णाभरणाः काश्चिद्विभ्रष्टमुकुटाः काश्चिद्विहतैरंसैः काश्चिद्विगोपितगात्र्यः काश्चिद्विसंस्थितमुखाः काश्चिद्विपरिवर्तितनयनाः काश्चित्प्रस्रवन्तीलालाभिः काश्चिच्छ्वसन्त्यः काश्चित्प्रहसन्त्यः काश्चित्काशन्त्यः काश्चित्प्रलपन्त्यः काश्चिद्दन्तान्कटकटायन्त्यः काश्चिद्विवर्णवदनाः काश्चिद्विसंस्थितरूपाः काश्चित्प्रलम्बितबाहवः काश्चिद्विक्षिप्तचरणाः काश्चिदुद्घाटितशीर्षाः काश्चिदवगुण्ठितशीर्षाः काश्चिद्विपरिवर्तितमुखमण्डलाः काश्चित्प्रध्वस्तशरीराः काश्चिद्विभग्नगात्र्यः काश्चिन्निकुब्जाः खुरखुरायमानाः काश्चिन्मृदङ्गमुपगृह्य परिवर्तितशीर्षशरीराः काश्चिद्वीणावल्लक्याद्यपरिबद्धपाणयः काश्चिद्वेणुं दन्तैः कटकटायन्त्यः काश्चित्किम्पलनकुलसंपताडापकर्षितवाद्यभाण्डाः काश्चिन्निमेषोन्मेषपरिवृत्तनयनाः काश्चिद्विवृतास्याः । एवं तद्विक्षिप्तं धरणीतलगतमन्तःपुरं निरीक्षमाणो बोधिसत्त्वः श्मशानसंज्ञामुत्पादयति स्म ॥

तत्रेदमुच्यते ।

तां दृष्ट्व उद्विग्न स लोकनाथः करुणं विनिश्वस्य इदं जगाद ।
अहो बता कृच्छ्रगता व्रजेयं कथं रतिं विन्दति राक्षसीगणे ॥
अतिमोहतमावृत दुर्मति कामगुणैर्निर्गुणैर्गुणसंज्ञिनः ।
विहगपञ्जरमध्यगता यथा न हि लभन्ति कदाचि विनिःसृतिं ॥

अथ बोधिसत्त्वो ऽनेन पुनरपि धर्मालोकमुखेनान्तःपुरं प्रत्यवेक्षमाणो महाकरुणापरिदेवितेन सत्त्वान्परिदेवते स्म । इह ते बाला हन्यन्ते आघातन इव वध्याः । इह ते बाला रज्यन्ते चित्रघटेष्विवामेध्यपरिपूर्णेष्वविद्वांसः । इह ते बाला मज्जन्ति गज इव वारिमध्ये (इह ते बाला रुध्यन्ते चौरा इव चारकमध्ये) । इह ते बाला अभिरता वराहा इवाशुचिमध्ये । इह ते बाला अध्यवशिताः कुक्कुरा इवास्थिकरङ्कमध्ये । इह ते बालाः प्रपतिता दीपशिखास्विव पतंगाः । इह ते बाला बध्यन्ते कपय इव लेपेन । इह ते बालाः परिदह्यन्ते जालोत्क्षिप्ता इव जलजाः । इह ते बालाः परिक्रूड्यन्ते सूनाकाष्ठेष्विवोरभ्राः । इह ते बाला अवसज्जन्ते किल्बिषकारिण इव शूलाग्रे । इह ते बालाः संसीदन्ति जीर्णगजा इव पङ्के । इह ते बाला विपद्यन्ते भिन्नयानपात्र इव महासमुद्रे । इह ते बालाः प्रपतन्ति महाप्रपात इव जात्यन्धाः । इह ते बालाः पर्यादानं गच्छन्ति पातालसंधिगतमिव वारि । इह ते बाला धूमायन्ते कल्पसंक्षय इव महापृथिवी । आभिर्बाला भ्राम्यन्ते कुम्भकारकचक्रमिवाविद्धं । इह ते बालाः परिभ्रमन्ति शैलान्तर्गता इव जात्यन्धाः । इह ते बाला विपरिवर्तन्ते कुक्कुरा इव शर्दूलबद्धाः । इह ते बाला म्लायन्ते ग्रीष्मकाल इव तृणवनस्पतयः । इह ते बालाः परिहीयन्ते शशीव कृष्णपक्षे । आभिर्बाला भक्ष्यन्ते गरुडेनेव पन्नगाः । आभिर्बाला ग्रस्यन्ते महामकरेणेव पोतः । आभिर्बाला लुप्यन्ते चोरसंघेनेव सार्थः । आभिर्बाला भिद्यन्ते मारुतेनेव शालाः । आभिर्बाला हन्यन्ते दृष्टीविषैरिव जन्तवः ।

आस्वादसंज्ञिनो बालाः क्षण्वन्ति मधुदिग्धाभिरिव क्षुरधाराभिर्बालजातीयाः । आभिर्बाला उह्यन्ते दारुस्कन्धा इव जलौघैः । आभिर्बालाः क्रीडन्ति दारका इव स्वमूत्रपुरीषैः । आभिर्बाला आवर्त्यन्तेऽङ्कुशेनेव गजाः । आभिर्बाला बध्यन्ते धूर्तकैरिव बालजातीयाः । इह ते बाला कुशलमूलानि क्षपयन्ति द्यूताभिरता इव धनं । आभिर्बाला भक्ष्यन्ते राक्षसीभिरिव वणिजाः ॥ इत्येभिर्द्वात्रिंशताकारैर्बोधिसत्त्वोऽन्तःपुरं परि तुलयित्वा कायेऽशुभसंज्ञां विचारयन् प्रतिकूलसंज्ञामुपसंहरन् जुगुप्ससंज्ञामुत्पादयन् स्वकायं प्रतिविभावयन् कायस्यादीनवं संपश्यन् कायात्कायाभिनिवेशमुच्चारयन् शुभसंज्ञां विभावयन् अशुभसंज्ञामवक्रामयन् अधः पादतलाभ्यां यावदूर्ध्वं मस्तकपर्यन्तं पश्यति स्म । अशुचिसमुत्थितमशुचिसंभवमशुचिस्रवं नित्यं ॥ तस्यां च वेलायामिमां गाथामभाषत ।

कर्मक्षत्ररुहं तृषासलिलजं सत्कायसंज्ञीकृतं
अश्रुस्वेदकफार्द्रमूत्रविकृतं शोणीतविन्द्वाकुलं ।
वस्तीपूयवसासमस्तकरसैः पूर्णं तथा किल्विषैः
नित्यप्रस्रवितं ह्यमेध्यसकलं दुर्गन्धनानाविधं ॥
अस्थीदन्तसकेशरोमविकृतं चर्मावृतं लोमसं
अन्तःप्लीहजकृद्वपोष्णरसनैरेभिश्चितं दुर्बलं ।
मज्जास्नायुनिबद्धयन्त्रसदृशं मांसेन शोभीकृतं
नानाव्याधिप्रकीर्णसोककलिलं क्षुत्तर्षसंपीडितं ॥
जन्तूनां निलयं अनेकसुषिरं मृत्युं जरां चाश्रितं
दृष्ट्वा को हि विचक्षणो रिपुनिभं मन्ये शरीरं स्वकं ॥

एवं च बोधिसत्त्वः काये कायानुगतया स्मृत्या विहरति स्म ॥

गगणतलगताश्च देवपुत्रा धर्मचारिणं देवपुत्रमेवमाहुः । किमिदं मार्षा सिद्धार्थो विलम्बते ऽन्तःपुरं चावलोकयति स्म । तं चोपदर्शयति चित्तं चोद्विजयति । भूयश्चक्षुर्निवेशयति । अथवा जवजलनिधिगम्भीरो ऽयं न शक्यमस्य प्रमाणं ग्रहीतुमथवा ऽसङ्गस्य मा खलु विषये सज्जते मनः । मा खल्वमरैरसंचोदितो विस्मरति पूर्वप्रतिज्ञामिति ॥

धर्मचार्याह । किमेवं कथयत । ननु यूयमस्य प्रत्यक्षपूर्वमेव बोधाय चरतस्तथाविधा निःसङ्गताभूत् । नैष्क्रम्यत्यागे च किमङ्ग पुनरेतर्हि चरमभवावस्थितस्य सङ्गो भविष्यति ॥

अथ खलु भिक्षवो बोधिसत्त्वः कृतनिश्चयः संवेजितमानसो व्यवसितबुद्धिः सलीलमविलम्बितं पर्यङ्कादवतीर्य संगीतिप्रासादे पूर्वाभिमुखः स्थित्वा दक्षिणेन पाणिना रत्नजालिकामवनाम्य प्रासादकोटीगतो दशनखकृतकरपुटो भूत्वा सर्वबुद्धान्समन्वाहृत्य सर्वबुद्धेभ्यश्च नमस्कारं कृत्वा गगणतलमवलोकयति स्म । सो ऽद्राक्षीद् गगणतलगतममराधिपतिं दशशतनयनं देवशतसहस्रपरिवृतं पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरछत्रध्वजपताकावतंसकरत्नहारदामपरिगृहीतमवनतकायं बोधिसत्त्वं नमस्यमानं स्थितं । चतुरश्च लोकपालान् यक्षराक्षसगन्धर्वभुजगगणसपरिवृतान् संनद्धदृढवर्मितकवचितान् असिधनुशरशक्तितोमरत्रिशूलहस्तान् सलीलं मणिमकुटविलम्बितचूडान् बोधिसत्त्वं नमस्यमानान् स्थितान् पश्यति स्म । चन्द्रसूर्यावपि देवपुत्रौ

वामदक्षिणयोः पार्श्वयोः स्थितावपश्यत् ॥ पुष्यश्च नक्षत्राधिपतिरुपस्थितोऽभूत् । अर्धरात्रिं च समयं संप्राप्तं । दृष्ट्वा च बोधिसत्त्वश्छन्दकमामन्त्रयते स्म ।

छन्दका चपलु मा विलम्बहे    अश्वराज इद मे अलंकृतं ।
सर्वसिद्धि मम एति मङ्गला    अर्थसिद्धि ध्रुवमद्य भेष्यते ॥

अथ छन्दक इदं वचनं श्रुत्वा उद्विग्नमना एवमाह ।

क्व गमिष्यसे विकसितभ्रू  कमलदलशुभलोचन ।
नृपसिंह शरदिन्दुपूर्ण  कुमुदशशाङ्कमुदिता ॥
नवनलिनकोमलविबुद्धपद्मवदना ।
हाटकसुधान्तरवितरुणविमलशशितेज
घृतहुतार्चिरश्मिमणिविद्युत्प्रभोज्ज्वलिततेजो ॥
वारणमत्तलीडगजगामि ।
गोवृषमृगेन्द्रहंसक्रम सुक्रमा सुचरणा ॥ ० ॥

बोधिसत्त्व आह ।

छन्दक यस्य आर्थि मयि पूर्व  त्यक्त करचरणनयन ।
तथ उत्तमाङ्ग तनय भार्यप्रियाश्च  राज्यधनकनकवसन
रत्नपूर्ण गजतुरगानिलजववेग विक्रमबलाः ॥
शीलु मि रक्षि क्षान्तिपरिभावि ।
वीर्यबलध्यानप्रज्ञानिरतश्चास्मि बहुकल्पकोटिनयुता ॥
किं तु स्पृशित्व बोधिशिवशान्तिं ।
जरामरणपञ्जरनिरष्टसत्त्वपरिमोचनस्य समयोऽद्युपस्थितु मम ॥ ० ॥

छन्दक आह । श्रुत मया आर्यपुत्र यथा त्वं जातमात्र एव नैमित्तिकानां ब्राह्मणानामुपनामितो दर्शनाय । तैश्चासि राज्ञः शुद्धोदनस्याग्रतो व्याकृतः । देव वृद्धिस्ते राजकुलस्य ॥ आह । किमिति ॥ ते आहुः ।

अयं कुमारः शतपुण्यलक्षणो जातस्तवा आत्मज पुण्यतेजितः ।
स चक्रवर्ती चतुद्वीप ईश्वरो भविष्यती सप्तधनैरुपेतः ॥
स चेत्पुनर्लोकमवेक्ष्य दुःखितं विजह्यमान्तःपुरि निष्क्रमिष्यति ।
अवाप्य बोधिं अजरामरं पदं तर्पेष्यते धर्मजलैरिमां प्रजां ॥

हन्तार्यपुत्रास्ति तावदेव तद्व्याकरणं नेदं नास्ति । किं तु शृणु तावन्ममार्थकामस्य वचनं ॥ आह । किमिति ॥ आह । देव यस्यार्थे इह केचिदनेकविधानि व्रततपांस्यारभन्ते ऽजिनजटामकुट-चीवरवल्कलधारा दीर्घनखकेशश्मश्रुचानेकविधानि कायस्यातापन-परितापनानि समुत्सहन्ते । तीव्रं च व्रततपमारभन्ते । किमिति । वयं देवमनुष्यसंपत्तिं प्रतिलभेमहीति । सा च संपत्त्वयार्यपुत्र प्रतिलब्धा । इदं च राज्यमृद्धं च स्फीटं च क्षेमं सुभिक्षं रमणीयमाकीर्णबहुजनमनुष्यं । इमानि चोद्यानानि वरप्रवराणि नानाविधपुष्प-फलप्रतिमण्डितानि नानाशकुनिगणनिकूजितानि पुष्करिण्यश्चोत्पलप-द्मकुमुदपुण्डरीकोपशोभिता हंसमयूरकोकिलचक्रवाकक्रौञ्चसारसनि-कूजिताः पुष्पितसहकाराशोकचम्पककुरवकतिलककेशरादिनानाद्रुम-तीरोपरिबद्धा नानारत्नवृक्षवातिकासमलंकृता अष्टापदविनिबद्धा रत्नवेदिकापरिवृता रत्नजालसंछन्ना यथर्तुकालपरिभोगा ग्रीष्मवर्ष-शरद्धेमन्तसुखसंवासाः । इमे च शरदभ्रनिभाः कैलाशपर्वतसदृशा

महाप्रासादा वैजयन्तसमा धर्मसुधर्मक्षेमसमा शोकविगतप्रभृतयो वितर्दिनिर्यूहतोरणगवाक्षहर्म्यकूटागारप्रासादतलसमलंकृता रत्नकिङ्किनीजालसमीरिताः । इदं चार्यपुत्रान्तःपुरं तूणवपणववीणावेणुसंपताडावचराकिम्पलनकुलसुघोषकमृदङ्गपटहनृत्यगीतवादित्रसंगीतिसंयोगसुशिक्षितं हास्यलास्यक्रीडितरमितसुखिलमधुरोपचारं । त्वं च देव युवानभिक्रान्तयौवनो नवो दहरस्तरुणः कोमलशरीरः शिशुः कृष्णकेशो ऽविक्रीडितः कामैः । अभिरमस्व तावदमराधिपतिरिव दशशतनयनस्त्रिदशाधिपतिस्ततः पश्चाद्वृद्धीभूता अभिनिष्क्रमिष्यामः ॥ तस्यां च वेलायामिमां गाथामभाषत ।

रमतां च रतिविधिज्ञां अमराधिपतिर्यथा त्रिदशलोके ।
पश्चाद्वृद्धीभूता व्रततपसं आरभिष्यामः ॥

बोधिसत्त्व आह । अलं छन्दक अनित्याः खल्वेते कामा अध्रुवा अशाश्वता विपरिणामधर्माणः प्रद्रुताश्चपला गिरिनदीवेगतुल्याः । अवश्यायबिन्दुवदचिरस्थायिन उल्लापना रिक्तमुष्टिवदसाराः कदलीस्कन्धवद्दुर्बला आमभाजनवद्भेदनात्मकाः शरदभ्रनिभाः क्षणाद्भूत्वा न भवन्ति । अचिरस्थायिनो विद्युत इव नभसि सविषभोजनमिव परिणामदुःखा मालुतालतेवासुखदा अभिलिषिता बालबुद्धिभिरुदकबुद्बुदोपमाः क्षिप्रं विपरिणामधर्माणः । मायामरीचिसदृशाः संज्ञाविपर्याससमुत्थिताः । मायासदृशाश्चित्तविपर्यासविधापिताः । स्वप्नसदृशा दृष्टिविपर्यासपरिग्रहयोगेनातृप्तिकराः । सागर इव दुष्पूरा लवणोदक इव तृषाकराः । सर्पशिरोवद्दुस्पर्शनीया

महाप्रपातवत्परिवर्जिताः पण्डितैः । सभयाः सरणाः सादीनवाः सदोषा इति ज्ञात्वा विवर्जिताः प्राज्ञैर्विगर्हिता विद्वद्भिर्जुगुप्सिता आर्यैर्विवर्जिता बुधैः परिगृहीता अबुधैर्निषेविता बालैः ॥ तस्यां च वेलायामिमां गाथामभाषत ।

विवर्जिता सर्पशिरो यथा बुधै विगर्हिता मीढघटो यथाशुचिः ।
विनाशका सर्वशुभस्य छन्दका ज्ञात्वा हि कामान्न मि जायते रतिः॥

तदा छन्दकः शल्यविद्धो यथा क्रन्दमानस्ततो ऽश्रुनेत्रो दुःखी एवं वाक्यमब्रवीत् ।

देवा यस्यार्थि केचिदिहा तीव्रनेकैविधा आरभन्ते व्रतान्
अजिनजटाधरसुदीर्घकेशा नखा स्मश्रु चीरास्तथा
वल्कलाधार शुष्काङ्गनेके व्रतानाश्रिता ।
शाकस्यामाकगर्दूलभत्ताश्च ओमूर्धकास्थापरे गोव्रतां संश्रिताः॥
किं तु वय भवेम श्रेष्ठा विशिष्टा जगे
चक्रवर्तीवरा लोकपालास्तथा
शक्र वज्रधरा याम देवाधिपा निर्मिता ।
ब्रह्मलोके च ध्याना सुखा काङ्क्षिणः ॥
तदिद नरवरिष्ठ राज्यं तव स्फीतमृद्धं सुभिक्षं तथा ।
आरामोद्यानप्रासाद उत्क्षेपितं वैजयन्तासमं ।
इस्त्रिगारस्वयं वेणुवीणारवै गीतवाद्यै रती नृत्यसंगीति
संयोगि संशिक्षितं ।
भुञ्ज कामानिमान्मा व्रजा सूरता ॥ ० ॥

बोधिसत्त्व आह ।

छन्दक शृणु यानि दुःखाशतामर्पिता पूर्वि जन्मान्तरे
बन्धना रुन्धना ताडना तर्जना कामहेतोर्मया ।
नो च निर्विण्णभूत् संस्कृते मानसं ॥
प्रमदवशगतं च मोहाकुलं दृष्टिजालावृतं अन्धभूतं पुरा ।
आत्मसंज्ञाग्रहाकारका वेदनावीतिवृत्ता इमे धर्मअज्ञानतः ॥
संभूता चपलचल ऽनित्य मेघैः समा विद्युभिः सदृशाः ।
ओसबिन्दूपमा रिक्ततुच्छा असारा अनात्मा च शून्यस्वभावा
इमे सर्वशः ॥
न च मम विषयेषु संरज्यते मानसं
देहि मे छन्दका कण्ठकालंकृतं अश्वराजोत्तमं ।
पूर्ण मे मङ्गलार्थे पुरा चिन्तिता
भेष्यि सर्वाभिभूः सर्वधर्मेश्वरो धर्मराजो मुनिः ॥ ० ॥

छन्दक आह ।

इमां विबुद्धाम्बुजपत्रलोचना विचित्रहारा मणिरत्नभूषितां ।
घनप्रमुक्तामिव विद्युतां नभे नोपेक्षसे शयनगता विरोचतीं ॥
इमांश्च वेणून्पणवां सुघोषकां मृदङ्गवंशांश्च सगीतवादितां ।
चकोरसोरां करविङ्कनादितां यथालयं किन्नरिणां किहास्यसे ॥
सुमनोत्पलां वार्षिकचम्पकांस्तथा सुगन्धमालां गुणपुष्पसंचयां ।
कालागुरूनुत्तमगन्धधूपनां नोपेक्षसेताननुलेपनान्वरान् ॥
सुगन्धगन्धांश्च रसां प्रणीतां सुसाधितां व्यञ्जनभोजनांस्तथा ।
सशर्करां पानरसां सुसंस्कृतां नोपेक्षसे देव कहिं गमिष्यसि ॥

शीते च उष्णाननुलेपनाम्बरां उष्णे च तानुरगसारचन्दनां ।
तां काशिकावस्त्रवराम्बरां शुभां नोपेक्षसे देव कहिं गमिष्यसि ॥
इमे च ते (देव) कामगुणा हि पञ्च समृद्ध देवेष्विव देवतानां ।
रमस्व तावद्रतिसौख्यअन्वितः ततो वनं यास्यति शाक्यपुङ्गवः ॥

बोधिसत्त्व आह ।

अपरिमितानन्तकल्पा मया छन्दका
भुक्त कामानि रूपाश्च शब्दाश्च गन्धा रसा स्पर्श नानाविधा ।
दिव्य ये मानुषा नो च तृप्तीरभूत् ॥
नृपतिवरसुतेन ऐश्वर्यकारापितं
चातुर्द्वीपे यदा राजभूच्चक्रवर्ती समन्वागतः सप्तभि रत्नभिः ।
इस्त्रिगारस्य मध्ये गतः ॥
त्रिदशपति सुयामदेवाधिपत्यं च कारापितं ।
येभ्यश्चाहं च्यवित्वा इहाभ्यागतो निर्मितो निर्मितेषु मानो-
आत्मिका च श्रिया उत्तमा
भुक्त पूर्वे मया ॥
सुरपुरि वशवर्ति मरिश्वरत्वं च कारापितं
भुक्त कामाः समृद्धा वरा नो च तृप्तीरभूत् ।
किं पुनो अद्य मां हीनसंसेवतस्तृप्ति गच्छेदहं
स्थानमेतन्न संविद्यते ॥
अपि च इमु जगं अपेक्षाम्यहं छन्दका दुःखितं शोककान्तार-
संसारमध्ये स्थितं ।
क्लेशव्याडाकुले उह्यमानं सदा ॥

अशरणमपरायणं मोहविद्यान्धकारे जराव्याधिमृत्युभयैः पीडितं ।
जन्मदुःखैः समभ्याहतं व्याहतं शत्रुभिः ॥
अहमिह समुदानिया धर्मनावं महात्यागशीलव्रतक्षान्तिवीर्याबलां ।
दारुसंभारसंघातितां सारमध्याशयैर्वज्रकैः संगृहीतां दृढां ॥
स्वयमहमभिरुह्य नावामिमात्मानो ऽवतीर्य संसारओघे अहं तारयिष्ये अनन्तं जगत् ।
शोकसंसारकान्ताररोषोर्मिरागग्रहावर्तवैराकुले दुस्तरे ।
एव चित्तं मम ॥ ० ॥
तदात्मनोत्तीर्य इदं भवार्णवं सवैरदृष्टिग्रहक्लेशराक्षसं ।
स्वयं तरित्वा च अनन्तकं जगत् स्थले स्थपेष्ये अजरामरे शिवे ॥

तदा छन्दको भूयस्या मात्रया प्ररुदन्नेवमाह । देव एष व्यवसायस्य निश्चयः ॥

बोधिसत्व आह ।

शृणु छन्दक मह्य निश्चयं मोक्षसत्वार्थ हितार्थमुद्यत ।
अचलावलमव्ययं दृढं मेरुराजेव यथा सुदुश्चलं ॥

छन्दक आह । कीदृश आर्यपुत्रस्य निश्चयः ॥

बोधिसत्त्व आह ।

वज्राशनिः परशुशक्तिशराश्च वर्षे
विद्युत्प्रतानज्वलितः क्वथितं च लोहं ।
आदीप्तशैलशिखरा प्रपतेयु मूर्ध्नि
नैवा अहं पुन जनेय गृहाभिलाषं ॥

तदा अमरनभगताः किलिकिला मुञ्चिषु कुसुमवृष्टिः। जय हे परममतिधरा जगति अभयदायका नाथ ॥

न रज्यते पुरुषवरस्य मानसं    नभो यथा तमरजधूमकेतुभिः।
न लिप्यते विषयसुखेषु निर्मलो   जले यथा नवनलिनं समुद्भवं ॥

अथ खलु भिक्षवो बोधिसत्त्वस्य निश्चयं विदित्वा शान्तमतिश्च देवपुत्रो ललितव्यूहश्च देवपुत्रः कपिलवस्तुनि महानगरे सर्वस्त्रीपुरुषदारकदारिकानामपस्वापनमकुरुतां सर्वशब्दांश्चान्तर्धापयामासतुः ॥

अथ खलु भिक्षवो बोधिसत्त्वः सर्वं नगरजनं प्रसुप्तं विदित्वा ऽर्धरात्रिसमयं चोपस्थितं ज्ञात्वा पुष्यं च नक्षत्राधिपतिं युक्तं ज्ञात्वा सांप्रतं निष्क्रमणकाल इति ज्ञात्वा छन्दकमामन्त्रयते स्म। छन्दक मां मेदानीं खेदय। प्रयच्छ मे कण्ठकं समलंकृत्य मा च विलम्बिष्ठाः॥

समनन्तरोदाहृता च बोधिसत्त्वेनेयं वाग् अथ तत्क्षणमेव चत्वारो लोकपाला बोधिसत्त्वस्य वचनमुपश्रुत्य स्वकस्वकानि च भवनानि गत्वा बोधिसत्त्वस्य पूजाकर्मणे स्वैः स्वैर्व्यूहैस्त्वरितं त्वरितं पुनरपि कपिलवस्तुमहानगरमागच्छन्ति स्म ॥

तत्र धृतराष्ट्रो महाराजो गन्धर्वाधिपतिः पूर्वस्या दिश आगतो ऽभूत्। सार्धमनेकैर्गन्धर्वकोटिनियुतशतसहस्रैर्नानातूर्यसंगीतिसंप्रवादितेन। आगत्य च कपिलवस्तुमहानगरं प्रदक्षिणीकृत्य यथागतः पूर्वां दिशमुपनिश्रित्यास्थात्। बोधिसत्त्वं नमस्यमानः॥

दक्षिणस्या दिशो विरूढको महाराजो ऽभ्यागतो ऽभूत्। सार्धमनेकैः कुम्भाण्डकोटिनियुतशतसहस्रैर्नानामुक्ताहारपाणिप्रलम्बि-

तैर्नानामणिरत्नपरिगृहीतैर्विविधगन्धोदकपूर्णघटपरिगृहीतैः । आगत्य च कपिलवस्तुमहानगरं प्रदक्षिणीकृत्य यथागत एव दक्षिणां दिशमुपनिश्रित्यास्थात् । बोधिसत्त्वं नमस्यमानः ॥

पश्चिमाया दिशो विरूपाक्षो महाराज आगतो ऽभूत्। सार्धमनेकैर्नागकोटिनियुतशतसहस्रैर्नानामुक्ताहारपाणिप्रलम्बितैर्नानामणिरत्नपरिगृहीतैर्गन्धचूर्णपुष्पवर्षमेघसमुत्थितैश्च मृदुभिः सुगन्धिभिर्नानावातैः प्रवायद्भिः । आगत्य च कपिलवस्तुमहानगरं प्रदक्षिणीकृत्य यथागत एव पश्चिमां दिशमुपनिश्रित्यास्थात् । बोधिसत्त्वं नमस्यमानः ॥

उत्तरस्या दिशः कुवेरो महाराज आगतो ऽभूत् । सार्धमनेकैर्यक्षकोटिनियुतशतसहस्रैर्ज्योतीरसमणिरत्नपरिगृहीतैर्दीपिकापाणिपरिगृहीतैश्च ज्वलितोल्कापाणिपरिगृरीतैर्धनुरसिशरशक्तितोमरत्रिशूलचक्रकनयभिन्दिपालादिनानाप्रहरणपरिगृहीतैर्दृढसंनद्धवर्मितकवचितैः । आगत्य कपिलवस्तुमहानगरं प्रदक्षिणीकृत्य यथागत एवोत्तरां दिशमुपनिश्रित्यास्थात् । बोधिसत्त्वं नमस्यमानः ॥

शक्रश्च देवानामिन्द्रः सार्धं त्रायत्रिंशद्देवैरागतो ऽभूत् । दिव्यपुष्पगन्धमाल्यविलेपनचूर्णचीवरछत्रध्वजपटाकावतंसकाभरणपरिगृहीतैः । आगत्य कपिलवस्तुमहानगरं प्रदक्षिणीकृत्य यथागत एव सपरिवार उपर्यन्तरीक्षे ऽस्थात् । बोधिसत्त्वं नमस्कुर्वन् ॥

इति हि भिक्षवश्छन्दको बोधिसत्त्वस्य वचनमुपश्रुत्याश्रुपूर्णनयनो बोधिसत्त्वमेवमाह । आर्यपुत्र त्वं च कालज्ञो वेलज्ञश्च समयज्ञः । अयं चाकालो ऽसमयो गन्तुं (तत्किमाज्ञापयसि) इति ॥

बोधिसत्त्व आह । छन्दकायं स कालः ॥

छन्दक आह । कस्यार्यपुत्र कालः ॥

बोधिसत्त्व आह ।

यत्तन्मया प्रार्थितु दीर्घरात्रं सत्त्वानमर्थं परिमार्गता हि ।
अवाप्य बोधिं अजरामरं पदं मोचे जगत्तस्य क्षणो उपस्थितः ॥
इयमत्र धर्मता ॥ ० ॥

तत्रेदमुच्यते ।

भौमान्तरीक्षाश्च तथैव पालाः शक्रश्च देवाधिपतिः सयक्षः ।
यामाश्च देवास्तुषिताश्च निर्मिताः परनिर्मितोद्युक्त तथैव देवाः ॥
वरुणो मनस्वी अपि नागराजा अनावतप्तश्च तथैव सागरः ।
अभियुक्त ते चाप्यभिपूजनार्थं नैष्क्रम्यकाले नरपुङ्गवस्य ॥
ये चापि रूपावचरेषु देवाः प्रशान्तचारी सह ध्यानगोचराः ।
अभियुक्त ते चाप्यभिपूजनार्थं त्रैलोक्यपूज्यस्य नरोत्तमस्य ॥
दशादिशो ऽभ्यागतशुद्धसत्त्वाः सहायकाः पूर्वचरिं चरन्तः ।
द्रक्ष्यामहे निष्क्रमणं जिनस्य पूजां करिष्यामि तथानुरूपां ॥
स चापि गुह्याधिपतिर्महात्मा प्रदीप्तवज्रो नभसि प्रतिस्थितः ।
संनद्धगात्रो बलवीर्यविक्रमः करेण गृह्य ज्वलमानु वज्रं ॥
चन्द्रश्च सूर्यो उभि देवपुत्रौ प्रदक्षिणं वामकु सुप्रतिस्थितौ ।
दशाङ्गुली अञ्जलिभिर्गृहीत्वा नैष्क्रम्यशब्दो ऽनुविचारयन्ति ॥
पुष्यश्च नक्षत्र सपारिषद्यो औदारिकं निर्मिणि आत्मभावं ।
स्थित्वाग्रतस्तस्य नरोत्तमस्य मनोज्ञघोषाभिरुतं प्रमुञ्चत् ॥
सर्वे ऽद्य सिद्धाः शुभ तुभ्य मङ्गलाः पुष्यश्च युक्तः समयश्च गन्तुं ।
अहं पि यास्यामि त्वयैव सार्धं अनुत्तरायो भव रागसूदनः ॥

संचोदकश्चोदयि देवपुत्र उत्तिष्ठ शीघ्रं बलवीर्यउद्गतः ।
दुःखैर्हतांस्तारय सर्वसत्त्वान् नैष्क्रम्यकालः समुपस्थितस्ते ॥
समागता देवसहस्रकोट्यः प्रवर्षमाणा कुसुमान्मनोज्ञान् ।
स चापि पर्यङ्कवरे निषण्णो देवैर्वृतो भ्राजति दीप्ततेजः ॥ ० ॥

नगरे इस्त्रिक दारकाश्च पुरुषा याश्चाभवन्दारिकाः
सर्वे ते शयिता किलान्तमनसो ईर्यापथेभ्यश्च्युताः ।
हस्ति अश्वगवाश्च सारिकशुकाः क्रौञ्चा मयूरास्तथा
सर्वे ते शयिता किलान्तमनसः पश्यन्ति रूपं न ते ॥
ये चा ते दृढवज्रतोमरधराः शाक्यै सुता स्थापिताः
हस्तिअश्वरथेषु तोरणवरे ते चाप्यवस्थापिताः ।
राजा राजकुमार पार्थिवजनः सर्वे प्रसुप्ताभवन्
अपि चा नारिगणा विनग्नवसना सुप्ता न ते बुद्धिषू ॥
सो च ब्रह्मरुतो मनोज्ञवचनः कलविङ्कघोषस्वरो
रात्रौ निर्गत अर्धरात्रसमये तं छन्दकं अब्रवीत् ।
साधू छन्दक देहि कण्ठकु मम स्वालंकृतं शोभनं
मा विघ्नं कुरु मे ददाहि चपलं यदि मे प्रियं मन्यसे ॥
श्रुत्वा छन्दक अश्रुपूर्णनयनस्तं स्वामिनं अब्रवीत्
क्व त्वं यास्यसि सत्त्वसारथिवरा किं अश्वकार्यं च ते ।
कालज्ञः समयज्ञ धर्मचरणो कालो न गन्तुं क्वचित्
द्वारास्ते पिथिता दृढार्गलकृता को दास्यते तान्तव ॥
शक्रेणा मनसाथ चेतनवशात्ते द्वार मुक्ता कृताः
दृष्ट्वा छन्दक हर्षितो पुन दुखी अश्रूणि सो ऽवर्तयी ।

हा धिक्को मि सहायु किं तु कुरुमी धावामि कां वा दिशं
उग्रतेजधरेण वाक्यु भणितं शक्यं न संधारितुं ॥

सा सेना चतुरङ्गिनी बलवती किं भू करोतीह हा
राजा राजकुमार पार्थिवजनो नेमं हि बुध्यन्ति ते ।
स्त्रीसंघः शयितस्तथा शयवती ओस्वापिता देवतैः
हा धिग्गच्छति सिध्यते ऽस्य प्रणिधिर्यश्चिन्तितः पूर्वशः ॥

देवाः कोटिसहस्र हृष्टमनसस्तं छन्दकं अब्रुवन्
साधू छन्दक देहि कण्ठकवरं मा खेदयी नायकं ।
भेरीशङ्खमृदङ्गतूर्यनयुता देवासुरैर्वादिताः
नैवेदं प्रतिबुध्यते पुरवरं ओस्वापितं देवतैः ॥

पश्य छन्दक अन्तरीक्षविमलं दिव्या प्रभा शोभते
पश्य त्वं बहुबोधिसत्त्वनयुतां ये पूजनायागताः ।
शक्रं पश्य शचीपतिं बलवृतं द्वारस्थितं भ्राजते
देवांश्चाप्यसुरांश्च किन्नरगणां ये पूजनार्थागताः ॥

श्रुत्वा छन्दक देवतान वचनं तं कण्ठकं आलपी
एष्वागच्छति सत्त्वसारथिवरः त्वं ताव हेषिष्यसे ।
सो तं वर्षिकु वर्णकाञ्चनखुरं स्वालंकृतं छन्दना
उपनेती गुणसागरस्य वहनं रोदन्तको दुर्मना ॥

एषो ते वरलक्षणा हितकरा अश्वः सुजातः शुभो
गच्छ सिध्यतु तुभ्य एष प्रणिधिर्यश्चिन्तितः पूर्वशः ।
ये ते विघ्नकरा व्रजन्तु प्रशम आशां व्रतं सिध्यतां
भवही सर्वजगस्य सौख्यददनः स्वर्गस्य शान्त्यास्तथा ॥

सर्वा कम्पित षड्विकारा धरणी शयनाद्यदा सोत्थितः
आरूढः शशिपूर्णमण्डलनिभं तं अश्वराजोत्तमं ।
पाला पाणिविशुद्धपद्मविमला न्यसयिंसु अश्वोत्तमे
शक्रो ब्रह्म उभौ च तस्य पुरतो दर्शन्ति मार्गो ह्ययं ॥
आभा तेन प्रमुक्त अच्छविमला ओभासिता मेदिनी
सर्वे शान्त अपायसत्त्व सुखिता क्लेशैर्न बाध्यी तदा ।
पुष्पा वर्षिषु तूर्यकोटि रणिषू देवासुरास्तुष्टुवुः
सर्वे कृत्व प्रदक्षिणं पुरवरं गच्छन्ति हर्षान्विताः ॥ ० ॥

पुरवरोत्तमि देवत दीनमना उपगम्य गच्छति महापुरुषे ।
पुरतः स्थिता करुणदीनमना गिरया समालपति पद्ममुखं ॥
तमसाकुलं भुविमु सर्वपुरं नगरं न शोभति त्वया रहितं ।
न ममात्र काचि रति प्रीतिकरी त्यक्तं त्वया च यदिदं भवनं ॥
न पुनः शृणिष्यि रुतु पक्षिगणे अन्तःपुरे मधुरवेणुरवं ।
मङ्गल्यशब्द तथ गीतरवं प्रतिबोधनं तव अनन्तयशः ॥
दर्शे न भूयु सुरसिद्धगणां कुर्वन्तु पूजा तव रात्रिदिवं ।
घ्रायिष्यि गन्ध न च दिव्य पुनः त्वयि निर्गते निहतक्लेशगणे ॥
निर्भुक्तमाल्यमिव पर्युषितं त्यक्तं त्वयाद्य भवनं हि तथा ।
नटरङ्गकल्प प्रतिभायति मे त्वयि निर्गते न भुयु तेजशिरी ॥
ओजो बलं हरसि सर्वपुरे न च शोभते अटवितुल्यमिदं ।
वितथं ऋषीण वचनाद्य भुतं येही वियाकृतु भुवि चक्रबलो ॥
अबलं बलं भुविमु शाक्यबलं उच्छिन्न वंश इह राजकुले ।
आसा प्रनष्ट इह शाक्यगणे त्वयि निर्गते महति पुण्यद्रुमे ॥

अहमेव तुभ्य गति गच्छयमी    यथ त्वं प्रयासि अमला विमला ।
अपि चा कृपाकरुण संजनिय    व्यवलोकयस्व भवनं त्वमिद ॥
व्यवलोक्य चैव भवनं मतिमान्    मधुरस्वरो गिरमुदीरितवान् ।
नाहं प्रवेक्षि कपिलस्य पुरं    अप्राप्य जातिमरणान्तकरं ॥
स्थानासनं शयनचङ्क्रमणं    न करिष्य ऽहं कपिलवस्तुमुखं ।
यावन्न लब्ध वरबोधि मया    अजरामरं पदवरं ह्यमृतं ॥ ० ॥

यदसौ जगत्प्रधानो निष्क्रान्तु बोधिसत्त्वो
तस्था नभे व्रजन्तो स्तवयिंसु अप्सराणां ।
एष महद्दक्षिणीयो एष महपुण्यक्षेत्रं
पुण्यार्थिकान क्षेत्रं अमृताफलस्य दाता ॥
एन बहुकल्पकोटी दानदमसंयमेना
समुदानितास्य बोधिः सत्त्वकरुणायमाना ।
एष परिशुद्धशीलो सुव्रत अखण्डचारी
न च काम नैव भोगां प्रार्थेन्तु शीलरक्षी ॥
एष सद क्षान्तिवादी छिद्यन्ति अङ्गमङ्गि
न च क्रोधु नैव रोषः सत्त्वपरित्रायणार्थे ।
एष सद वीर्यवन्तो अविखिन्नकल्पकोट्यः
समुदानितास्य बोधिर्यष्टा च यज्ञकोटीः ॥
एष सद ध्यानध्यायी शान्तप्रशान्तचित्तो
ध्यायित्व सर्वक्लेशां मोचेष्यि सत्त्वकोटीः ।
एषो असङ्गप्राज्ञः कल्पैर्विकल्पमुक्तो
कल्पैर्विमुक्तचित्तो जिनु भेष्यति स्वयंभूः ॥

एष सद मैत्रचित्तो करुणाय पारप्राप्तो
मुदितो उपेक्षध्यायी ब्राह्मि पथि विधिज्ञः ।
एषो ऽतिदेवदेवो देवेभि पूजनीयो
शुभविमलशुद्धिचित्तो गुणनियुतपारप्राप्तः ॥

शरणं भयार्दितानां द्वीपो अचक्षुषाणां
लयनो उपद्रुतानां वैद्यश्चिरातुराणां ।
राजेव धर्मराजो इन्द्रः सहस्रनेत्रो
ब्रह्मस्वयंभुभूतः कायप्रश्रब्धचित्तो ॥

धीरः प्रभूतप्रज्ञो वीरो विविक्तचित्तः
शूरः किलेशघाती अजितं जयो जितारिः ।
सिंहो भयप्रहीनो नागः सुदान्तचित्तो
ऋषभो गणप्रधानः क्षान्तः प्रहीनकोपः ॥

चन्द्रः प्रभासयन्तः सूर्यो ऽवभासकारी
उल्का प्रद्योतकारी सर्वतमोविमुक्तः ।
पद्मं अनोपलिप्तं पुष्पं सुशीलपत्रं
मेरूरकम्पि शास्ता पृथिवी यथोपजीव्यो
रतनाकरो अक्षोभ्यः ॥

एन जितु क्लेशमारो एन जितु स्कन्धमारो
एन जितु मृत्युमारो निहतो ऽस्य देव(पुत्र)मारो ।
एष महसार्थवाहो कुपथप्रतिस्थितानां
अष्टाङ्गमार्गश्रेष्ठं देशेष्यति नचिरेण ॥

जरमरणक्लेशघाती तमतिमिरविप्रमुक्तो
भुवि दिवि च संप्रघुष्टो जिनु भेष्यते स्वयंभूः ।
स्तुत स्तवितु अप्रमेयो वरपुरुषरूपधारी
यत्पुण्य त्वां स्तवित्वा भोम यथ वादिसिंहः ॥

इति हि भिक्षवो ऽभिनिष्क्रान्तो बोधिसत्त्वो ऽतिक्रम्य शाक्यानतिक्रम्य क्रोड्यानतिक्रम्य मल्लान्मैनेयानामनुवैनेये निगमे षट्सु योजनेषु तत्र बोधिसत्त्वस्य रात्रिप्रभातो ऽभूत् ॥ ततो बोधिसत्त्वो कण्ठकादवतीर्य धरणीतले स्थित्वा तं महान्तं देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगसंघं विसर्जयति स्म । विसर्ज्य चास्यैतदभूत् । इमान्याभरणानि कण्ठकं च छन्दकस्य हस्ते विसर्जयामीति ॥

अथ बोधिसत्त्वश्छन्दकमामन्त्र्यैतदवोचत् । गच्छ त्वं छन्दक इमान्याभरणानि कण्ठकं च गृहीत्वा निवर्तयस्व ॥ यत्र च प्रदेशे छन्दको निवृत्तस्तत्र चैत्यं स्थापितमभूत् । अद्यापि तच्चैत्यं छन्दकनिवर्तनमिति ज्ञायते ॥

पुनश्च बोधिसत्त्वस्यैतदभवत् । कथं हि नाम चूडा च प्रव्रज्या चेति ॥ स खड्गेन चूडां छित्वा अन्तरीक्षे क्षिपति स्म । सा च त्रायत्रिंशता देवैः परिगृहीताभूत् पूजार्थं । अद्यापि च त्रायत्रिंशत्सु देवेषु चूडामहो वर्तते ॥ तत्रापि चैत्यं स्थापितमभूत् । अद्यापि च तच्चूडाप्रतिग्रहणमिति ज्ञायते ॥

पुनरपि बोधिसत्त्वस्यैतदभूत् । कथं हि नाम प्रव्रज्या च काशिकानि वस्त्राणि । स चेद्वनवासानुरूपाणि काषायानि वस्त्राणि लभेयं शोभनं स्यात् ॥

अथ शुद्धावासकायिकानां देवानामेतदभूत् । काषायैर्बोधिसत्त्वस्य कार्यमिति ॥ तत्रैको देवपुत्रो दिव्यं रूपमन्तर्धाप्य लुब्धकरूपेण काषायवस्त्रप्रावृतो बोधिसत्त्वस्य पुरतो ऽस्थात् ॥

अथ बोधिसत्त्वस्तमेतदवोचत् । स चेन्मे त्वं मार्षा काषायाणि वस्त्राणि दद्या इमानि ते ऽहं काशिकानि वस्त्राणि दद्यां ॥

सो ऽवोचत् । एतानि वस्त्राणि तव शोभन्ते । इमानि मम ॥

बोधिसत्त्व आह । अहं त्वां याचामि ॥

ततस्तेन लुब्धकरूपिणा देवपुत्रेण बोधिसत्त्वाय काषायाणि वस्त्राणि दत्तान्यभूवन् । काशिकानि गृह्णीते स्म ॥

अथ स देवपुत्रो गौरवजातस्तानि वस्त्राणि उभाभ्यां पाणिभ्यां शिरसि कृत्वा तत एव देवलोकमगमत् तेषां पूजार्थं ॥ तच्छन्दकेन दृष्टमभूत् ॥ तत्रापि चैत्यं स्थापितं । अद्यापि तच्चैत्यं काषायग्रहणमित्येवं ज्ञायते ॥

यदा च बोधिसत्त्वेन चूडां छित्त्वा काषायाणि वस्त्राणि प्रावृत्तानि तस्मिन्समये देवपुत्रशतसहस्रा हृष्टास्तुष्टा उदग्रा आत्तमनसः परमप्रमुदिताः प्रीतिसौमनस्यजाता हीहीकारकिलिकिलाप्रक्ष्वेडिता निर्नादनिर्घोषशब्दमकार्षुः । सिद्धार्थो भो मार्षा कुमारः प्रव्रजितः । सो ऽयमनुत्तरां सम्यक्संबोधिमभिसंबुध्य धर्मचक्रं प्रवर्तयिष्यति । असंख्येयाञ्जातिधर्माणः सत्त्वाञ्जात्या परिमोचयिष्यति । यावज्जराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासेभ्यः परिमोच्य संसारसागरात् पारमुत्तार्यानुत्तरे क्षेमे ऽभये ऽशोके

निरुपद्रवे शिवे विरजसे ऽमृते धर्मधातौ प्रतिष्ठापयिष्यतीति ॥ स च शब्दः शब्दपरंपरया यावदकनिष्ठभवनमभ्युद्गतो ऽभूत् ॥

ततो ऽन्तःपुरिकाभिः (कुमारमपश्यन्तीभिः) ग्रैष्मिकवार्षिकहैमन्तिकेषु प्रासादेष्वासनेषु च गृहेषु परिमार्गमाणा यदा न पश्यन्ति स्म । तदैकीभूताभिः कुररीभिरिवोत्क्रुष्टमभूत् ॥ तत्र काश्चित्स्त्रियः परमशोकार्ता हा तातेति क्रन्दन्ति स्म । काश्चिद्भ्रातः काश्चिद्भर्त इति क्रन्दन्ति स्म । काश्चिद्धा नाथेति क्रन्दन्ति स्म । काश्चिद्धा स्वामिन्निति । काश्चिन्नानाप्रियवचनप्रलापैः काश्चिन्नानाकायपरिसर्पिकया रुदन्ति स्म । काश्चिच्छीर्षोपकर्षिकया काश्चिदन्योन्यमुखावलोकितया रुदन्ति स्म । काश्चिच्चक्षुःपरिवर्तिकया काश्चित्स्ववदनानि वस्त्रैरुच्छाद्य रुदन्ति स्म । काश्चिदूरू पाणिभिः प्रस्फोटयन्त्यः काश्चिद्धृदयं पाणिभिस्ताडयन्त्यः काश्चिद्बाहून्पाणिभिः प्रस्फोटयन्त्यः काश्चिच्छिरांसि काश्चिच्छिरः पांशुभिरवकिरन्त्यो रुदन्ति स्म । काश्चिद्विक्षिप्तकेशः काश्चित्केशं विलुञ्चन्त्यः काश्चिदूर्ध्वबाहव उच्चैरुत्क्रोशन्ति स्म । काश्चिन्मृग्य इव दिग्धविद्धाः सहसा प्रधावन्त्यो रुदन्ति स्म । काश्चिन्मारुतकम्पिता इव कदल्यः प्रविकम्प्यमाना रुदन्ति स्म । काश्चिद्धरणीतले विनिपतिताः किंचित्प्राणाः काश्चिज्जालोत्क्षिप्तमत्स्या इव पृथिव्यां परिवर्त्यमाना रुदन्ति स्म । काश्चिन्मूलच्छिन्ना इव वृक्षाः सहसा धरणीतले निपत्य रुदन्ति स्म ॥

तं च शब्दं राजा श्रुत्वा शाक्यानामन्त्रयते स्म । किमेतदुच्चैरन्तःपुरे शब्दः श्रूयते ॥ शाक्या विज्ञाय कथयन्ति स्म । कुमारः

किल महाराजान्तःपुरे न दृश्यते ॥ राजा आह । क्षिप्रं नगरद्वाराणि पिथयत । कुमारमभ्यन्तरे मृगयामः ॥

ते सान्तर्बहिर्मृगयन्ते स्म । सान्तर्बहिर्मृगयमाना न पश्यन्ति स्म ॥

महाप्रजापत्यपि गौतमी परिदेवमाना महीतले परिवर्तते स्म ॥ राजानं शुद्धोदनमेवमाह । क्षिप्रं मां महाराज पुत्रेण समङ्गिनीं कुरुष्वेति ॥

ततो राजा चतुर्दिशमश्वदूतान् प्रेषयति स्म । गच्छत यावत्कुमारं न पश्यथ तावन्मा निवर्तयथ ॥

नैमित्तिकैर्वैपञ्चिकैश्च व्याकृतमभूत् । मङ्गलद्वारेण बोधिसत्त्वोऽभिनिष्क्रमिष्यतीति ॥ ते मङ्गलद्वारेण गच्छन्तः पश्यन्ति स्म । अन्तरा पथि पुष्पवर्षं प्रपतितं ॥ तेषामेतदभूत् । अनेन पथा कुमारोऽभिनिर्गत इति ॥

ते स्वल्पमन्तरं गत्वा तं देवपुत्रं पश्यन्ति स्म । बोधिसत्त्वस्य काशिकवस्त्राणि शिरसि कृत्वा आगच्छन्तं ॥ तेषामेतदभूत् । इमानि खलु कुमारस्य काशिकवस्त्राणि । मा खल्वनेनैषां वस्त्राणामर्थे कुमारो जीविताद्व्यपरोपितः स्यात् । गृह्णीतैनमिति ॥ भूयः पश्यन्ति स्म । तस्य पृष्ठतश्छन्दकं कण्ठकमाभरणानि चादायागच्छन्तं ॥ ततस्ते परस्परमूचुः । मा तावद्भोः साहसं मा कार्ष्ट । एष छन्दको ऽभ्यागच्छति कण्ठकमादाय यावदेनं प्रच्छामः ॥

ते छन्दकं परिपृच्छन्ति स्म । हे छन्दक मा खल्वनेनैव पुरुषेण काशिकानां वस्त्राणामर्थाय कुमारो जीविताद्व्यपरोपितः स्यात् ॥

छन्दक आह । नह्येतदपि त्वनेन कुमाराय काषायाणि वस्त्राणि दत्तानि । कुमारेण चास्यैतानि काशिकानि वस्त्राणि दत्तानि ॥

अथ स देवपुत्रस्तानि वस्त्राण्युभाभ्यां पाणिभ्यां शिरसि कृत्वा तत एव देवलोकमगमत् तेषां पूजार्थं ॥

एवं च ते भूयश्छन्दकं परिपृच्छन्ति स्म । तत्किं मन्यसे छन्दक गच्छामो वयं । शक्यः कुमारः प्रतिनिवर्तयितुं ॥ स आह । मा खल्वनिवर्त्यः कुमारो दृढवीर्यपराक्रमः ॥ एवं च तेनोक्तं । न तावदहं पुनरपि कपिलवस्तुमहानगरं प्रवेक्ष्यामि । यावन्मे नानुत्तरां सम्यक्संबोधिमभिसंबुध्येति ॥ यथा च कुमारेणोक्तं तथैव तद्भविष्यति । तत्कस्मात् । अनिवर्त्यः कुमारो दृढवीर्यपराक्रमः ॥

ततश्छन्दकः कण्ठकमाभरणानि चादायान्तःपुरं प्राविशत् ॥ ततस्तान्याभरणानि चिरेण कालेन भद्रिकस्य शाक्यकुमारस्य महानाम्नो ऽनिरुद्धस्य चाबध्यन्त स्म । तानि महानारायणसंघटनकायार्थमन्ये (नारायणसंहनना) न शक्नुवन्ति स्म धारयितुं । यदा न कश्चित्तानि धारयितुं शक्नोति स्म । तदा महाप्रजापत्या गौतम्या चिन्तितमभूत् । यावदहमिमान्याभरणानि पश्यामि तावन्मम हृदये शोको भविष्यति । यन्वहमिमान्याभरणानि पुष्करिण्यां प्रक्षिपेयमिति ॥ ततो महाप्रजापती गौतमी तान्याभरणानि पुष्करिण्यां प्रक्षिपति स्म ॥ अद्यापि सा आभरणपुष्करिणीत्येवं संज्ञायते ॥

तत्रेदमुच्यते ।

निष्क्रान्तु शूरो यद विदु बोधिसत्त्वो
नगरं विबुद्धं कपिलपुरं समग्रं ।

मन्यन्ति सर्वे शयनगतो कुमारो
अन्योन्य हृष्टाः प्रमुदित आलभन्ते ॥
गोपा विबुद्धा तथ अपि इस्त्रिगारा
शयनं निरीक्षी न च दृशि बोधिसत्त्वं ।
उत्क्रोसु मुक्तो नरपतिनो अगारे
हा वञ्चिता स्मः कहि गतु बोधिसत्त्वो ॥
राजा श्रुणित्वा धरणितले निरस्तो
उत्क्रोसु कृत्वा अहो मम एकपुत्रो ।
सो स्तिमितो ही जलघटसंप्रसिक्तो
आश्वासयन्ती बहुशत शाकियानां ॥
गोपा शयातो धरणितले निपत्य
केशां लुनाती अवशिरि भूषणानि ।
अहो सुभाष्टं मम पुरि नायकेना
सर्वप्रियेभिर्नचिरतु विप्रयोगः ॥
रूपासुरूपा विमलविचित्रिताङ्गा
अच्छा विशुद्धा जगति प्रिया मनापा ।
धन्या प्रसस्ता दिवि भुवि पूजनीया
क्व त्वं गतोऽसी मम शयि छोरयित्वा ॥
न पास्यि पानं न च मधु न प्रमादं
भूमौ शयिष्ये जटमकुटं धरिष्ये ।
स्नानं जहित्वा व्रततप आचरिष्ये
यावन्न द्रक्ष्ये गुणधरु बोधिसत्त्वं ॥

उद्यान सर्वे अफल अपत्रपुष्पा
हारा विशुद्धा तमरजपांशुतुल्याः ।
वेश्मं न शोभी अटवि पुरं प्रकाशं
यत्नेन त्यक्तं नरवरपुङ्गवेन ॥

हा गीतवाद्याः सुमधुरमञ्जुघोषाः
हा इस्त्रिगारा विगडितभूषणाभिः ।
हा हेमजालैः परिस्फुटमन्तरिक्षं
न भूयु द्रक्ष्ये गुणधरविप्रहीणा ॥

मातृस्वसा चा परमसुदुःखप्राप्ता
आश्वासयाती म रुदहि शाक्यकन्ये ।
पूर्वे च उक्तं नरवरपुङ्गवेन
कर्तास्मि लोकि जरमरणात्प्रमोक्षं ॥

सो चा महर्षी कुशलसहस्रचीर्णः
षड्योजनानी प्रतिगतु रात्रिशेषे ।
छन्दस्य देती हयवरु भूषणानि
छन्दा गृहीत्वा कपिलपुरं प्रयाहि ॥

मातापितॄणां मम वचनेन पृच्छे
गतः कुमारो न च पुन शोचयेथा ।
बुद्धित्व बोधिं पुनरिहमागमिष्ये
धर्मं श्रुणित्वा भविष्यथ शान्तचित्ताः ॥

छन्दो रुदन्तो प्रतिभणि नायकस्य
न मे ऽस्ति शक्तिर्बलत पराक्रमो वा ।

हनेयु मह्यं नरवरज्ञातिसंघाः
छन्दा क्व नीतो गुणधरु बोधिसत्त्वो ॥

मा ताहि छन्दा प्रतिभणि बोधिसत्त्वो
तुष्टा भविता अपि मम ज्ञातिसंघाः ।
शास्तारसंज्ञा त्वयि सद भाविष्यन्ति
प्रेमेण मह्यं त्वयमपि वर्तिष्यन्ते ॥

छन्दो गृहीत्वा हयवरु भूषणानि
उद्यानप्राप्तो नरवरपुङ्गवस्य ।
उद्यानपालः प्रमुदितु वेगजातो
आनन्दशब्दं प्रतिभणि शाकियानां ॥

अयं कुमारो हयवरु छन्दकश्च
उद्यानप्राप्तो न च पुन शोचितव्यो ।
राजा श्रुणित्वा परिवृतु शाकियेभिः
उद्यानप्राप्तो प्रमुदितु वेगजातो ॥

गोपा विदित्वा दृढमतिबोधिसत्त्वं
नो चापि हर्षी न च गिर श्रद्दधाति ।
अस्थानमेतद्विनिगतु यत्कुमारो
अप्राप्य बोधिं पुनरिह आगमेया ॥

दृष्ट्वा तु राजा हयवरु छन्दकं च
उत्क्रोसु कृत्वा धरणितले निरस्तो ।
हा मह्य पुत्रा सुकुशलगीतवाद्या
क्व त्वं गतोऽसी विजहिय सर्वराज्यं ॥

साधू भणाही वचन ममेह छन्दा
किं वा प्रयोगः क्व च गतु बोधिसत्त्वः ।
केनाथ नीतो विवरित केन द्वारा
पूजा च तस्या कथ कृत देवसंघैः ॥

छन्दो भणाती शृणु मम पार्थिवेन्द्रा
रात्रौ प्रसुप्ते नगरि सबालवृद्धे ।
सो मञ्जुघोषो मम भणि बोधिसत्त्वो
छन्दा ददाही मम लघु अश्वराजं ॥

सो बोधयामी नरगणि नारिसंघं
सुप्ता प्रसुप्ता न च गिर ते शृणन्ति ।
सो रोदमानो ददि अङ्ग अश्वराजं
हन्त व्रजाही हितकर येन कामं ॥

शक्रेण द्वारा विवरित यन्त्रयुक्ताः
पालाश्चतस्रो हयचरणे शिलिष्टाः ।
आरूढि शूरि प्रचलित त्रिसहस्राः
मार्गो नभेस्मिन्सुविपुल येन क्रान्तो ॥

आभा प्रमुक्ता विहततमोऽन्धकारा
पुष्पा पतिंसू तुरियशता रणिंसू ।
देवा स्तविंसू तथपि हि चाप्सराणी
नभसा प्रयातो परिवृतु देवसंघैः ॥

छन्दो गृहीत्वा हयवरु भूषणानि
अन्तःपुरे सो उपगतु रोदमानो ।

दृष्ट्वा तु गोपा हयवरु छन्दकं च
संमूर्छयित्वा धरणितले निरस्ता ॥
उद्युक्त सर्वा सुविपुलनारिसंघाः
वारिं गृहीत्वा स्नपयिसु शाक्यकन्यां ।
मा हैव कालं करिष्यति शोकप्राप्ता
द्वाभ्यां प्रियाभ्यां बहु भवि विप्रयोगो ॥
स्थामं जनित्वा सुदुःखित शाक्यकन्या
कण्ठे ऽवलम्ब्या हयवर अश्वराजे ।
अनुस्मरित्वा पुरिमक कामक्रीडां
नानाप्रलापी प्रलपति शोकप्राप्ता ॥ ० ॥

हा मह्य प्रीतिजनना हा मम नरपुङ्गवा विमलचन्द्रमुखा ।
हा मम सुरूपरूपा हा मम वरलक्षणा विमलतेजधरा ॥
हा मम अनिन्दिताङ्गा सुजात अनुपूर्वउद्गता असमा ।
हा मम गुणाग्रधारिं नरमरुभिः पूजिता परमकारुणिका ॥
हा मम बलोपपेता नरायणस्थामवन्निहतशत्रुगणा ।
हा मम सुमञ्जुघोषा कलविङ्करुतस्वरा मधुरब्रह्मरुता ॥
हा मम अनन्तकीर्ते शतपुण्यसमुद्गता विमलपुण्यधरा ।
हा मम अनन्तवर्णा गुणगणप्रतिमण्डिता ऋषिगणप्रीतिकरा ॥
हा मम सुजातजाता लुम्बिनिवन उत्तमे भ्रमरगीतरुते ।
हा मम विघुष्टशब्दा दिवि भुवि अभिपूजिता विपुलज्ञानद्रुमा ॥
हा मम रसारसाग्रा बिम्बोष्ठा कमललोचना कनकनिभा ।
हा मम सुशुद्धदन्ता गोक्षीरतुषारसंनिभसहितदन्ता ॥

हा मम सुनास सुभ्रू ऊर्णाभ्रुमुखान्तरेस्थिता विमला ।
हा मम सुवृत्तस्कन्धा चापोदर एणियजङ्घवृत्तकटी ॥
हा मम गजहस्तोरू करचरणविशुद्धशोभना ताम्रनखा ।
इति तस्य भूषणानी पुण्येहि कृतानि पार्थिवे प्रीतिकरा ॥
हा मह्य गीतवाद्या वरपुष्पविलेपना शुभऋतुप्रवरे ।
हा मह्य पुष्पगन्धा अन्तःपुरि गीतवादितैर्हर्षकरा ॥
हा कण्ठका सुजाता मम भर्तु सहायकस्त्वया क्व नीतो ।
हा छन्दका निकरुणा न बोधयसि गच्छमानके नरवरिष्ठे ॥
गच्छत्ययं हितकरो एका गिर तस्मिन्नन्तरि न भसि कस्मात् ।
इतु अद्य पुरवरातो गच्छति नरदम्यसारथिः कारुणिकः ॥
कथ वा गतो हितकरो केन च निष्क्रामितो इतु सराजकुलात् ।
कतमां दिशामनुगतो धन्या वनगुल्मदेवता यास्य सखी ॥
अतिदुःख मह्य छन्दा निधिदर्शिय नेत्र उद्धृता चक्षु ददा ।
सर्वैर्जनैश्च छन्दा मातापितृनित्यवर्णिता पूजनियाः ॥
तानपि जहित्व निर्गतु किं पुनरिम इस्त्रिकामरतिं ।
हा धिक् प्रियैर्वियोगो नटरङ्गस्वभावसंनिभा अनित्या ॥
संज्ञाग्रहेण बाला दृष्टिविपर्यास निश्रिता जन्मच्युति ।
प्रागेव तेन भणितं नास्ति जरामरणसंस्कृते काश्चि सखा ॥
परिपूर्यतो ऽस्य आसा स्पृशतू वरबोधिमुत्तमां द्रुमवरिष्ठे ।
बुद्धित्व बोधिविरजां पुनरपि एतू इहा पुरवरे अस्मिन् ॥ ० ॥

छन्दकः परमदीनमानसो गोपिकाय वचनं श्रुणित्वना ।
साश्रुकण्ठगिर संप्रभाषते साधु गोपि निशृणोहि मे वचः ॥

रात्रिये रहसि यामि मध्यमे सर्वनारिगणि संप्रसुप्तके ।
सो तदा च शतपुण्यउद्गतो आलपेति मम देहि कण्ठकं ॥
तं निशाम्य वचनं तदन्तरं तुभ्य प्रेक्षमि शयानि सुप्तिकां ।
उच्चघोषु अद्य तत्र मुञ्चमी उत्थि गोपि अयु याति ते प्रियो ॥
देवता वचनु तं निरोधयी एक इस्त्रि नपि काचि बुध्यते ।
रोदमान समलंकरित्वना अश्वराजु ददमी नरोत्तमे ॥
कण्ठको ह्रिषति उग्रतेजस्वी ओशमातु स्वरु तस्य गच्छती ।
नो च कश्चि शृणुते पुरोत्तमे देवताभि ओस्वापनं कृतं ॥
स्वर्णरूप्यमणिकोटिता मही कण्ठकस्य चरणै पराहता ।
सा रणी मधुरभीष्मशोभना नो च केचि शृणुवन्ति मानुषाः ॥
पुष्य युक्तु अभु तस्मि अन्तरे चन्द्रज्योतिष नभे प्रतिस्थिता ।
देवकोटि गगणे कृताञ्जली ओनमन्ति शिरसा भिवन्दिषू ॥
यक्षराक्षसगणैरुपस्थिता लोकपालचतुरो महर्धिकाः ।
कण्ठकस्य चरणां करे न्यसी पद्मकेशरविशुद्धनिर्मलं ॥
सो च पुण्यशततेजउद्गतो आरुही कुमुदवर्षिकोपमं ।
षड्विकार धरणी प्रकम्पिता बुद्धक्षेत्र स्फुट आभनिर्मला ॥
शक्र देवगुरुः शचीपतिः स्वाम द्वार विवरी तदन्तरे ।
देवकोटिनयुतै पुरस्कृतो सो व्रजी अमरनागपूजितो ॥
संभ्रमाच्च इह जाति कण्ठको लोकनाथु वहती नभोऽन्तरे ।
देवदानवगणा सइन्द्रिकाः ये वहन्ति सुगतस्य गच्छतः ॥
अप्सरा कुशलगीतवादिते बोधिसत्त्वगुणभाषमानिकाः ।
कण्ठकस्य बलु ते ददन्तिकाः मुञ्चि घोषु मधुरं मनोरमं ॥

कण्ठका वहहि लोकनायकं शीघ्रशीघ्र म जनेहि खेदतां ।
नास्ति ते भयमपायदुर्गतिं लोकनाथमभिधारयित्वना ॥
एकमेक अभिनन्दते सुरो वाहनं स्मि अङ्ग लोकनायके ।
नो च किंचिदपि देशु विद्यते देवकोटिचरणैर्न मर्दितं ॥
पश्य कण्ठक नभोऽन्तरे द्रुमं मार्गु संस्थितु विचित्रशोभनं ।
रत्नवेदिकविचित्रमण्डितं दिव्यसारवरगन्धधूपितं ॥
एन कण्ठक शुभेन कर्मणा त्रायत्रिंशभवने सुनिर्मितो ।
अप्सरैः परिवृतः पुरस्कृतो दिव्यकामरतिभी रमिष्यसे ॥
साधु गोपि म खु भूयु रोदही तुष्ट भोहि परमप्रहर्षिता ।
द्रक्ष्यसे नचिरतो नरोत्तमं बोधिप्राप्तममरैः पुरस्कृतं ॥
ये नराः सुकृतकर्मकारकाः ते न गोपि सद रोदितव्यकाः ।
सो च पुण्यशततेजउद्गतो हर्षितव्य न स रोदितव्यकः ॥
सप्तरात्र भणमानु गोपिके सा वियूह नपि शक्य क्षेपितुं ।
या वियूह अभु तत्र पार्थिवे निष्क्रमन्ति नरदेवपूजिते ॥
लाभ तुभ्य परमा अचिन्तिया यं त्वुपस्थितु जगे हितंकरो ।
मह्य संज्ञि स्वकमेव वर्तते त्वं हि भेष्यसि यथा नरोत्तमः ॥ इति ॥

॥ इति श्रीललितविस्तरेऽभिनिष्क्रमणपरिवर्तो नाम पञ्चदशमोऽध्यायः ॥

एवं खलु भिक्षवश्छन्दको बोधिसत्त्वाधिष्ठानेन राज्ञः शुद्धोदनस्य गोपायाः शाक्यकन्यायाश्च सर्वस्य चान्तःपुरस्य सर्वस्य च शाक्यगणस्य शोकविनोदकथामकार्षीत् ॥

इति हि भिक्षवो बोधिसत्त्वो लुब्धकरूपाय देवपुत्राय काशिकानि वस्त्राणि दत्त्वा तस्य सकाशात्काषायाणि वस्त्राणि गृहीत्वा स्वयमेवं प्रव्रज्यां लोकानुवर्तनामुपादाय सत्वानुकम्पार्थं सत्त्वपरिपाचनार्थं ॥

अथ बोधिसत्त्वो येनैव शाक्या ब्राह्मण्या आश्रमस्तेनोपसंक्रामत् । सा बोधिसत्त्वं वासेन भक्तेन चोपनिमन्त्रयते स्म ॥

ततो बोधिसत्त्वः पद्माया ब्राह्मण्या आश्रमं गच्छति स्म । तयापि बोधिसत्त्वो वासेन भक्तेन चोपनिमन्त्रितो ऽभूत् ॥

ततो रैवतस्य ब्रह्मर्षेराश्रममगमत् । असावपि बोधिसत्त्वं तथैवोपनिमन्त्रयते स्म ॥ तथैव राजको ऽपि दतृमदण्डिकपुत्रो बोधिसत्त्वमुपनिमन्त्रयते स्म ॥

इति हि भिक्षवो बोधिसत्त्वो ऽनुपूर्वेण वैशालीं महानगरीमनुप्राप्तो ऽभूत् ॥

तेन खलु पुनः समयेनाराडः कालापो वैशालीमुपनिसृत्य प्रतिवसति स्म । महता श्रावकसंघेन सार्धं त्रिभिः शिष्यशतैः ॥ स शिष्येभ्य आकिंचन्यायतनसहव्रतायै धर्मं देशयति स्म ॥ स बोधिसत्त्वं दूरत एवागच्छन्तं दृष्ट्वाश्चर्यप्राप्तः शिष्यानामन्त्रयते स्म । पश्यत पश्यत भो रूपमस्येति ॥ ते ऽब्रुवन् । एव ह्येतत्पश्यामः । एनमतिविस्मयनीयं ॥

ततो ऽहं भिक्षवो येनाराडः कालापस्तेनोपसंक्रम्याराडं कालापमेतदवोचत् । चरेयमहं भो आराडे कालापे ब्रह्मचर्यं ॥ सो ऽवोचत् । चर भो गौतम तथारूपेण धर्माख्याने यस्मिन्श्राद्धः कुलपुत्रो ऽल्पकृच्छ्रेणाज्ञामाराधयति ॥

तस्य मे भिक्षव एतदभूत्। अस्ति मे छन्दोऽस्ति वीर्यमस्ति स्मृतिरस्ति समाधिरस्ति प्रज्ञा यन्वहमेकोऽप्रमत्त आतापी व्यपकृष्टो विहरेयं। तस्यैव धर्मस्य प्राप्तये साक्षात्क्रियायै॥

अथ खल्वहं भिक्षवो एकोऽप्रमत्त आतापी व्यपकृष्टो विहरन्नल्पकृच्छ्रेणैवं तं धर्ममध्यवगच्छन्साक्षादकार्षं॥

अथ खल्वहं भिक्षवो येनाराडः कालापस्तेनोपसंक्रम्यैतदवोचत्। एतावद्भो त्वयाऽराड धर्माधिगतः साक्षात्कृतः॥ सो ऽवोचत्। एवमेतद्भो गौतम॥ तमहमवोचत्। मयापि भो एष धर्मः साक्षात्कृतो ऽधिगतः॥ सो ऽवोचत्। तेन हि भो गौतम यदहं धर्मं जानामि भवानपि तं जानाति यं भवाञ्जानाति अहमपि तं जानामि। तेन ह्यावामुभावपीमं शिष्यगणं परिहरावः॥

इति हि भिक्षव आराडः कालापः परमया पूजया मां पूजयति स्म। अन्तेवासिषु च मां समानार्थतया स्थापयति स्म॥

तस्य मे भिक्षव एतदभूत्। अयं खल्वाराडस्य धर्मो न नैर्याणिको न निर्याति तत्कतरस्य सम्यग्दुःखक्षयाय यन्वहमत उत्तरि पर्येषमाणश्चरेयं॥

अथ खल्वहं भिक्षवो यथाभिरामं वैशाल्यां विहृत्य मगधेषु च प्रक्रान्तो ऽभूत् सो ऽहं मगधेषु चर्यां चरन्। येन मागधकानां राजगृहं नगरं तदनुसृतो येन च पाण्डवः पर्वतराजस्तेनोपसंक्रान्तो ऽभूवं॥ तत्राहं पाण्डवे पर्वतराजपार्श्वे व्याहार्षं। एकाक्यद्वितीयो ऽसहायो ऽनेकैर्देवकोटिनयुतशतसहस्रैः संरक्षितः॥

ततो ऽहं कल्यमेव संनिवास्य पात्रचीवरमादाय तपोद्द्वारेण राजगृहं महानगरं पिण्डाय प्राविक्षत्। प्रासादिकेनाभिक्रान्तेन प्रतिक्रान्तेन व्यवलोकितेन संमिञ्जितेन प्रसारितेन प्रासादिकेन संघाटीपटपात्रचीवरधारणेनाविक्षिप्तैरिन्द्रियैरबहिर्गतेन मानसेन निर्मितवत्तैलपात्रधरवद्युगमात्रं पश्यन् ॥ तत्र मां राजगृहका मनुष्या दृष्ट्वा विस्मिता अभूवन्। किं स्विदयं ब्रह्मा भविष्यति शक्रो देवानामिन्द्रो ऽहो स्विद्वैश्रवणो ऽहो स्वित्किंचिद्गिरिदैवतं ॥

तत्रेदमुच्यते।

अथ विमलधरो ह्यनन्ततेजो स्वयमिह प्रव्रजियान बोधिसत्त्वः।
शान्तमनु दान्त ईर्यवन्तो विहरति पाण्डवशैलराजपार्श्वे ॥
रजनि विगतु ज्ञात्व बोधिसत्वः परमसुदर्शनियं निवासयित्वा।
पात्र प्रतिगृहीय नीचमानो प्रविशति राजगृहं सपिण्डपात्रं ॥
कनकमिव सुधातुजातरूपं कवचितु लक्षणत्रिंशता द्विभिश्च।
नरगण तथ नारि प्रेक्षमाणो न च भवते क्वचि तृप्ति दर्शनेन ॥
वीथि रचित रत्नवस्त्रधार्यैं अवशिरिया जनु याति पृष्ठतोऽस्य।
को नु अयु अदृष्टपूर्वसत्त्वो यस्य प्रभाय पुरं विभाति सर्वं ॥
उपरि स्थिहिय नारिणां सहस्रा तथरिव द्वारि तथैव वातयाने।
रथ्य भरित गेहि शून्य कृत्वा नरवरु प्रेक्षिषु ते अनन्यकर्माः ॥
न च भुयु क्रयविक्रयं करोन्ती न च पुन सौण्ड पिबन्ति मद्यपानं।
न च गृहि न च वीथिये रमन्ते पुरुषवरस्य निरीक्षमाण रूपं ॥
पुरुष त्वरितु गच्छि राजगेहं अवचिषु राज स बिम्बिसार तुष्टो।
देव परम तुभ्य लब्ध लाभा स्वयमिह ब्रह्म पुरे चराति पिण्डं ॥

केचि अवचि शक्र देवराजो अपरि भणन्ति सुयाम देवपुत्रः ।
तथ अपि संतुषितं व निर्मितश्च अपरि भणन्ति सुनिर्मितेषु देवः ॥
केचि पुन भणन्ति चन्द्रसूर्यौ तथपि च राहु बलिश्च वेमचित्री ।
केचि पुन भणन्ति वाचमेवं अयु सो पाण्डवशैलराजवासी ॥
वचनमिमु शृणित्व पार्थिवोऽसौ परम उदग्रमना स्थितो गवाक्षे ।
प्रेक्षति वरसत्त्व बोधिसत्त्वं ज्वलतु श्रिरीय सुधातुकाञ्चनं वा ॥
पिण्ड ददिय राज बिम्बसारः पुरुषमवोचन्निरीक्ष क्व प्रयाती ।
दृष्ट गिरिवरं स गच्छमानो अवचिषु देव गतः स शैलपार्श्वे ॥
रजनि विगतु ज्ञात्व बिम्बिसारो महत जनैः परिवारितो नरेन्द्रः ।
उपगमि पाण्डवशैलराजमूले श्रिरिय ज्वलन्तु तमदृशाति शैलं ॥
धरणि व्रजितु यानि ओरुहित्वा परमसुगौरव प्रेक्षि बोधिसत्त्वं ।
मेरुरिव यथा ह्यकम्प्यमानो न्यसिय तृणानि निषण्ण सोस्तिकेन ॥
शिरसि चरणि वन्दयित्व राजा विविधकथां समुदाहरित्ववोचत् ।
ददमि तव उपाधु सर्वराज्याद्ध रम इह कामगुणैरहं च पिण्डं ॥
प्रभणति गिरि बोधिसत्त्व श्लक्ष्णं धरणिपते चिरमायु पालयस्व ।
अहमपि प्रविजह्य राज्यमिष्टं प्रव्रजितो निरपेक्षि शान्तिहेतोः ॥
दहरु तरुणयौवनैरुपेतः शुभतनुवर्णनिभो ऽसि वेगप्राप्तः ।
विपुलधन प्रतीच्छ नारिसंघं इह मम राज्यि वसाहि भुङ्क्ष्व कामां ॥
परमप्रमुदितो ऽस्मि दर्शनात्ते ऽवचिषु स मागधराज बोधिसत्त्वं ।
भवहि मम सहायु सर्वराज्यं अहु तव दास्यि प्रभूत भुङ्क्ष्व कामां ॥
मा च पुन वने वसाहि शून्ये म भुयु तृणेषु वसाहि भूमिवासं ।
परमसुकुमारु तुभ्य कायो इह मम राज्यि वसाहि भुङ्क्ष्व कामां ॥

प्रभणति गिरि बोधिसत्त्व श्लक्ष्णं अकुटिलप्रेमणिया हितानुकम्पी ।
स्वस्ति धरणिपाल ते ऽस्तु नित्यं न च अहु कामगुणेभिरर्थिको ऽस्मि॥
काम विषसमा अनन्तदोषा नरकप्रपातन प्रेततिर्यग्योनौ ।
विदुभि विगर्हित चाप्यनार्यकामा जहित मया यथ पक्वखेटपिण्डं ॥
काम द्रुमफला यथा पतन्ती यथमिव अभ्र वलाहका व्रजन्ती ।
अध्रुव चपलगामि मारुतं वा विकिरण सर्वशुभस्य वञ्चनीया ॥
काम अलभमान दह्यन्ते तथ अपि लब्धु न तृप्ति विन्दयन्ती ।
यद् पुन अवशस्य भक्षयन्ते तद् महदुःख जनेन्ति घोरकामाः ॥
काम धरणिपाल ये च दिव्या तथ अपि मानुष काम ये प्रणीता ।
एकु नरु लभेत सर्वकामां न च सो तृप्ति लभेत भूयु एषन् ॥
ये तु धरणिपाल शान्तदान्ता आर्य अनास्रव धर्मपूर्णसंज्ञा ।
प्रज्ञविदुष तृप्त ते सुतृप्ता न च पुन कामगुणेषु काचि तृप्तिः ॥
काम धरणिपाल सेवमाना पुरिम न विद्यति कोटिसंस्कृतस्य ।
लवणजल यथा हि नारु पित्वा भुयु तृष वर्धति कामसेवमाने ॥
अपि च धरणिपाल पश्य कायं अध्रुवमसारकु दुःखयन्त्रमेतत् ।
नवभि व्रणमुखैः सदा स्रवन्तं न मम नराधिप कामछन्दरागः ॥
अहमपि विपुलां विजह्य कामां तथपि च इस्त्रिसहस्रदर्शनीयां ।
अनभिरतु भवेषु निर्गतो ऽहं परमशिवां वरबोधि प्राप्तुकामः ॥

राजा आह ।

कतमदिशि कुतो गतोऽसि भिक्षो क्व च तव जन्म क्व ते पिता क्व माता ।
क्षत्रिय अथ ब्राह्मणो ऽथ राजा परिकथ भिक्षु यदी न भारसंज्ञा ॥

बोधिसत्त्व आह ।

श्रुतु ति धरणिपाल शाकियानां कपिलपुरं परमं सुऋद्धिस्फीतं ।
पितु मम शुद्धोदनेति नाम्ना तनु अहु प्रव्रजितो गुणाभिलाषी ॥

राजा आह ।

साधु तव सुदृष्टदर्शनं ते यनु तव जन्म वयं पि तस्य शिष्याः ।
अपि च मम क्षमस्व आशयेना यमपि निमन्त्रितु कामवीतरागो ॥
यदि त्वय अनुप्राप्तु भोति बोधिः तद मम सेति भोति धर्मस्वामिं ।
अपि च मम पुरा सुलब्ध लाभा मम विजिते वससीह यत्स्वयंभो ॥
पुनरपि चरणानि वन्दयित्वा कृत्व प्रदक्षिणु गौरवेण राजा ।
स्वकजनपरिवारितो नरेन्द्रः पुनरपि राजगृहं अनुप्रविष्टः ॥
मगधपुरि प्रवेशि लोकनाथो विहरिय शान्तमना यथाभिप्रायं ।
अर्थु करिय देवमानुषाणां उपगमि तीरु निरञ्जना नरेन्द्रः ॥

॥ इति श्रीललितविस्तरे बिम्बिसारोपसंक्रमणपरिवर्तो नाम षोडशमो ऽध्यायः ॥

तेन खलु पुनर्भिक्षवः समयेन रुद्रको नाम रामपुत्रो राजगृहं नाम महानगरमुपनिसृत्य विहरति स्म । महता शिष्यगणेन सार्धं सप्तभिः शिष्यशतैः । स तेभ्यो नैवसंज्ञानासंज्ञायतनसहव्रतायै धर्मं देशयति स्म ॥ अद्राक्षीत्खल्वपि भिक्षवो बोधिसत्त्वो रुद्रकं रामपुत्रं संघिगणिनं गणाचार्यं ज्ञातमभीप्सितं बहुजनपूजितं पण्डितसंमतं । दृष्ट्वा चास्यैतदभूत् । अयं खल्वपि रुद्रको रामपुत्रः संघेगणी गणाचार्यः । ज्ञातो ऽभीप्सितो बहुजनपूजितः पण्डितसंमतः । स

चेदहमस्यान्तिकमुपसंक्रम्य व्रततपमारभेयं । नैष ममान्तिके विशिष्टसंज्ञो भवेन्नापि प्रत्यक्षज्ञानेन ज्ञातो भवेन्नापि संस्कृतानां साश्रवानां सोपादानानां ध्यानसमाधिसमापत्तीनां दोषो दृष्टो भवेत् ॥ यन्वहं तथारूपमुपायमुपसंदर्शयेयं येनैते च प्रत्यक्षा भवेयुः। ध्यानगोचराणां च समापत्त्यारम्बणानां लौकिकसमाधीनामनिःसरणता दर्शिता भवेत्॥ यन्वहं रुद्रकस्य रामपुत्रस्य सकाशमुपसंक्रम्य स्वसमाधिगुणविशेषोद्भावनार्थं शिष्यत्वमभ्युपगम्य संस्कृतसमाधीनामसारतामुपदर्शयेयमिति ॥

अथ खलु भिक्षवो बोधिसत्त्व इदमर्थवशमधिकृत्य येन रुद्रको रामपुत्रस्तेनोपसंक्रामदुपसंक्रम्य रुद्रकं रामपुत्रमेतदवोचत् । कस्ते मार्ष शास्ता कस्य वा धर्मं देशितमाजानासि ॥

इत्येवमुक्ते रुद्रको रामपुत्रो बोधिसत्त्वमेवमाह । न मे मार्ष कश्चिच्छास्ता। अपि तु खलु पुनः स्वयमेव मयेदं सम्यगधिगतमिति ॥

बोधिसत्त्व आह । किं भवताधिगतं ॥ आह । नैवसंज्ञानासंज्ञायतनसमापत्तेर्मार्गः ॥

बोधिसत्त्व आह । लभेमहि वयं भवतः सकाशादववादानुशासनीयस्य समाधेर्मार्गं ॥ आह । वाढमस्त्विति यावद्दत्तो ऽववादो ऽभूत् ॥

ततो बोधिसत्त्व एकान्तं गत्वा पर्यङ्कमाभुज्योपविशति स्म ॥ समनन्तरोपविष्टस्य च बोधिसत्त्वस्य पुण्यविशेषेण च ज्ञानविशेषेण च पूर्वसुचरितचर्याफलविशेषेण च सर्वसमाधिपरिचयविशेषेण च ध्यानप्रमुखानि सर्वाणि लौकिकानि लोकोत्तराणि समापत्तिशतान्यामुखीभवन्ति स्म ॥ साकाराणि सोद्देशानि यथापि तच्चित्तवशव-

र्तित्वादथ च बोधिसत्त्वः स्मृतः संप्रजानन् उत्थायासनाद्येन रुद्रको रामपुत्रस्तेनोपसंक्रामदुपसंक्रम्य रुद्रकं रामपुत्रमेवमाह । अस्त्यन्यो ऽपि मार्ष कश्चिदुत्तरे नैवसंज्ञानासंज्ञायतनसमापत्तेर्मार्गः ॥ सो ऽब्रवीन्नास्तीति ॥

ततो बोधिसत्त्वस्यैतदभवत् । न खलु रुद्रकस्यैवास्ति श्रद्धा वीर्यं स्मृतिः समाधिः प्रज्ञा । ममाप्यस्ति श्रद्धा वीर्यं स्मृतिः समाधिः प्रज्ञा ॥

अथ बोधिसत्त्वो रुद्रकं रामपुत्रमेवमाह । मयाप्येष मार्ष धर्मो ऽधिगतो यत्र त्वं निर्यातः ॥ सो ऽवोचत् । तेन ह्यागच्छ त्वं चाहं चेमं गणं परिहराव इति । समानार्थे च बोधिसत्त्वं स्थापयति स्म आचार्यस्थाने च ॥ बोधिसत्त्व आह । नैष मार्ष मार्गो निर्वृतये न विरागाय न निरोधाय नोपसमाय नाभिज्ञायै न संबोधये न श्रामणाय न ब्राह्मणाय न निर्वाणाय संवर्तते ॥

इति हि भिक्षवो बोधिसत्त्वो रुद्रकस्य रामपुत्रस्य सशिष्यस्यावर्जनीकृत्य यावदलमिति कृत्वा प्रक्रामद् अलं ममानेनेति ॥

तेन खलु पुनः समयेन पञ्चका भद्रवर्गीया रुद्रके रामपुत्रे ब्रह्मचर्यं चरन्ति स्म ॥ तेषामेतदभूत् । यस्य खलु वयमर्थाय दीर्घरात्रं घटामहे उद्युज्यामहे न च शक्नुमो ऽन्तं वा पर्यन्तं वाधिगन्तुं तच्छ्रमणेन गौतमेनाल्पकृच्छ्रेणाधिगन्तुं साक्षात्कृतं । तच्चास्य न रोचते । तथा चोत्तरि पर्येषते निःसंशयमेष शास्ता लोके भविष्यति । यच्चैष साक्षात्करिष्यति । तदस्मभ्यं संविभक्ष्यतीति ॥ एवं विमृश्य पञ्चका भद्रवर्गीया रुद्रकरामपुत्रसकासादपक्रम्य बोधिसत्त्वमन्वबध्नन् ॥

इति हि भिक्षवो बोधिसत्त्वो यथाभिप्रेतं राजगृहे विहृत्य मगधेषु चारिकां प्रक्रामत् सार्धं पञ्चकैर्भद्रवर्गीयैः ॥

तेन खलु पुनः समयेनान्तराच्च राजगृहस्यान्तराच्च गयाया यो ऽन्यतमो गण उत्सवं करोति स्म । तेन च गणेन बोधिसत्त्वो ऽभिनिमन्त्रितो ऽभूत् । वासेन भक्तेन च सार्धं पञ्चकैर्भद्रवर्गीयैः ॥

अथ खलु भिक्षवो बोधिसत्त्वो मगधेषु चर्यां चरन् येन मागधकानां गया तामनुसृत्य तामनुप्राप्तो ऽभूत् । तत्र खल्वपि भिक्षवो बोधिसत्त्वः प्रहाणार्थी विहरति स्म गयाशीर्षे पर्वते ॥ तत्रास्य विहरतस्तिस्र उपमाः प्रतिभान्ति स्म । अश्रुतपूर्वा अनभिज्ञातपूर्वाः । कतमास्तिस्रः । ये केचित्ते खल्वपि श्रमणब्राह्मणाः कामेभ्यो ऽनवक्रष्टकाया विहरन्ति स्म । कामेभ्यो ऽनवक्रष्टचित्ताश्च विहरन्ति स्म । यापि चैषां कामेषु नन्दिः कामेषु रागः कामेषु छन्दः कामेषु तृष्णा कामेषु पिपासा कामेषु मूर्छा कामेषु परिदाहः कामेष्वध्यवसानता साप्यनुपशान्ता । किं चापि ते आत्मोपक्रमिकां शरीरोपतापिकां दुःखां तीव्रां खरां कटुकाममनापां वेदनां वेदयन्ते । अथ तर्ह्यभव्या एव ते उत्तरि मनुष्यधर्मादलमार्यज्ञानदर्शनविशेषं साक्षात्कर्तुं ॥ तद्यथापि नाम पुरुषो ऽग्न्यर्थी ज्योतिर्गवेषी ज्योतिं पर्येषमाणः स आर्द्रं काष्ठमादायार्द्रां चोत्तरारणीमुदके प्रक्षिप्य मथ्नीयाद् अभव्यो ऽसावग्निमुत्पादयितुं तेजः प्रादुष्कर्तुं । एवमेव य इमे श्रमणब्राह्मणाः कामेभ्यो ऽनवक्रष्टकाया अनवक्रष्टचित्ताश्च विहरन्ति । याप्येषां कामेषु नन्दिः कामेषु रागः कामेषु छन्दः कामेषु तृष्णा कामेषु पिपासा कामेषु मूर्छा कामेषु परिदाहः कामेष्वध्यवसानं तदप्यनुपशान्तं ।

किं चापि ते आत्मोपक्रमिकां शरीरोपतापिकां दुःखां तीव्रां खरां कटुकां वेदनां वेदयन्ते । अथ तर्ह्यभव्या एवोत्तरि मनुष्यधर्मादलमार्यज्ञानदर्शनविशेषं साक्षात्कर्तुं । इयं बोधिसत्त्वस्य प्रथमा उपमा प्रतिभाति स्म ॥

भूयश्चास्यैतदभूत् । य इमे श्रमणब्राह्मणाः कामेभ्यो व्यपकृष्टकायचित्ता विहरन्ति । यापि तेषां कामेषु नन्दीति सर्वं कर्तव्यं यावज्ज्योतिं पर्येषत इति । स आर्द्रं काष्ठमादाय स्थले स्थापयित्वा आर्द्रां चोत्तरारणिं मथ्नीयाद् अभव्यो ऽसावग्निमुत्पादयितुं । एवमेव य इमे श्रमणब्राह्मणा इति सर्वं पूर्ववत्कार्यं यावदभव्या उत्तरि मनुष्यधर्मादलमार्यज्ञानदर्शनविशेषं साक्षात्कर्तुं । इयं द्वितीया उपमा प्रतिभाति स्म । पूर्वमश्रुता चाविज्ञाता च ॥

पुनरपरं य इमे श्रमणब्राह्मणा भवन्तः कामेभ्यो व्यपकृष्टकायचित्ता विहरन्ति । यापि तेषां कामेषु नन्दिः । इति सर्वं पेयालं । तदप्येषामुपशान्तं । किं चापि ते आत्मोपक्रमिकां शरीरोपतापिकां दुःखां तीव्रां खरां कटुकां वेदनां वेदयन्ते । अथ खलु पुनर्भव्या एव ते उत्तरि मनुष्यधर्मादलमार्यज्ञानदर्शनविशेषं साक्षात्कर्तुं ॥ तद्यथापि नामेह स्यात्पुरुषो ऽग्न्यर्थी ज्योतिर्गवेषी ज्योतिः पर्येषमाणः स शुष्कं काष्ठमादाय शुष्कां चोत्तरारणिं स्थले प्रतिष्ठाप्य मथ्नीयात् स भव्यो ऽग्निमभिनिर्वर्तयितुं तेजः प्रादुष्कर्तुं । एवमेव य इमे भवन्तः श्रमणब्राह्मणा इति सर्वं यावद्वेदनां वेदयन्त इति । अथ च पुनर्भव्या एव ते उत्तरि मनुष्यधर्मादलमार्यज्ञानदर्शनविशेषं साक्षात्कर्तुं । इयं तृतीया उपमा प्रतिभाति स्म । अश्रुतपूर्वा चाविज्ञातपूर्वा च ॥

अथ खलु भिक्षवो बोधिसत्त्वस्यैतदभूत् । अहं खल्वेतर्हि कामभ्यो व्यपकृष्टकायो विहरामि व्यपकृष्टचित्तश्च । यापि मे कामेषु नन्दीति सर्वं यावत्तदपि मे उपशान्तं । किं चाप्यहमात्मोपक्रमिकां शरीरोपतापिकां दुःखामिति पेयालं यावद्वेदनां वेद्मि । अथ खल्वहं भव्य एवोत्तरि मनुष्यधर्मादलमार्यज्ञानदर्शनविशेषं साक्षात्कर्तुं ॥

इति हि भिक्षवो बोधिसत्त्वो यथाभिप्रेतं गयायां विहृत्य गयाशीर्षे पर्वते जङ्घाविहारमनुचङ्क्रम्यमाणो येनोरुविल्वा सेनापतिग्रामकस्तदनुसृतस्तदनुप्राप्तो ऽभूत् ॥ तत्राद्राक्षीन्नदीं नैरञ्जनामच्छोदकां सूपतीर्थां प्रासादिकैश्च द्रुमगुल्मैरलंकृतां समन्ततश्च गोचरग्रामां ॥ तत्र खल्वपि बोधिसत्त्वस्य मनो ऽतीव प्रसन्नमभूत् । समो वतायं भूमिप्रदेशो रमणीयः प्रतिसंलयनानुरूपः पर्याप्तमिदं प्रहाणार्थिककुलपुत्रस्याहं च प्रहाणार्थी यन्वहमिहैव तिष्ठेयं ॥

इति हि भिक्षवो बोधिसत्त्वस्यैतदभूत् । पञ्चकषायकाले ऽहमिह जम्बुद्वीपे ऽवतीर्णो हीनाधिमुक्तिकेषु सत्त्वेष्वाकीर्णतीर्थ्यवर्गेषु नानादृष्टिप्रस्कन्नेषु कायपिण्डग्राहाभिनिविष्टेषु नानाविधैश्चातापनपरितापनैः कायशुद्धिं पर्येषन्ते प्रज्ञापयन्ति च संमूढाः । तद्यथा मन्त्रविचारकैर्हस्तप्रलेहकैर्नयाचनकैर् (अनामन्त्रणकैर्) अनेकमूलिकैरमत्स्यमांसकैरवार्षिकैः सुरातुषोदकवर्जनैरेकत्रिपञ्चसप्तकुलभिक्षाग्रहणैर्मूलफलशैवालककुशपत्रगोमयगोमूत्रपायसदधिसर्पिःफाणितामपिष्टकभक्षणपानैः सारसिकापोतकसंदंशिकोत्सृष्टसंप्रक्षालकैः । ग्राम्यारण्याभिश्च वृत्तिभिः । गोव्रतमृगश्ववराहवानरहस्तिव्रतैश्च स्थानमौनवीरासनैश्च एकालापकैर्यावत्सप्तालापकैः । एकभक्ता एकाहोरात्रचातुर्थ्यपञ्चषट्कालान्तराश्च

पक्षक्षपणमासक्षपणचान्द्रायणैश्च गृध्रोलूकपक्षधारणैश्च फलमुञ्जासनवल्कलदर्भबल्बजोष्ट्रकम्बलाजकम्बलकेशकम्बलचर्मनिवेशनैश्च आर्द्रपटास्तोपकजालशयनैश्च भस्मशर्कलापाषाणफलककण्टकतृणमुसलशयनावाक्छिरोत्कुटुकस्थण्डिलशयनैश्च एकवासद्वित्रिचतुष्पञ्चषट्सप्तबहुवासोभिर्नग्नभावैश्च स्थानास्थानविधिभिश्च दीर्घकेशनखश्मश्रुजटामकुटधारणैश्च एककोलतिलतण्डुलाहारैश्च भस्ममसिनिर्माल्योद्धूततमोरजपांशुपङ्कपरिम्रक्षणैश्च लोममुञ्जकेशनखचीवरपञ्जरकरङ्कधारणैश्च उष्णोदकतण्डुलोदकपरिस्रावितकाम्बलिकस्थालीपानीयपानैश्च अङ्गारधातुकषायत्रिदण्डमुण्डिककुण्डिककपालखट्वाङ्गधारणैश्च शुद्धिं प्रत्यवगच्छन्ति संमूढाः। धूमपानाग्निपानादित्यनिरीक्षणपञ्चतपैकपादोर्ध्वबाहुस्थानैकचरणैश्च तपः संचिन्वन्ति। तुषाग्न्यङ्गारदाहनिकुम्भसाधनपक्वशिलापचनाग्निजलप्रवेशनमरुतीर्थगमनमरणैश्चेष्टां गतिं मृगयन्ते। ओंकारवषट्कारस्वधाकारस्वाहाकाराशीर्वचनस्तुतिचयनावाहनजप्यमन्त्राध्ययनधारणकरणैश्च शुद्धिं प्रत्यवगच्छन्ति। शुद्धं चात्मानं मन्यमाना इमानाश्रयन्ते। तद्यथा ब्रह्मेन्द्ररुद्रविष्णुदेवीकुमारमातृकात्यायनीचन्द्रादित्यवैश्रवणवरुणवासवाश्विनौ नागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगराक्षसप्रेतभूतकुम्भाण्डपार्षद्गणपतिपिशाचांश्च देवर्षिराजर्षिब्रह्मर्षींश्च नमस्यन्ति। तेषु च सारसंज्ञिनो भवन्ति। पृथिव्याप्तेजोवाय्वाकाशं चाश्रयन्ते। गिरिनदीनद्युत्ससरोह्रदतडागसागरसरःपल्वलपुष्करिणीकूपवृक्षगुल्मलतातृणस्थाणुगोष्ठश्मशानचत्वरशृङ्गाटकान्तरापणमुखानि चाश्रयन्ते। गृहस्तम्भोपलमुषलासिधनुपरशुशरशक्तित्रिशूलांश्च नमस्यन्ति। दधिघृतसर्षपयवप्रतिसरादूर्वामणिकनकरजता-

दिभिश्च मङ्गलं प्रत्यवगच्छन्ति । एवंविधानीमे तीर्थ्याः कुर्वन्ति । आश्रयन्ते च संसारभयभीताः ॥

इह च केचित्परत्र मन्यन्ते स्वर्गापवर्गावस्माकमेतेभ्यो निर्वर्त्स्येत इति । मिथ्यामार्गप्रयाता अशरणे शरणसंज्ञिनो ऽमङ्गल्ये मङ्गलसंज्ञिनो ऽशुद्धा शुद्धिं मन्यन्ते ॥ यन्वहं तादृशं व्रततपोविशेषमालभेयं यथा सर्वपरप्रवादिनश्च निगृहीताः स्युः । कर्मक्रियाप्रणष्टानां च सत्त्वानां कर्मक्रियाविप्रणाशमादर्शयेयं । ध्यानगोचराणां च रूपावचराणां च देवानां ध्यानविशेषोपदर्शनादावर्जनं कुर्यामिति ॥

इति हि भिक्षवो बोधिसत्त्व एवं चिन्तयित्वा षड्वर्षिकं महाघोरं व्रततपःसुदुष्करात्सुदुष्करां दुष्करचर्यामालभते स्म । केन कारणेनोच्यते दुष्करचर्येति । दुष्करकारिकैषा तेनोच्यते दुष्करचर्येति ॥ न स कश्चित्सत्त्वः सत्त्वनिकाये संविद्यते । मनुष्यो वा अमनुष्यो वा यः समर्थस्तथारूपं दुष्करं चरितुं । अन्यत्र चरमभविकाद्बोधिसत्त्वाद्य आस्फानकध्यानं समापद्यते स्म ॥ केन कारणेनोच्यते आस्फानकमिति । स चतुर्थध्यान आदित एव समापद्यमान आश्वासप्रश्वासानुपरोधयति संनिरोधयति । अकल्पं तद्ध्यानमविकल्पमनिञ्जनमपनीतमस्पन्दनं सर्वत्रानुगतं च सर्वत्र चानिश्रितं । न च तद्ध्यानं जातु केनचित्समापन्नं पूर्वं शैक्षेण वा अशैक्षेण वा प्रत्येकबुद्धेन वा चर्याप्रतिपन्नेन वा बोधिसत्त्वेन । अतश्चास्फानकं नामोच्यते ॥ आकाशमस्फरणमकरणमविकरणं तच्च सर्वं स्फरतीति ह्याकाशसमं तद्ध्यानं तेनोच्यते आस्फानकमिति ॥

अथ खलु भिक्षवो बोधिसत्त्वो लोकस्याश्चर्यसंदर्शनार्थं तीर्थिकानां च दर्पनिर्घातनार्थं परप्रवादिनां च निग्रहार्थं देवानां चा-

वर्जनार्थमुच्छेदशाश्वतवादिनां च सत्त्वानां कर्मक्रियाप्रणष्टानां कर्मक्रियावतारणार्थं पुण्यफलोद्भावनार्थं ज्ञानफलसंदर्शनार्थं ध्यानाङ्गविभजनार्थं कायबलस्थामसंदर्शनार्थं चित्तशौर्यसंजननार्थं चासंस्कृतायां पृथिव्यां पर्यङ्कमाभुज्य निषीदति स्म । निषद्य च स्वकायं चेतसा निगृह्णीते स्म । निष्पीडयति स्म ॥

ततो मे भिक्षवो हैमन्तिकास्वष्टकरात्रिषु तथा कायं निगृह्णतो निष्पीडयतः कक्षाभ्यामपि स्वेदाः प्रस्रवन्ति स्म । ललाटादपि स्वेदाः प्रस्रवन्ति स्म । भूमौ निपतन्ति स्म । अवश्यायन्त ऊष्मायन्तो बाष्पायन्तः । तद्यथापि नाम बलवान्पुरुषो दुर्बलतरं पुरुषं ग्रीवायां गृहीत्वा निष्पीडयेत् । एवमेव भिक्षव इमं कायं चेतसा निगृह्णतो निष्पीडयतः कक्षाभ्यामपि स्वेदाः प्रस्रवन्ति स्म । ललाटादपि स्वेदाः प्रस्रवन्ति स्म । भूमौ निपतन्ति स्म । अवश्यायन्त ऊष्मायन्तो बाष्पायन्तः ॥

तस्य मे भिक्षव एतदभूत् । यन्वहमास्फानकं ध्यानं ध्यायेयं ॥ ततो मे भिक्षव आस्फानकं ध्यानं ध्यायतो मुखतो नासिकातश्चाश्वासप्रश्वासावुपनिरुद्धावभूतां । कर्णच्छिद्राभ्यामुच्चशब्दा महाशब्दा निश्चरन्ति स्म । तद्यथापि नाम कर्मारगर्गर्यां मथ्यमानायामुच्चशब्दो महाशब्दो निश्चरति । एवमेव मे भिक्षवो मुखनासिकाभ्यामाश्वासप्रश्वासावुपरुद्धावभूतां श्रोतच्छिद्राभ्यामुच्चशब्दो महाशब्दो निश्चरति स्म ॥

तस्य मे भिक्षव एतदभूत् । यन्वहं भूय आस्फानकं ध्यानं ध्यायेयमिति ॥ ततो मे भिक्षवो मुखनासिकाश्रोत्राण्युपरुद्धानि

चाभूवन् । तेषूपरुद्धेषु वायुरूर्ध्वं शिरःकपालमुपनिहन्ति स्म । तद्यथापि नाम भिक्षवः पुरुषः कुण्ठया शक्त्या शिरःकपालमुपहन्याद् एवमेव मे भिक्षवो मुखनासिकाश्रोत्रेषूपरुद्धेषु आश्वासप्रश्वासा ऊर्ध्वं शिरःकपालमुपनिघ्नन्ति स्म ॥

तां चावस्थां दृष्ट्वा बोधिसत्त्वस्य तत्र केचिद्देवा एवमाहुः । कष्टं भो कालगतो वतायं सिद्धार्थः कुमारः ॥ अपरे एवमाहुः । नायं कालगतः । अपि तु ध्यानविहार एषोऽर्हतामेवंविध इति ॥ तस्यां च वेलायामिमां गाथामभाषन्त ।

मा खल्वयं शाक्यनरेन्द्रगर्भो ह्यपूर्णसंकल्प इहैवरण्ये ।
कृत्वा त्रिलोकं दुखितं ह्यनाथं कालं करिष्यत्यकृतार्थ एव ॥
हा सत्त्वसारा सदृढप्रतिज्ञा सद्धर्मयज्ञेन निमन्त्रिताभू ।
वयं पुरा ते तुषितेषु नाथा क्व सा प्रतिज्ञा तव शुद्धसत्त्व ॥

अथ ते देवपुत्रास्त्रायत्रिंशेषु देवेषु गत्वा मायादेव्या एवमर्थं श्रावयन्ति । कालगतः कुमारः ॥

अथ मायादेवी अप्सरागणपरिवृता अर्धरात्रसमये नैरञ्जनायास्तीरे येन बोधिसत्त्वस्तेनोपसंक्रान्ता सा पश्यति स्म बोधिसत्त्वं शुष्कगात्रं । कालगतमिव दृष्ट्वा बाष्पगद्गदकण्ठया रोदितुमारब्धा ॥ तस्यां च वेलायामिमां गाथामभाषत ।

यदा जातोऽसि मे पुत्र वने लुम्बिनिसाह्वये ।
सिंहवच्चागृहीतस्त्वं प्रक्रान्तः सप्त पदा स्वयं ॥
दिशां चालोक्य चतुरे वाचा ते प्रव्याहृता शुभा ।
इयं मे पश्चिमा जातिः सा ते न परिपूरिता ॥

असितेनाभिनिर्दिष्टो बुद्धो लोके भविष्यसि ।
तुच्छं व्याकरणं तस्य न दृष्टा तेन नित्यता ॥
चक्रवर्तिश्रियं पुत्र नपि भुक्ता मनोरमा ।
न च बोधिमनुप्राप्तो यातो ऽसि निधनं वने ॥
पुत्रार्थे कं प्रपद्यामि कं व क्रन्दामि दुःखिता ।
को मे दद्येकपुत्रस्य किंचित्प्राणस्य जीवितं ॥

बोधिसत्त्व आह ।

कैषा अति त्वां करुणं रुदासि प्रकीर्णकेशा विनिवृत्तशोभा ।
पुत्रं ह्यतीवा परिदेवयन्ती विचेष्टमाना धरणीतलस्था ॥

मायादेवी आह ।

मया तु दशमासां वै कुक्षौ वज्र इवा धृतः ।
सा ते ऽहं पुत्रका माता विलापामि सुदुःखिता ॥

अथ बोधिसत्त्व आश्वासयन्नुवाच ।

न भेतव्यं पुत्रलालसे श्रमं ते सफलं करिष्यसि। अमोघं बुद्धपरित्यागं।
असितनिर्देशं च व्यक्तं करिष्यामि
दीपंकरस्य व्याकरणं 'व्यक्तीकरिष्यामि च ॥
अपि शतधा वसुधा विकीर्येत मेरुः प्लवे चाम्भसि रत्नशृङ्गः
चन्द्रार्कतारागण भू पतेत पृथग् जनो नैव अहं म्रियेयं ।
यस्मान्न शोको त्वयि अत्र कार्यो न वै चिराद्द्रक्ष्यसि बुद्धबोधिं ॥

सहश्रवणादेव देवी माया संप्रहर्षितरोमकूपजाता बोधिसत्त्वं मान्दारवपुष्पैरभ्यवकीर्य त्रिप्रदक्षिणीकृत्वा दिव्यतूर्यैः संप्रवाद्यमानैर्येन स्वभवनं तेनोपजगाम ॥

तस्य मे भिक्षव एतदभूत् । सन्त्येके श्रमणब्राह्मणा ये ऽल्पाहारतया शुद्धिं मन्यन्ते । यन्वहमल्पाहारतया प्रतिपद्येयमिति । अभिजानाम्यहं भिक्षव एकमेवाद्वितीयं कोलमाहारमाहर्तुं ॥ स्यात्खलु पुनर्भिक्षवो युष्माकं एषा बुद्धिः । महत्तरं तत्र काले कोलमासीदिति । न खल्वेवं द्रष्टव्यं । अथ खल्वियदेव तत्र काले कोलमभूत् ॥ तस्य मे भिक्षव एकमेव कोलमाहारमाहरतो ऽद्वितीयं कायो ऽत्यर्थं कर्शितो ऽभूद्दुर्बलः । तद्यथापि नाम भिक्षव आसीतकीपर्वाणि वा कालापर्वाणि वा एवमेव मे ऽङ्गप्रत्यङ्गान्यभूवन् । तद्यथापि नाम कर्कटपार्शुका एवमेव मे पार्शुका अभूवन् । तद्यथापि नाम वाहनकारसालायां वा हस्तिसालायां वा जीर्णायामुभयतो विवृतायां गोपानस्यान्तरिकाश्च विराजन्ते व्यवभासन्ते एवमेव मे पार्शुका अन्तःकाये उभयतो विराजन्ते स्म व्यवभासन्ते स्म । तद्यथापि नाम वर्तन्या वेण्युन्नतावनता भवति समविषमा एवं मे पृष्ठीकण्टको ऽभूदुन्नतावनतः समविषमः । तद्यथा तिक्तकालाबुस्तरुणो लून आम्लानो भवति संम्लानः समुत्पुटकजात एवमेव शिर आम्लानमभूत्संम्लानं समुत्पुटकजातं । तद्यथापि नाम ग्रीष्माणां पश्चिमे मासे कूपतारका दूरगता भवन्ति कृच्छ्रेण संप्रकाश्यन्ते एवमेव मे ऽक्षितारकौ दूरगतावभूतां कृच्छ्रेण संप्रकाश्येते स्म । तद्यथापि नामाजपदं वोष्ट्रपदं वा एवमेव मे कक्षाकुक्षिवक्षादीन्यभूवन् ॥ ततो यदाहं भिक्षवः पाणिना कुक्षिं स्पृशामीति पृष्ठिकण्टकमेवास्प्राक्षमुत्तिष्ठामीति चाभिसंस्कुर्वंस्तथैवावकुब्जः प्रयामेण प्रापतं । ततः कृच्छ्रेणोत्थितो ऽपि

पांशुकृतानि गात्राणि पाणिना प्रमृजतो मे पूतिरोमाणि कायाच्छीर्यन्ते स्म । यापि मे ऽभूत्पौराणी शुभवर्णतनुः साप्यन्तरधाद्यथापीदं रूक्षप्रधानं प्रहितात्मनः । सामन्ताश्च मे गोचरग्रामवासिन एवं संजानन्ते स्म । कालको वत भोः श्रमणो गौतमः । श्यामको वत भोः श्रमणो गौतमः । मद्गुरच्छविर्वत भोः श्रमणो गौतमः । याप्यस्याभूत्पौराणी शुभवर्णा निभा साप्यन्तर्हिता ॥

तस्य मे भिक्षव एतदभूत् । यन्वहं भूयस्या मात्रयाल्पाहारतया प्रतिपद्येयमिति । अभिजानाम्यहं भिक्षव एकमेव तण्डुलमद्वितीयमाहारमाहर्तुं ॥ स्याद्भिक्षवो युष्माकमेवं महत्तरं तण्डुलं तस्मिन्काले ऽभूदिति । न खल्वेवं द्रष्टव्यं । अथैतावानेव तस्मिन्काले तण्डुलो ऽभूत् ॥ तस्य मे भिक्षव एकं तण्डुलमाहरतः क्षिप्रं कायो ऽभूदिति पूर्ववद्यावन्मद्गुरच्छविर्वत भोः श्रमणो गौतम इति । याप्यस्य साभूत्पौराणी शुभवर्णतनुः साप्यन्तर्हितेति ॥

तस्य मे भिक्षव एतदभूत् । यन्वहं भूयस्या मात्रयाल्पाहारतायै प्रतिपद्येयमिति । अभिजानाम्यहं भिक्षव एकमेव तिलमद्वितीयमाहारमाहारयितुं पेयालं यावत्साप्यस्य शुभवर्णतनुरन्तर्हितेति ॥

तस्य मे भिक्षव एतदभूत् । सन्त्येके श्रमणब्राह्मणा ये ऽनाहारतया शुद्धिं मन्यन्ते । यन्वहं सर्वेण सर्वमनाहारतायै प्रतिपद्येयमिति ॥ ततो ऽहं भिक्षवो ऽनाहारस्थितो ऽभूवं ॥ तस्य मे भिक्षवो ऽनाहारस्य कायो ऽतीव शुष्को ऽभूत् कृशो दुर्बलः । तद्यथापि नामासितकीपर्वाणि वा कालापर्वाणि वा । ततो द्विगुणत्रिगुणचतुर्गुणपञ्चगुणदशगुणं मे कृशान्यङ्गप्रत्यङ्गान्यभूवन् । तद्यथा कर्कटकपार्शुका

वाहनशालायां वा गोपानसी (पार्श्वे) द्विपरिवर्तना वेणीवत्पृष्ठीकण्टकः। तिक्तालाबुवच्छिरःकपालं। कूपतारका इवाक्षितारके। सो ऽहं भिक्षवः साधुकमुत्तिष्ठामीति गात्राण्यभिसंस्कुर्वन्नवकुब्जः प्रापतं। कृच्छ्रेणापि चोत्थितः पांशुकृतानि मे गात्राणि प्रमृजतः पूतिमूलानि रोमाण्यशीर्यन्त। यापि मे साभूच्छुभवर्णतनुनिभा साप्यन्तरधात्। तद्यथापि तद्रूक्षप्रधानप्रहितात्मकत्वात्॥ सामन्ताश्च मे गोचरग्रामवासिनो जना एवं संजानन्ति स्म। कालको वत भोः श्रमणो गौतमः। श्यामको वत भोः श्रमणो गौतमः। मद्गुरच्छविर्वत भोः श्रमणो गौतमः॥ याप्यस्य साभूत्पौराणी शुभवर्णनिभा साप्यन्तर्हितेति॥

राजापि तदा शुद्धोदनः प्रतिप्रतिदिवस बोधिसत्त्वस्यान्तिके दूतं प्रेषयति स्म॥

इति हि भिक्षवो बोधिसत्त्वो लोकस्याद्भुतक्रियासंदर्शनार्थं पूर्ववद्यावत्कर्मक्रियाप्रणष्टानां सत्त्वानां कर्मक्रियावतारणार्थं पुण्यसंचयानां चोद्भावनार्थं महाज्ञानस्य च गुणसंदर्शनार्थं ध्यानाङ्गानां च विभजनार्थमेकतिलकोलतण्डुलेन षड्वर्षाणि दुष्करचर्यानुवर्तयन्तमुपदर्शयति स्म। अदीनमानसः षड्वर्षा बोधिसत्त्वो यथा निषण्ण एवास्थात् पर्यङ्केन न च ईर्यापथाच्च्यवते स्म। नातपाच्छायामगमन्न छायाया आतपं न च वातातपवृष्टिपरित्राणमकरोन्न च दंशमशकसरीसृपानपनयति स्म। न चोच्चारप्रश्रावश्लेष्मसिंहाणकानुत्सृजति स्म। न च संमिञ्जनप्रसारणमकरोत्। न च पार्श्वोदरपृष्ठस्थानेनास्थात्। ये ऽपि च ते महामेघा दुर्दिनवर्षाशनिशरद्ग्री-

ष्महैमन्तिकास्ते ऽपि बोधिसत्त्वस्य काये निपतन्ति स्म । न चान्ततो बोधिसत्त्वः पाणिनापि प्रच्छादनमकरोत् । न चेन्द्रियाणि पिथयति स्म । न चेन्द्रियार्थान्गृह्णीते स्म । ये च तत्रागमन्ग्रामकुमारका वा ग्रामकुमारिका वा गोपालका वा पशुपालका वा तृणहारिका वा काष्ठहारिका वा गोमयहारिका वा ते बोधिसत्त्वं पांशुपिशाचमिति मन्यन्ते स्म । तेन च क्रीडन्ति स्म । पांशुभिश्चैनं म्रक्षयन्ति स्म ॥

तत्र बोधिसत्त्वस्तैः षड्भिर्वर्षैस्तावल्लूहन्यूनदुर्बलकायः संवृत्तो ऽभूत् । यदस्य कर्णश्रोताभ्यां तृणतूलकं प्रक्षिप्य नासाश्रोताभ्यां निष्कास्यते स्म । नासाश्रोताभ्यां प्रक्षिप्य कर्णश्रोताभ्यां निष्कास्यते स्म । कर्णश्रोताभ्यां प्रक्षिप्य मुखद्वारेण निष्कास्यते स्म । मुखद्वारेण प्रक्षिप्य कर्णनासिकाश्रोताभ्यो निष्कास्यते स्म । नासायां प्रक्षिप्य कर्णनासिकामुखद्वारेण निष्कास्यते स्म ॥

ये च ते देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगा (मनुष्यामनुष्या) बोधिसत्त्वस्य गुणेषु प्रत्यक्षास्ते रात्रिंदिवं समधिष्ठा बोधिसत्त्वस्य पूजां कुर्वन्ति स्म । प्रणिधानानि च कुर्वन्ति स्म ॥

तत्र बोधिसत्त्वेन तैः षड्भिर्वर्षैर्दुष्करचर्यां संदर्शयता परिपूर्णानि द्वादशनयुतानि देवमनुष्याणां त्रिभिर्यानैः परिपाचितान्यभूवन् ॥

तत्रेदमुच्यते ।

तस्य च गुणान्वितस्य पुराद्विनिष्क्रम्य बोधिसत्त्वस्य ।
चिन्ता उपाययुक्ता सत्त्वार्थहिताय उत्पन्ना ॥
पञ्चसु कषायकाले हीने ऽधर्माधिमुक्तिके लोके ।
जातो ऽस्मि जम्बुद्वीपे धर्मक्रिय उद्धुरे लोके ॥

आकीर्ण तीर्थिकगणै कौतूहलमङ्गलैरिमे युक्ता ।
कायोपक्रमकरणै मन्यन्ति बालिशाः शुद्धिं ॥
अग्निप्रवेशमरुप्रपातपांशुभस्मादिमक्षिता नग्नाः ।
कायपरितापनार्थं पञ्चातपयोगमनुयुक्ताः ॥
मन्त्राविचारकरणा केचिद्धस्तावलेहका अबुधाः ।
न च कुम्भमुखकरोटान्न धारकुशलान्तराच्च गृह्णन्ति ॥
न च यत्र स्वानुभवती न चाहितं तेन तिष्ठवाक्यस्य ।
कुलभिक्ष एकगृह्या शुद्धं मन्यन्तिहात्मानं ॥
वर्जेन्ति सर्पितैलं फाणितदधिदुग्धमत्स्यमांसानि ।
स्यामाकसाकभक्षा मृणालगर्डुलकणाभक्षाः ॥
मूलफलपत्रभक्षाः कुशचीवरचर्मकम्बलधराश्च ।
अपरे भ्रमन्ति नग्नाः सत्यमिदं मोहमन्यदिति मूढाः ॥
धारेन्ति ऊर्ध्वहस्ता ऊर्ध्वकेशा जटांश्च धारेन्ति ।
मार्गानतिप्रनष्टा अमार्गसंस्था सुगतिगमनकामाः ॥
तृणमुसलभस्मशयनाः कण्टकशयनाश्च उत्कुटध्यायि ।
स्थित केचिदेकपादे ऊर्ध्वमुखाश्चन्द्रसूर्यपश्यन्तः ॥
उत्सां सरस्तडागां सागरसरितश्च चन्द्रसूर्यौ च ।
वृक्षगिरिशैलशिखरां कुम्भं धरणीं नमस्यन्ति ॥
विविधैश्च कारणैस्ति कायं परिशोधयन्ति संमूढाः ।
मिथ्यादृष्टिपरीताः क्षिप्रं प्रपतन्त्यपायेषु ॥
यन्नूनमहं व्रततप दुष्करचर्यां समारभे घोरां ।
यं दुष्करं न शक्यं चरितुं देवैर्मनुष्यैर्वा ॥

आस्फानकं च ध्यानं ध्यायेयं वज्रकल्पदृढस्थामं ।
यं ध्यानं न समर्थाः प्रत्येकजिनापि दर्शयितुं ॥
सन्तीह देवमनुजाः तीर्थिक लूहव्रतेन हृष्यन्ते ।
तेष परिपाकहेतो दुष्करव्रततपरभेय सुतीव्रं ॥
पर्यङ्कमाभुजित्वा उपविष्टो ऽभूत्स्थले असंस्तीर्णे ।
कोलतिलतण्डुलेना आहारविधिं विदर्शयति ॥
आश्वासविप्रहीनः प्रश्वासवर्जितु न चेञ्जते बलवान् ।
षड्वर्षाणि प्रवरं ध्यायत्यास्फानकं ध्यानं ॥
कल्पं नो न विकल्पं न चेञ्जनं नापिमन्येन प्रचारं ।
आकाशधातुस्फरणं ध्यायत्यास्फानकं ध्यानं ॥
न च आतपातु छायां छायाया नातपं गतश्चासौ ।
मेरुरिव निष्प्रकम्प्यो ध्यायत्यास्फानकं ध्यानं ॥
न च वातवृष्टिछदनं न दंशमशकासरीसृपाचाणं ।
अविकोपितया चर्या ध्यायत्यास्फानकं ध्यानं ॥
न च केवलमात्मार्थं ध्यायत्यास्फानकं ध्यानं ।
अन्यत्र करुणचित्तो भावी लोकस्य विपुलार्थं ॥
ये ग्रामदारकाश्च गोपालाः काष्ठहारतृणहाराः ।
पांशुपिशाचकमिति तं मन्यन्ते पांशुना च म्रक्षन्ति ॥
असुचीना च किरन्ते विविधास्ते कारणाश्च कारिन्ति ।
न च इञ्जते भ्रमति वा ध्यायत्यास्फानकं ध्यानं ॥
न च नमति नो विनमते न कायपरिरक्षणा स्पृशति ।
किंचिन्नोच्चारप्रस्रवं शब्देषु न संत्रसी न परप्रेक्षी ॥

संशुष्कमांसरुधिरं चर्मस्नाय्वस्थिकाश्च अवशिष्टा ।
उदराच्च पृष्ठिवंशो विदृश्यते वर्तिता यथा वेणी ॥
ये ते कृताधिकारा देवाः सुरनागयक्षगन्धर्वाः ।
प्रत्यक्ष गुणधरस्या करोन्ति पूजां दिवा रात्रौ ॥
प्रणिधिं च कुर्वते ते वयमपि तादृश भवामहे क्षिप्रं ।
यथ एष गगणचित्तो ध्यायत्यास्फानकं ध्यानं ॥
न च केवलमात्मार्थं न ध्यानस्वादनान्न सुखबुद्ध्या ।
अन्यत्र करुणबुद्ध्या करिष्यत्यर्थं विपुललोके ॥
निहताः परप्रवादा ध्यामीकृत तीर्थिका मतिविहीनाः ।
कर्मक्रिया च दर्शित या प्रोक्ता काश्यपे वाचा ॥
क्रकुछन्दकस्य बोधि बोधिरिह सुदुर्लभा बहुभि कल्पैः ।
जनताया इत्यर्थं ध्यायत्यास्फानकं ध्यानं ॥
द्वादशनयुता पूर्णा विनीत मरुमानुषास्त्रिभिर्यानैः ।
एतदधिकृत्य सुमति ध्यायत्यास्फानकं ध्यानं ॥

॥ इति श्रीललितविस्तरे दुष्करचर्यापरिवर्तो नाम सप्तदशमो ऽध्यायः ॥

मारश्च भिक्षवः पापीयान् बोधिसत्त्वस्य षड्वर्षाणि दुष्करचर्यां चरतः पृष्ठतः पृष्ठतः समनुबद्धो ऽभूत् । अवतारप्रेक्षी । अवतारगवेषी न च कदाचित्किंचिदवतारमध्यगच्छत् । सो ऽवतारमनधिगच्छन्निर्विण्णो विप्रतिसारी प्राक्रामत् ॥

तत्रेदमुच्यते ।

रमणीयान्यरण्यानि वनगुल्माश्च वीरुधाः ।
प्राचीनमुरुविल्वायां यत्र नैरञ्जना नदी ॥
प्रहाणायोद्यतं तत्र सततं दृढविक्रमं ।
पराक्रमन्तं वीर्येण योगक्षेमस्य प्राप्तये ॥
नमुचिर्मधुरां वाचं भाषमाणो उपागमत् ।
शाक्यपुत्रा समुत्तिष्ठ कायखेदेन किं तव ॥
जीवतो जीवितं श्रेयो जीवन्धर्मं चरिष्यसि ।
जीवं हि तानि कुरुते यानि कृत्वा न सोचति ॥
कृशो विवर्णो दीनस्त्वं अन्तिके मरणं तव ।
सहस्रभागे मरणं एकभागे च जीवितं ॥
ददतः सततं दानं अग्निहोत्रं च जुह्वतः ।
भविष्यति महत्पुण्यं किं प्रहाणे करिष्यसि ॥
दुःखं मार्गं प्रहाणस्य दुष्करं चित्तनिग्रहं ।
इमां वाचं तदा मारो बोधिसत्त्वमथाब्रवीत् ॥ ० ॥

तं तथा वादिनं मारं बोधिसत्त्वस्ततोऽब्रवीत् ।
प्रमत्तबन्धो पापीयं स्वेनार्थेन त्वमागतः ॥
अनुमात्रं हि मे पुण्यैरर्थो मार न विद्यते ।
अर्थो येषां तु पुण्येन तानेवं वक्तुमर्हसि ॥
नैवाहं मरणं मन्ये मरणान्तं हि जीवितं ।
अनिवर्ती भविष्यामि ब्रह्मचर्यपरायणः ॥

श्रोतांस्यपि नदीनां हि वायुरेष विशोषयेत् ।
किं पुनः शोषयेत्कायं शोनितं प्रहितात्मनां ॥
शोनिते तु विशुष्के वै ततो मांसं विशुष्यति ।
मांसेषु क्षीयमानेषु भूयश्चित्तं प्रसीदति ।
भूयश्छन्दश्च वीर्यं च समाधिश्चावतिष्ठते ॥ ० ॥

तस्यैव मे विहरतः प्राप्तस्योत्तमचेतनां ।
चित्तं नावेक्षते कायं पश्य सत्त्वस्य शुद्धतां ॥
अस्ति छन्दं तथा वीर्यं प्रज्ञापि मम विद्यते ।
तं न पश्याम्यहं लोके वीर्याद्यो मां विचालयेत् ॥
वरं मृत्यु प्राणहरो धिग्ग्राम्यं नोपजीवितं ।
संग्रामे मरणं श्रेयो यच्च जीवेत्पराजितः ॥
नाशूरो जायते सेनां जित्वा चैना न मन्यते ।
शूरस्तु जायते सेनां लघु मार जयामि ते ॥
कामास्ते प्रथमा सेना द्वितीया अरतिस्तथा ।
तृतीया क्षुत्पिपासा ते तृष्णा सेना चतुर्थिका ॥
पञ्चमी स्त्यानमिद्धं ते भयं षष्ठी निरुच्यते ।
सप्तमी विचिकित्सा ते क्रोधम्रक्षौ तथाष्टमी ॥
लोभश्लोकौ च संस्कारौ मिथ्यालब्धं च यद्यसः ।
आत्मानं यश्च उत्कर्षेद्यश्च वै ध्वंसयेत्परां ॥
एषा हि नमुचेः सेना कृष्णबन्धो प्रतापिनः ।
अत्रावगाढा दृश्यन्ते एते श्रमणब्राह्मणाः ॥
या ते सेना धर्षयति लोकमेनं सदेवकं ।

भेत्स्यामि प्रज्ञया तां ते आमपात्रमिवाम्बुना ॥
स्मृतिं सूपस्थितां कृत्वा प्रज्ञां चैव सुभावितां ।
संप्रजानं चरिष्यामि किं करिष्यसि दुर्मते ॥ ० ॥

एवमुक्ते मारः पापीयान्दुःखी दुर्मना अनात्तमना विप्रतिसारी तत्रैवान्तरधात् ॥

अथ खलु भिक्षवो बोधिसत्त्वस्यैतदभूत् । ये केचिच्छ्रमणा ब्राह्मणा वा अतीतानागतप्रत्युत्पन्नेष्वध्वस्वात्मोपक्रमिकां शरीरोपतापिकां दुःखां तीव्रां खरां कटुकाममनापां वेदनां वेदयन्त्येतावत्परमं ते दुःखमनुभवन्ति ॥

तस्य मे भिक्षव एतदभूत् । अनयापि खलु मया चर्ययानयापि प्रतिपदा न कश्चिदुत्तरि मनुष्यधर्मादलमार्यज्ञानदर्शनविशेषः साक्षात्कृतो नायं मार्गो बोधेर्नायं मार्ग आयत्यां जातिजरामरणसंभवानामस्तंगमाय । स्यात्तदन्यो मार्गो बोधेरायत्यां जातिजरामरणदुःखसमुदयानामस्तंगमायेति ॥

तस्य मे भिक्षव एतदभवत् । यदहं पितुरुद्याने जम्बुच्छायायां निषण्णो विविक्तं कामैर्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसंपद्य व्याहार्षं यावच्चतुर्थध्यानमुपसंपद्य व्याहार्षं । स्यात्स मार्गो बोधेर्जातिजरामरणदुःखसमुदयानामसंभवायास्तंगमायेति । तदनुसारि च मे विज्ञानमभूत् । स मार्गो बोधेरिति ॥

तस्य ममैतदभूत् । नासौ मार्गः शक्य एवं दौर्बल्यप्राप्तेनाभिसंबोद्धुं । स चेत्पुनरहमभिज्ञाज्ञानबलेनैव लूहं दुर्बलकाय एव बोधि-

मण्डमुपसंक्रमेयं । न मे पश्चिमा जनतानुकम्पिता स्यात् । न चैष मार्गो बोधेः ॥ यन्न्वहमौदारिकमाहारमाहृत्य कायबलस्थाम संजनय्य पश्चाद्बोधिमण्डमुपसंक्रमेयं ॥

तत्र भिक्षवो ये ते लूहाधिमुक्ता देवपुत्रास्ते मम चेतश्चेतसैव परिवितर्कमाज्ञाय येनाहं तेनोपसंक्रम्य मामेवमाहुः । मा स्म त्वं सत्पुरुषौदारिकमाहारमाहरेर्वयं ते रोमकूपैरोजः प्रक्षेप्स्याम इति ॥

तस्य मे भिक्षव एतदभूत् । अहं खल्वनशन इत्यात्मानं प्रतिजाने सामन्तास्य मे गोचरग्रामवासिनो जना एवं संजानन्ते स्म । यथानशनः श्रमणो गौतमः । इतीव मे खलु लूहाधिमुक्ता देवपुत्रा रोमकूपैरोजः प्रक्षिपन्ति । स मम परमो मृषावादः स्यात् ॥ ततो बोधिसत्त्वो मृषावादपरिहारार्थं तान्देवपुत्रान्प्रतिक्षिप्यौदारिकमाहारमाहर्तुं चित्तं नामयति स्म ॥

इति हि भिक्षवः षड्वर्षव्रततपःसमुत्तीर्णो बोधिसत्त्वोऽस्मादासनादुत्थायौदारिकमाहारमाहरिष्यामीति वाचं निश्चारयति स्म । तद्यथा फाणीकृतं मुद्गयूषं हरेणुकयूषं मन्थोदनकुल्माषमिति ॥

अथ खलु भिक्षवः पञ्चानां भद्रवर्गीयानामेतदभूत् । तयापि तावच्चर्यया तयापि तावत्प्रतिपदा श्रमणेन गौतमेन न शकितं किंचिदुत्तरि मनुष्यधर्मादलमार्यज्ञानदर्शनविशेषं साक्षात्कर्तुं । किं पुनरेतर्ह्यौदारिकमाहारमाहरन्सुखल्लिकानुयोगमनुयुक्तो विहरन्नव्यक्तो बालोऽयमिति च मन्यमाना बोधिसत्त्वस्यान्तिकात्प्रक्रामंस्ते वाराणसीं गत्वा ऋषिपतने मृगदावे व्याहार्षुः ॥

तत्र बोधिसत्त्वमादित एव दुष्करचर्यां चरन्तं दृष्ट्वा ग्रामिकदुहितरः कुमार्य उपगच्छन्दर्शनाय वन्दनाय पर्युपासनाय च ॥ तैरपि पञ्चकैर्भद्रवर्गीयैरुपस्थितो ऽभूत् । एककोलतिलतण्डुलप्रदानेन च प्रतिपादितो ऽभूत् ॥ बला च नाम दारिका बलगुप्ता च सुप्रिया च विजयसेना च अतिमुक्तकमला च सुन्दरी च कुम्भकारी च उलुविल्लिका च जटिलिका च सुजाता च नाम ग्रामिकदुहिता आभिः कुमारिकाभिर्बोधिसत्त्वाय सर्वास्ता यूषविधाः कृत्वोपनामिता अभूवन् । तांश्चाभ्यवहृत्य बोधिसत्त्वः क्रमेण गोचरग्रामे पिण्डाय चरन्वर्णरूपबलवानभूत् । तदग्रेण बोधिसत्त्वः सुन्दरः श्रमणो महाश्रमण इत्याचक्षते ॥

तत्र च भिक्षवः सुजाता ग्रामिकदुहिता बोधिसत्त्वस्य दुष्करचर्यां चरत आदित एव बोधिसत्त्वस्य व्रततपःसमुत्तारणार्थं शरीरस्याप्यायनहेतोश्च प्रतिदिवसमष्टशतं ब्राह्मणानां भोजयति स्म । एवं च प्रणिदधाति स्म । मम भोजनं भुक्त्वा बोधिसत्त्वो ऽनुत्तरां सम्यक्संबोधिमभिसंबुध्येतेति ॥

तस्य मे भिक्षवः षड्वर्षव्यतिवृत्तस्य काषायाणि वस्त्राणि परिजीर्णान्यभूवन् ॥ तस्य मे भिक्षव एतदभूत् । स चेदहं कौपीनप्रच्छादनं लभेयं शोभनं स्यात् ॥

तेन खलु पुनर्भिक्षवः समयेन सुजाताया ग्रामिकदुहितुर्दासी राधा नाम कालगताभूत् । सा शाणकैः परिवेष्ट्य श्मशानमपकृष्य परित्यक्ताभूत् । तदहमेवाद्राक्षीत्पांशुकूलं । ततो ऽहं तत्पांशुकूलं वामेन पादेनाक्रम्य दक्षिणं हस्तं प्रसार्यावनतो ऽभूत्तद्ग्रहीतुं ॥

अथ भौमा देवा अन्तरीक्षाणां देवानां घोषमनुश्रावयन्ति स्म । आश्चर्यं मार्षा अद्भुतमिदं मार्षाः । यत्र हि नामैवं महाराजकुलप्रसूतस्य चक्रवर्तिराज्यपरित्यागिनः पांशुकूले चित्तं नतमिति । अन्तरीक्षा देवा भौमानां देवानां शब्दं श्रुत्वा चातुर्महाराजिकानां देवानां घोषमुदीरयन्ति स्म । चातुर्महाराजिका देवास्त्रायत्रिंशतः । त्रायत्रिंशा यामानां । यामास्तुषितानां । तुषिता निर्माणरतीनां । निर्माणरतयः परनिर्मितवशवर्तिनां । परनिर्मितवशवर्तिनो यावद्ब्रह्मकायिकानां ॥ इति हि भिक्षवस्तत्क्षणं तल्लवं तन्मुहूर्तं यावदकनिष्ठभुवनादिकघोष एकसंनिर्नादो ऽभ्युद्गतो ऽभूत् । आश्चर्यमिदं मार्षा अद्भुतमिदं । यत्र हि नामैवं महाराजकुलप्रसूतस्य चक्रवर्तिराज्यपरित्यागिनः पांशुकूले चित्तं नतमिति ॥

अथ बोधिसत्त्वस्य पुनरप्येतदभवत् । लब्धं मया पांशुकूलं स चेदुदकं लभेयं शोभनं स्यादिति ॥ ततस्तत्रैव देवता पाणिना महीं पराहन्ति स्म । तत्र पुष्करिणी प्रादुरभूत् । अद्यापि सा पाणिहतेति पुष्करिणी संज्ञायते ॥

पुनरपि बोधिसत्त्वस्यैतदभवत् । लब्धं मया पानीयं स चेच्छिलां लभेयं यत्रेदं पांशुकूलं प्रक्षालयेयं शोभनं स्यात् ॥ अथ तत्रैव शक्रेण शिला तत्क्षणमेवोपनिक्षिप्ताभूत् । ततो बोधिसत्त्वस्तत्पांशुकूलं प्रक्षालयति स्म ॥

अथ शक्रो देवराजो बोधिसत्त्वमेवमाह । ददस्वेदं सत्पुरुष मह्यमहं प्रक्षालयिष्यामीति ॥ ततो बोधिसत्त्वः स्वयंकारितां प्रव्रज्यायाः संदर्शयितुं तत्पांशुकूलं शक्रस्यादत्वा स्वयमेव प्रक्षालयति

स्म । स श्रान्तः क्लान्तकायो ऽवतीर्य पुष्करिणीमुत्तरिष्यामीति ॥ मारेण च पापीयसा ईर्ष्याधर्मपरीतेन पुष्करिण्या अत्युच्छ्रितानि तटानि निर्मितान्यभूवन् ॥ तस्याश्च पुष्करिण्यास्तीरे महान्ककुभपादपः । तत्र देवतां बोधिसत्त्वो लोकानुवृत्त्या देवतानुग्रहार्थं चाब्रवीत् । आहर देवते वृक्षशाखामिति ॥ तया वृक्षशाखावनामिताभूत् । तां बोधिसत्त्वो ऽवलम्ब्योत्तरति स्म । उत्तीर्य च तस्य ककुभपादपस्याधस्तात्तत्पांशुकूलं संघाटीकृत्वा सीव्यति स्म । अद्यापि तत्पांशुकूलसीवनमित्येवं संज्ञायते स्म ॥

अथ विमलप्रभो नाम शुद्धावासकायिको देवपुत्रः स दिव्यानि चीवराणि काषायरङ्गरक्तानि कल्पिकानि श्रमणसारूप्याणि बोधिसत्त्वायोपनामयति स्म । बोधिसत्त्वश्च तानि गृहीत्वा पूर्वाह्णे निवास्य संघाटीप्रावृत्य गोचरग्रामाभिमुखो ऽभूत् ॥

तत्र देवताभिरुरुविल्वासेनापतिग्रामके नन्दिकग्रामिकदुहितुः सुजाताया आरोचितमभूदर्धरात्रसमये । यदर्थं त्वं महायज्ञं यजसे तस्माद्व्रतादुत्तीर्णः स सुभगमौदारिकमाहारमाहरिष्यति । त्वया च पूर्वं प्रणिधानं कृतं मम भोजनं भुक्त्वा बोधिसत्त्वो ऽनुत्तरा सम्यक्संबोधिमभिसंबुध्येत इति । यत्ते करणीयं तत्कुरुष्वेति ॥

अथ खलु भिक्षवः सुजाता नन्दिकग्रामिकदुहिता तेषां देवतानां तद्वचनं श्रुत्वा शीघ्रं शीघ्रं गोसहस्रस्य क्षीरात्सप्तकृत्सारोद्धृतादग्र्यमोजोमण्डं गृह्णीते स्म । गृहीत्वा च सा तत्क्षीरम(भिनवम)भिनवैस्तण्डुलैरभिनवायां स्थाल्यामभिनवां चुल्लीमुपलिप्य तद्भोजनं साधयति स्म । तस्मिंश्च साध्यमाने इमानि पूर्वनिमित्तानि संदृश्यन्ते

स्म । तस्मिन्खल्वपि क्षीरे श्रीवत्सस्वस्तिकनन्द्यावर्तपद्मवर्धमानादीनि मङ्गल्यानि संदृश्यन्ते स्म ॥ ततस्तस्या एतदभूत् । यादृशानीमानि पूर्वनिमित्तानि संदृश्यन्ते निःसंशयमिदं भोजनं भुक्त्वा बोधिसत्त्वो ऽनुत्तरां सम्यक्संबोधिं प्राप्स्यति । सामुद्रज्ञानविधिज्ञश्च नैमित्तिकस्तं प्रदेशं प्राप्तो ऽभूत् । सो ऽपि तथैवामृताधिगमनमेव व्याकृतवान् ॥ ततः सुजाता तं पायस पक्त्वा स्थण्डिलमुपलिप्य पुष्पैरवकीर्य गन्धोदकेनाभ्युक्ष्यासनं प्रज्ञाप्य सत्कृत्योत्तरा नाम चेटीमामन्त्रयते स्म । गच्छोत्तरे ब्राह्मणमानयाहमिदं मधुपायसमवलोकयामि ॥ साध्वार्य इति प्रतिश्रुत्य (उत्तरा) पूर्वां दिशमगमत् । सा तत्र बोधिसत्त्वं पश्यति स्म । तथैव दक्षिणां बोधिसत्त्वमेव पश्यति स्म । एवं पश्चिमामुत्तरामेव दिशं गच्छति स्म । तत्र तत्र बोधिसत्त्वमेवाद्राक्षीत् ॥ तेन खलु पुनः समयेन शुद्धावासकायिकैर्देवपुत्रैः सर्वे ऽन्यतीर्थिका निगृहीता अभूवन् । न कश्चित्संदृश्यते स्म ॥ ततः साऽऽगत्वा स्वामिनीमेवमाह । न खल्वार्ये ऽन्यः कश्चिद्दृश्यते श्रमणो वा ब्राह्मणो वा ऽन्यत्र यतो यत एव गच्छामि तत्र तत्र श्रमणमेव सुन्दरं पश्यामि ॥ सुजाता आह । गच्छोत्तरे स एव ब्राह्मणः स एव श्रमणः । तस्यैवार्थे ऽयमारम्भस्तमेवानयेति ॥ साध्वार्य इत्युत्तरा गत्वा बोधिसत्त्वस्य चरणयोः प्रणिपत्य सुजाताया नाम्नोपनिमन्त्रयते स्म ॥ ततो भिक्षवो बोधिसत्त्वः सुजातायाः ग्रामिकदुहितुर्निवेशनं गत्वा प्रज्ञप्त एवासने न्यषीदत् ॥

अथ खलु भिक्षवः सुजाता ग्रामिकदुहिता सुवर्णमयीं पात्रीं मधुपायसपूर्णां बोधिसत्त्वस्योपनामयति स्म ॥

अथ बोधिसत्त्वस्यैतदभवत् । यादृशमिदं सुजातया भोजनमुपनामितं निःसंशयमहमद्यैनं (भोजनं) भुक्त्वानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते ॥

अथ बोधिसत्त्वस्तद्भोजनं प्रतिगृह्य सुजातां ग्रामिकदुहितरमेतदवोचत् । इयं भगिनि सुवर्णपात्री किं क्रियतां ॥ सा आह । तवैव भवत्विति ॥ बोधिसत्त्व आह । न ममेदृशेन भाजनेन प्रयोजनं ॥ सुजाता आह । यथेष्टं क्रियतां । नाहं विना भाजनेन कस्यचिद्भोजनं प्रयच्छामि ॥

अथ बोधिसत्त्वस्तं पिण्डपात्रमादायोरुविल्वाया निष्क्रम्य नागनदीं पूर्वाह्णकालसमये नदीं नैरञ्जनामुपसंक्रम्य तं पिण्डपात्रं चीवराणि चैकान्ते निक्षिप्य नदीं नैरञ्जनामवतरति स्म । गात्राणि शीतलीकर्तुं ॥

बोधिसत्त्वस्य खलु पुनर्भिक्षवः स्नायतोऽनेकानि देवपुत्रशतसहस्राणि दिव्यागुरुचन्दनचूर्णविलेपनैर्नदीमालोडयन्ति स्म । दिव्यानि च नानावर्णानि कुसुमानि जले क्षिपन्ति स्म । यदुत बोधिसत्त्वस्य पूजाकर्मणे ॥

तेन खलु पुनः समयेन नैरञ्जनानदी दिव्यैर्गन्धैः पुष्पैश्च समाकुला वहति स्म ॥ येन च गन्धोदकेन बोधिसत्त्वः स्नातोऽभूत् । तं देवपुत्रकोटीनियुतशतसहस्राण्यभ्युत्क्षिप्य स्वकस्वकानि भवनानि नयन्ति स्म । चैत्यार्थं पूजार्थं च ॥

यानि च बोधिसत्त्वस्य केशश्मश्रूण्यभूवन्तानि सर्वाणि सुजाता ग्रामिकदुहिता मङ्गल्यानीति कृत्वा चैत्यार्थं पूजार्थं च परिगृह्णीते स्म ॥

नद्युत्तीर्णश्च बोधिसत्त्वः पुलिनं निरीक्षते स्म । उपवेष्टुकामः ॥ अथ या नैरञ्जनायां नद्यां नागकन्या सा धरणीतलादभ्युद्गम्य मणिमयं (मनोरमं) भद्रासनं बोधिसत्त्वायोपनामयति स्म । तत्र बोधिसत्त्वो निषद्य यावदर्थं तं मधुपायसं परिभुङ्क्ते स्म । सुजाताया ग्रामिकदुहितुरनुकम्पामुपादाय । परिभुज्य च तां सुवर्णपात्रीमनपेक्षो वारिणि प्रक्षिपति स्म । क्षिप्तमात्रां च तां सागरो नागराजश्चित्तिकारबहुमानजातो गृहीत्वा स्वभवनाभिमुखः प्रस्थितो ऽभूत् । पूजार्हेति कृत्वा ॥ अथ दशशतनयनः पुरंदरो गरुडरूपमभिनिर्माय वज्रतुण्डो भूत्वा सागरस्य नागराजस्यान्तिकात्तां सुवर्णपात्रीं हर्तुमारब्धो यदा न शक्नोति स्म । तदा स्वरूपेणादरेण याचित्वा त्रायस्त्रिंशद्भवनं नीतवान् चैत्यार्थं पूजार्थं च । नीत्वा पात्रीयात्रां नाम पर्वणि प्रवर्तितवान् । अद्यापि च त्रायस्त्रिंशेषु देवेषु प्रतिसंवत्सरं पात्रीमहो वर्तते ॥ तच्च भद्रासनं तयैव नागकन्यया परिगृहीतं चैत्यार्थं पूजार्थं च ॥

समनन्तरपरिभुक्तश्च भिक्षवो बोधिसत्त्वेनौदारिक आहारो ऽथ तत्क्षणमेव बोधिसत्त्वस्य पुण्यबलेन प्रज्ञाबलेन पूर्विका काये शुभवर्णपुष्करता प्रादुरभूत् । द्वात्रिंशच्च महापुरुषलक्षणानि अशीतिश्चानुव्यञ्जनानि व्यामप्रभता च ॥ तत्रेदमुच्यते ।

षड्वर्ष व्रत उत्तरित्व भगवान् एवं मतिं चिन्तयन्
सो ऽहं ध्यानअभिज्ञज्ञानबलवानेवं कृशाङ्गो ऽपि सन् ।
गच्छेयं द्रुमराजमूल विटपं सर्वज्ञतां बुध्यितुं
नो मे स्यादनुकम्पिता हि जनता एवं भवेत्पश्चिमा ॥

यत्त्वौदारिक भुक्त भोजनवरं काये बलं कृत्वना
गच्छेयं द्रुमराजमूल विटपं सर्वज्ञतां बुध्यितुं ।
मा हैवेत्वरपुण्य देवमनुजा लूहेन ज्ञानेक्षिणो
नो शक्ता सिय बुध्यनाय अमृतं कायेन ते दुर्बलाः ॥

सा च ग्रामिकधीत पूर्वचरिता नाम्ना सुजाता इति
यज्ञा नित्यु यजाति एवमनसा सिद्धे व्रतं नायके ।
सा देवान निशाम्य चोदन तदा गृह्या मधूपायसं
उपगम्या नदितीरि हृष्टमनसा नैरञ्जनाया स्थिता ॥

सो चाकल्पसहस्रचीर्णचरितो शान्तप्रशान्तेन्द्रियो
देवैर्नागगणैर्ऋषी परिवृतो आगत्य नैरञ्जनां ।
तीर्णस्तारकु पारसत्त्वमतिमां स्नाने मतिं चिन्तयन्
ओरुह्या नदि स्नापि शुद्धविमलो लोकानुकम्पी मुनिः ॥

देवाः कोटिसहस्र हृष्टमनसा गन्धाम्बु चूर्णानि च
ओरुह्या नदि लोडयन्ति सलिलं स्नानार्थ सत्त्वोत्तमे ।
स्नाना स्नात्वन बोधिसत्त्व विमलस्तीरे स्थितः सूरतः
हर्षुर्देवसहस्र स्नानसलिलं पूजार्थ सत्त्वोत्तमे ॥

काषायाणि च वस्त्रनिर्मलशुभा ता देवपुत्रो ददे
कल्पीयानि च संनिवास्य भगवांस्तीरे हि नद्या स्थितः ।
नागाकन्य उदग्रहृष्टमनसा भद्रासनं सा न्यषीत्
यत्रासौ निषसाद शान्तमनसो लोकस्य चक्षुष्करः ॥

दत्वा भोजनु सा सुजात मतिमां स्वर्णामये भाजने
वन्दित्वा चरणानि सा प्रमुदिता परिभुङ्क्ष्व मे सारथे ।

भुक्त्वा भोजनु यावदर्थं मतिमान्पात्रीं जले प्राक्षिपत
तां जग्राह पुरंदरः सुरगुरुः पूजां करिष्याम्यहं ॥
यद् भुक्तं च जिनेन भोजनवरं औदारिकं तत्क्षणे
तस्या कायबलं च तेजश्रिरिया पूर्वं यथा संस्थितं ।
धर्मा कृत्व कथा सुजात मरुणां कृत्वा च अर्थं वक्तुं
सिंहो हंसगतिर्गजेन्द्रगमनो बोधिद्रुमं संस्थितः ॥ इति ॥

॥इति श्रीललितविस्तरे नैरञ्जनापरिवर्तो नामाष्टादशमोऽध्यायः॥

इति हि भिक्षवो बोधिसत्त्वो नद्यां नैरञ्जनायां स्नात्वा च भुक्त्वा कायबलस्थाम संजनय्य येन षोडशाकारसंपन्नपृथिवीप्रदेशे महाबोधिद्रुमराजमूलं तेन प्रतस्थे विजयया तया च गत्या । यासौ महापुरुषाणां गतिरनुच्चलितगतिरिन्द्रियेष्टिगतिः सुसंस्थितगतिः । मेरुराजगतिरजिह्मगतिरकुटिलगतिरनुपद्रुतगतिरविलम्बितगतिरलुडितगतिरस्खलितगतिरसघट्टितगतिरलीनगतिरचपलगतिः । सलीढगतिः । विमलगतिः शुभगतिरदोषगतिरमोहगतिररक्तगतिः । सिंहगतिः । हंसराजगतिर्नागराजगतिर्नारायणगतिः । धरणीतलासंसृष्टगतिः । सहस्रारचक्रधरणीतलचित्रगतिः । जालाङ्गुलिताम्रनखगतिः । धरणीतलनिर्नादगतिः । शैलराजसंघटनगतिः । उत्कूलनिकूलसमकरचरणगतिः । जालान्तराभारश्म्युत्सर्जनसत्त्वसंस्पृशनसुगतिगमनगतिः । विमलपद्मक्रमनिक्षिपणगतिः । पूर्वशुभसुचरितगमनगतिः । पूर्वबुद्धसिंहाभिगमनगतिः । वज्रदृढाभेद्याशयगतिः (सर्वोपायगतिः) । सर्वा-

पायदुर्गतिपिथितगतिः । सर्वसत्त्वसुखसंजननगतिः । मोक्षपथसंदर्शनगतिः । मारबलाबलकरणगतिः । कुगणिगणपरप्रवादिसहधर्मनिग्रहणगतिः । तमःपटलक्लेशविधमनगतिः । संसारपक्षापक्षकरणगतिः । शक्रब्रह्ममहेश्वरलोकपालाभिभवगतिः । त्रिसाहस्रमहासाहस्रैकशूरगतिः । स्वयंभ्वनभिभूतगतिः । सर्वज्ञज्ञानाभिगमनगतिः । स्मृतिमतिगतिः । सुगतिगमनगतिः । जरामरणप्रशमनगतिः । शिवविरजामलाभयनिर्वाणपुरगमनगतिः । ईदृश्या गत्या बोधिसत्त्वो बोधिमण्डं संप्रस्थितो ऽभूत् ॥

इति हि भिक्षवो यावच्च नद्या नैरञ्जनाया यावच्च बोधिमण्डादित्यस्मिन्नन्तरे वातबलाहकैर्देवपुत्रैः संमृष्टमभूत् । वर्षबलाहकैर्देवपुत्रैर्गन्धोदकेन सिक्तमभूत्पुष्पैश्चावकीर्णमभूत् । यावदेव त्रिसाहस्रमहासाहस्रलोकधातौ वृक्षास्ते सर्वे येन बोधिमण्डस्तेनाभिनताग्रा अभूवन् । ये ऽपि च तदहोजातबालदारिकास्ते ऽपि बोधिमण्डशीर्षका स्वपन्ति स्म । ये ऽपि चेह त्रिसाहस्रमहासाहस्रलोकधातौ सुमेरुप्रमुखाः पर्वतास्ते ऽपि सर्वे येन बोधिमण्डस्तेन प्रणता अभूवन् । नदीं च नैरञ्जनामुपादाय यावद्बोधिमण्डो ऽस्मिन्नन्तरे कामावचरैर्देवपुत्रैः क्रोशविस्तारिकप्रमाणो मार्गो ऽभिव्यूहितो ऽभूत् । तस्य च मार्गस्य वामदक्षिणयोः पार्श्वयोः सप्तरत्नमयी वेदिका ऽभिनिर्मिता ऽभूत् । सप्ततालानुच्चैस्त्वेन उपरिष्टाद्रत्नजालसंछन्ना दिव्यछत्रध्वजपताकासमलंकृता । इषुक्षेपे सप्तरत्नमयास्ताला अभिनिर्मिता अभूवन् । तस्या वेदिकाया अभ्युद्गताः सर्वस्माच्च तालाद्रत्नसूत्रा द्वितीये तालमवसक्तमभूत् । द्वयोश्च तालयोर्मध्ये पुष्करिणी मापि-

ताभूत्। गन्धोदकपरिपूर्णा सुवर्णवालिकासंस्तृता उत्पलपद्मकुमुदपुण्डरीकसंछन्ना रत्नवेदिकापरिवृता वैडूर्यमणिरत्नसोपानप्रत्युप्ताः। आडिबलाकाहंसचक्रवाकमयूरोपकूजिताः॥ तं च मार्गमशीत्यप्सरःसहस्राणि गन्धोदकेन सिञ्चन्ति स्म। अशीत्यप्सरःसहस्राणि मुक्तकुसुमैरभ्यवकिरन्ति स्म। दिव्यैर्गन्धवद्भिः॥ सर्वस्य च तालवृक्षस्य पुरतो रत्नव्योमकः संस्थितो ऽभूत्। सर्वस्मिंश्च रत्नव्योमके अशीत्यप्सरःसहस्राणि चन्दनागुरुचूर्णकपुटापरिगृहीतानि कारानुसारिधूपघटिकापरिगृहीतानि स्थितान्यभूवन्। सर्वस्मिंश्च रत्नव्योमके पञ्चपञ्चाप्सरःसहस्राणि दिव्यसंगीतिसंप्रवादितेन स्थितान्यभूवन्॥

इति हि भिक्षवो बोधिसत्त्वः प्रकम्प्यमानैः क्षेत्रै रश्मिकोटीनियुतशतसहस्राणि निश्चारयंस्तूर्यशतसहस्रैः प्रवाद्यमानैः। महता पुष्पाभ्रेन प्रवर्षता। अम्बरशतसहस्रैर्भ्राम्यमानैः। दुन्दुभिशतसहस्रैः पराहन्यमानैर्गर्जद्भिः प्रगर्जद्भिः। हयगजवृषभैः प्रदक्षिणीकुर्वद्भिः। शुकसारिकाकोकिलकलविङ्कजीवंजीवकहंसक्रौञ्चमयूरचक्रवाकशतसहस्रैरुपनाम्यमानैः। मङ्गल्यशतसहस्रैरनेनैवंरूपेण मार्गव्यूहेन बोधिसत्त्वो बोधिमण्डं गच्छति स्म॥ यां च रात्रिं बोधिसत्त्वो बोधिमभिसंबोद्धुकामो ऽभूत् तामेव रात्रिं वशवर्ती नाम त्रिसाहस्रमहासाहस्राधिपतिर्ब्रह्मा सहापतिर्ब्रह्मपर्षदमामन्त्र्यैवमाह। यत्खलु मार्षा जानीयाः। एष स बोधिसत्त्वो महासत्त्वो महासंनाहसंनद्धो महाप्रतिज्ञानुत्सृष्टो दृढसंनाहसंनद्धो ऽपरिखिन्नमानसः सर्वबोधिसत्त्वचर्यासु निर्जातः सर्वपारमितासु पारंगतः सर्वबोधिसत्त्वभूमिषु वशिताप्राप्तः सर्वबोधिसत्त्वाशयसुविशुद्धः सर्वसत्त्वेन्द्रियेष्वनुगतः सर्वतथागतगुह्य-

स्थानेषु सुप्रविष्टः सर्वमारकर्मपथसमतिक्रान्तः सर्वकुशलमूलेष्वपरप्रत्ययः सर्वतथागतैरधिष्ठितः सर्वसत्त्वेषु प्रमोक्षमार्गदेशयिता महासार्थवाहः। सर्वमारमण्डलविध्वंसनकरः। त्रिसाहस्रमहासाहस्रैकशूरः सर्वधर्मभैषज्यसमुदानीतः। महावैद्यराजो विमुक्तिपट्टाबद्धो महाधर्मराजः। महाप्रज्ञाप्रभोत्सर्जनकरः। महाकेतुराजः। अष्टलोकधर्मानुपलिप्तः। महापद्मभूतः। सर्वधर्मधारण्यसंप्रमुषितः। महासागरभूतः। अनुनयप्रतिघापगतः। अचलो ऽप्रकम्पी महासुमेरुभूतः। सुनिर्मलः सुपरिशुद्धः स्ववदर्पितविमलबुद्धिर्महामणिरत्नभूतः। सर्वधर्मवशवर्ती सर्वकर्मण्यचित्तो महाब्रह्मभूतो बोधिसत्त्वो बोधिमण्डमुपसंक्रमति मारसैन्यप्रधर्षणार्थमनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामः। दशबलवैशारद्याष्टादशवेणिकबुद्धधर्मपरिपूरणार्थं महाधर्मचक्रप्रवर्तनार्थं महासिंहनादनादनार्थं सर्वसत्त्वान्धर्मदानेन संतर्पणार्थं सर्वसत्त्वानां धर्मचक्षुर्विशोधनार्थं सर्वपरप्रवादीनां सहधर्मेण निग्रहार्थं पूर्वप्रतिज्ञापरिपूरिसंदर्शनार्थं सर्वधर्मैश्वर्यवशिताप्राप्त्यर्थं। तत्र युष्माभिर्मार्षा सर्वैरेव बोधिसत्त्वस्य पूजोपस्थानकर्मण्युत्सुकैर्भवितव्यं॥

अथ खलु वशवर्ती महाब्रह्मा तस्यां वेलायामिमां गाथामभाषत।

यस्या तेजतु पुण्यतश्च शिरिये ब्राह्मः पथो ज्ञायते
मैत्री वा करुणा उपेक्षमुदिता ध्यानान्यभिज्ञास्तथा।
सो ऽयं कल्पसहस्रचीर्णचरितो बोधिद्रुमं प्रस्थितः
पूजां साधु करोथ तस्य मुनिनो आशिव्रते साधनां॥

यं गत्वा शरणं न दुर्गतिभयं प्राप्नोति नैवाक्षणं
देवेष्विष्टसुखं च प्राप्य विपुलं ब्रह्मालयं गच्छति।

षड्वर्षाणि चरित्व दुष्करचरिं यात्येष बोधिद्रुमं
साधू सर्वि उदग्रहृष्टमनसः पूजास्य कुर्वामहे ॥
राजासौ त्रिसहस्रि ईश्वरवरो धर्मेश्वरः पार्थिवः
शक्राब्रह्मपुरे च चन्द्रसुरिये नास्त्यस्य कश्चित्समः ।
यस्या जायत क्षेत्रकोटिनयुता संकम्पिता षड्विधा
सैषो ऽद्य व्रजति महाद्रुमवरं मारस्य जेतुं चमून् ॥
मूर्ध्नं यस्य न शक्यमीक्षितुमिह ब्रह्मालये ऽपि स्थितैः
कायो यस्य वराग्रलक्षणधरो द्वात्रिंशतालंकृतः ।
वाग्यस्येह मनोज्ञवल्गुमधुरा ब्रह्मस्वरा सुस्वरा
चित्तं यस्य प्रशान्त दोषरहितं गच्छाम तत्पूजने ॥
येषां वा मति ब्रह्मशक्रभवने नित्यं सुखं क्षेपितुं
अथवा सर्वकिलेशबन्धनलतां छेत्तुं हि तां जालिनीं ।
अश्रुत्वा परतः स्पृशेयममृतं प्रत्येकबोधिं शिवां
बुद्धत्वं यदि वेप्सितं त्रिभुवने पूजेत्वसौ नायकं ॥
त्यक्ता येन ससागरा वसुमती रत्नान्यनन्तान्यथो
प्रासादाश्च गवाक्षहर्म्यकलिका युग्यानि यानानि च ।
भूम्यालंकृत पुष्पदाम रुचिरा उद्यानकूपासराः
हस्ता पादशिरोत्तमाङ्गनयना सो बोधिमण्डोन्मुखः ॥

इति हि भिक्षवस्त्रिसाहस्रमहासाहस्रिको महाब्रह्मा इमं त्रिसाहस्रमहासाहस्रं लोकधातुं तत्क्षणं सममध्यतिष्ठत् । पाणितलजातमपगतशर्करकठल्लमुत्सदमणिमुक्तिवैडूर्यशङ्खशिलाप्रवाडरजतजातरूप्यं नीलमृदुकुण्डलजातप्रदक्षिणनन्द्यावर्तकाचिलिन्दिकसुखसंस्पर्शैश्च तृणै-

रिमं त्रिसाहस्रमहासाहस्रं लोकधातुं संछादितमध्यतिष्ठत् ॥ सर्वे च तदा महासमुद्रा धरणीतलसंस्थिता अभूवन् । न च जलचलानां सत्त्वानां काचिद्विहेठाभूत् । इमं चैव लोकधातुमलंकृतं दृष्ट्वा च दशसु दिक्षु शक्रब्रह्मलोकपालैर्बोधिसत्त्वस्य पूजाकर्मणे बुद्धक्षेत्रशतसहस्राणि समलंकृतान्यभूवन् । बोधिसत्त्वैश्च दिव्यमानुष्यकातिक्रान्तैः पूजाव्यूहैर्दशसु दिक्ष्वप्रमेयानि बुद्धक्षेत्राणि प्रतिमण्डितान्यभूवन् । बोधिसत्त्वस्य पूजाकर्मणे । सर्वाणि च तानि बुद्धक्षेत्राण्येकमिव बुद्धक्षेत्रं संदृश्यन्ते स्म । नानाव्यूहालंकारालंकृतानि च । न च भूयो लोकान्तरिका न च कालपर्वता न च चक्रवाडमहाचक्रवाडाः प्रज्ञायन्ते स्म । सर्वाणि च तानि बुद्धक्षेत्राणि बोधिसत्त्वस्याभया स्फुटानि संदृश्यन्ते स्म ॥ षोडश च बोधिमण्डपरिपालका देवपुत्राः । तद्यथा । उत्खली च नाम देवपुत्रस्सूत्खली च नाम प्रजापतिश्च शूरबलश्च केयूरबलश्च सुप्रतिष्ठितश्च महिंधरश्च अवभासकरश्च विमलश्च धर्मेश्वरश्च धर्मकेतुश्च सिद्धपात्रश्च अप्रतिहतनेत्रश्च महाव्यूहश्च शीलविशुद्धनेत्रश्च पद्मप्रभश्च । इतीमे षोडश बोधिमण्डप्रतिपालका देवपुत्राः सर्वेऽवैवर्त्यक्षान्तिप्रतिलब्धास्ते बोधिसत्त्वस्य पूजार्थं बोधिमण्डं मण्डयन्ति स्म । समन्तादशीतियोजनानि सप्तभी रत्नवेदिकाभिः परिवृतं सप्तभिस्तालपङ्क्तिभिः सप्तभी रत्नकिङ्किणीजालैः सप्तभी रत्नसूत्रैः परिवृतं सप्तरत्नप्रत्युप्तैश्च जाम्बूनदसुवर्णपट्टैः सुवर्णसूत्रैर्जाम्बूनदसुवर्णपद्मैश्चावकीर्णं सारवरगन्धनिर्धूपितं रत्नजालसंछन्नं । ये च दशसु दिक्षु नानालोकधातुषु विविधा वृक्षाः सन्त्यभिजाता अभिपूजिता दिव्यमानुष्यकास्ते ऽपि सर्वे तत्र बोधिमण्डे संदृश्यन्ते

स्म। याश्च दशसु दिक्षु नानाप्रकारा जलजस्थलजाः पुष्पजातयस्ता अपि सर्वास्तत्र बोधिमण्डे संदृश्यन्ते स्म। ये ऽपि च दशसु दिक्षु नानालोकधातुषु बोधिसत्त्वा बोधिमण्डालंकुर्वन्त्यप्रमाणपुण्यज्ञान-संभारव्यूहैस्ते ऽपि तत्र बोधिमण्डे संदृश्यन्ते स्म॥

इति हि भिक्षवो बोधिमण्डपरिपालकैर्देवपुत्रैस्तादृशा व्यूहा बोधिमण्ड अभिनिर्मिता अभूवन्। यान्दृष्ट्वा देवनागयक्षगन्धर्वासुराः स्वभवनानि श्मशानसंज्ञामुत्पादयामासुः। तांश्च व्यूहान्दृष्ट्वात्यर्थं चित्रीकारमुत्पादयामासुः। एवमुदानं चोदानयामासुः। साध्वहो ऽचिन्त्यः पुण्यविपाकनिष्यन्द इति॥ ॥ चत्वारश्च बोधिवृक्षदेवताः। तद्यथा। वेणुश्च वल्गुश्च सुमनश्च ओजापतिश्च। एते चत्वारो बोधिवृक्षदेवता बोधिसत्त्वस्य पूजार्थं बोधिवृक्षं मापयन्ति स्म। मूलसंपन्नं स्कन्धसंपन्नं शाखापत्रपुष्पफलसंपन्नं आरोहपरिणाहसंपन्नं प्रासादिकं दर्शनीयं विस्तीर्णमशीतिस्तालानुच्चैस्त्वेन तदनुरूपेण परिणाहेन चित्रं दर्शनीयं मनोरमं सप्तभी रत्नवेदिकाभिः परिवृतं सप्तभी रत्नतालपङ्क्तिभिः सप्तभी रत्नकिङ्किनीजालैः सप्तभी रत्नसूत्रैः समन्तादनुपरिवृतैरनुपरिक्षिप्तं पारिजातककोविदारप्रकाशमतृप्तचक्षु-र्दर्शनं॥ स च पृथिवीप्रदेशस्त्रिसाहस्रमहासाहस्रलोकधातुवज्रेणाभि-दृढः सारो ऽभेद्यवज्रमयः संस्थितो ऽभूत्। यत्र बोधिसत्त्वो निषण्णो ऽभूद्बोधिमभिसंबोद्धुकामः॥

इति हि भिक्षवो बोधिसत्त्वेन बोधिमण्डमुपसंक्रमता तथा-रूपा कायात्प्रभा मुक्ताभूद्यया प्रभया सर्वे ऽपायाः शान्ता अभूवन्। सर्वाण्यक्षणानि पिथितान्यभूवन्। सर्वदुर्गतिवेदनाश्चोपशोषिता अभू-

वन् । ये च सत्त्वा विकलेन्द्रिया अभूवन् ते सर्वे परिपूर्णेन्द्रियतामनुप्राप्नुवन् । व्याधिताश्च व्याधिभ्यो व्यमुच्यन्त । भयार्दिताश्चाश्वासप्राप्ता अभूवन् । बन्धनबद्धाश्च बन्धनेभ्यो व्यमुच्यन्त । दरिद्राश्च सत्त्वा भोगवन्तो ऽभूवन् । क्लेशसंतप्ताश्च निष्परिदाहा अभूवन् । बुभुक्षिताश्च सत्त्वाः पूर्णोदरा अभूवन् । पिपासिताश्च तृषापगता अभूवन् । गुर्विण्यश्च सुखेन प्रसूयन्ते स्म । जीर्णदुर्बलाश्च बलसंपन्ना अभूवन् । न च कस्यचित्सत्त्वस्य तस्मिन्समये रागो बाधते द्वेषो वा मोहो वा क्रोधो वा लोभो वा खिलो वा व्यापादो वा ईर्ष्या वा मात्सर्यो वा । न कश्चित्सत्त्वस्तस्मिन्समये म्रियते स्म । न च्यवते स्म । नोपपद्यते स्म । सर्वसत्त्वाश्च तस्मिन्समये मैत्रचित्ता हितचित्ताः परस्परं मातापितृसंज्ञिनो ऽभूवन् ॥

तत्रेदमुच्यते ।

यावच्चावीचिपर्यन्तं नरका घोरदर्शनाः ।
दुःखं प्रशान्तं सत्त्वानां सुखं विन्दन्ति वेदनां ॥
तिर्यग्योनिषु यावन्तः सत्त्वा अन्योन्यघातकाः ।
मैत्रचित्ता हिते जाताः स्पृष्टा भाभिर्महामुनेः ॥
प्रेतलोकेषु यावन्तः प्रेताः क्षुत्तर्षपीडिताः ।
प्राप्नुवन्त्यन्नपानानि बोधिसत्त्वस्य तेजसा ॥
अक्षणाः पिथिताः सर्वे दुर्गतिश्चोपशोषिता ।
सुखिताः सर्वसत्त्वाश्च दिव्यसौख्यसमर्पिताः ॥
चक्षुश्रोतविहीनाश्च ये चान्ये विकलेन्द्रियाः ।
सर्वेन्द्रियैः ससंपर्णा जाताः सर्वाङ्गशोभनाः ॥

रागद्वेषादिभिः क्लेशैः सत्त्वा बाध्यन्त ये सदा ।
शान्तक्लेशास्तदा सर्वे जाताः सुखसमर्पिताः ॥
उन्मत्ताः स्मृतिमन्तश्च दरिद्रा धनिनस्तथा ।
व्याधिता रोगनिर्मुक्ता मुक्ता बन्धनबद्धकाः ॥
न खिलं न च मात्सर्यं व्यापादो न च विग्रहः ।
अन्योन्यं संप्रकुर्वन्ति मैत्रचित्ता स्थितास्तदा ॥
मातुः पितुश्चैकपुत्रे यथा प्रेम प्रवर्तते ।
तथान्योन्येन सत्त्वानां पुत्रप्रेम तदाभवत् ॥
बोधिसत्त्वप्रभाजालैः स्फुटाः क्षेत्रा ह्यचिन्तियाः ।
गङ्गावालिकसंख्याताः समन्ताद्धि दिशो दश ॥
न भूयश्चक्रवाडाश्च दृश्यन्ते कालपर्वताः ।
सर्वे ते विपुला क्षेत्राः दृश्यन्त्येक यथा तथा ॥
पाणितलप्रकाशाश्च दृश्यन्ते सर्वरत्निकाः ।
बोधिसत्त्वस्य पूजार्थं सर्वक्षेत्रा अलंकृताः ॥
देवाश्च षोडश तथा बोधिमण्डोपचारकाः ।
अलंचक्रुर्बोधिमण्डं अशीतिर्योजनावृत्तं ॥
ये च केचिन्महाव्यूहाः क्षेत्रकोटीष्वनन्तकाः ।
ते सर्वे तत्र दृश्यन्ते बोधिसत्त्वस्य तेजसा ॥
देवा नागास्तथा यक्षाः किन्नराश्च महोरगाः ।
स्वानि स्वानि विमानानि श्मशानानीव मेनिरे ॥
तान्व्यूहान्संनिरीक्ष्येह विस्मिताः सुरमानुषाः ।
साधुः पुण्यस्य निस्यन्दः संपद्यस्येयमीदृशी ॥

करोति नैव चोद्योगं कायवाङ्मनसा तथा ।
सर्वार्थास्तस्य सिध्यन्ति ये ऽभिप्रेता मनोरथाः ॥
अभिप्राया यथान्येषां पूरितास्तरता पुरा ।
विपाका कर्मणस्तस्य संपद्यातियमीदृशी ॥
अलंकृतो बोधिमण्डश्चतुर्भिर्बोधिदेवतैः ।
पारिजातो दिवि यथा तस्मादपि विशिष्यते ॥
गुणाः शक्या न ते वाचा सर्वे संपरिकीर्तितुं ।
ये व्यूहा बोधिमण्डस्य देवतैरभिसंस्कृताः ॥

इति हि भिक्षवस्तया बोधिसत्त्वस्य कायप्रमुक्तया प्रभया कालिकस्य नागराजस्य भवनमवभासितमभूत् । विशुद्धया विमलया कायचित्तप्रह्लादौद्बिल्यजनन्या सर्वक्लेशापकर्षिण्या सर्वसत्त्वसुखप्रीतिप्रसादप्रामोद्यजनन्या । दृष्ट्वा च पुनः कालिको नागराजस्तस्यां वेलायां स्वस्य परिवारस्य पुरतः स्थित्वेमा गाथा अभाषत् ।

क्रकुछन्दे यथ आभ दृष्ट रुचिरा दृष्टा च कनकाह्वये
यद्वत्काश्यपि धर्मराजमनघे दृष्टा प्रभा निर्मला ।
निःसंशयं वरलक्षणो हितकरो उत्पन्न ज्ञानप्रभो
येनेदं भवनं विरोचति हि मे स्वर्णप्रभालंकृतं ॥

नास्मिं चन्द्ररविप्रभा सुविपुला संदृश्यते वेश्मनि
नो चाग्नेर्न मणेर्न विद्युदमला नो च प्रभा ज्योतिषां ।
नो वा शक्रप्रभा न ब्रह्मण प्रभा नो च प्रभा आसुरी
एकान्तं तमसाकुलं मम गृहं प्राग्दुष्कृतैः कर्मभिः ॥

अद्येदं भवनं विराजति शुभं मध्ये रविर्दीप्तिवत्
चित्तं प्रीतिजनेति कायु सुखितो गात्राद्भुता शीतला ।
तप्ता वालिक या शरीरि निपती जाता स मे शीतला
सुव्यक्तं बहुकल्पकोटिचरितो बोधिद्रुमं गच्छति ॥

शीघ्रं गृह्णत नागपुष्प रुचिरा वस्त्रां सुगन्धां शुभां
मुक्ताहारपिनद्धतांश्च वलयांश्चूर्णानि धूपोत्तमा ।
संगीतिं प्रकुरुध्व वाद्यविविधा भेरीमृदङ्गैः शुभैः
हन्ता गच्छथ पूजना हितकरं पूजार्ह सर्वे जगे ॥

सो ऽभ्युत्थाय च नागकन्यसहितश्चतुरो दिशः प्रेक्षते
अद्राक्षीदथ मेरुपर्वतनिभं स्वालंकृतं तेजसा ।
देवैर्दानवकोटिभिः परिवृतं ब्रह्मेन्द्रयक्षैस्तथा
पूजां तस्य करोन्ति हृष्टमनसो दर्शेन्ति मार्गो ह्ययं ॥

संहृष्टः स हि नागराड्मुदितश्चाभ्यर्च्य लोकोत्तमं
वन्दित्वा चरणौ च गौरवकृतस्तस्थौ मुनेरग्रतः ।
नागाकन्य उदग्र हृष्टमनसः कुर्वन्ति पूजां मुनेः
पुष्पं गन्धविलेपना च क्षिपिषुस्तूर्याणि निर्नादयन् ॥

कृत्वा चाञ्जलि नागराड्मुदितस्तुष्टाव तथ्यैर्गुणैः
साधुर्दर्शितु पूर्णचन्द्रवदने लोकोत्तमे नायके ।
यथ मे दृष्ट निमित्त पूर्वकऋषिणां पश्यामि तानेव ते
अद्य त्वं विनिहत्य मारबलवानिष्टं पदं लप्स्यसे ॥

यस्यार्थे दमदानसंयम पुरे सर्वा ति त्यागी अभूत्
यस्यार्थे दमशीलमैत्रकरुणा क्षान्तिबलं भावितं ।

यस्यार्थे दृमवीर्य ध्याननिरतः प्रज्ञाप्रदीपः क्षतः
सैषा ते परिपूर्ण सर्वप्रणिधी अद्या जिनो भेष्यसे ॥

यद्वद्वृक्ष सपत्रपुष्प सफला बोधिद्रुमं संनताः
यद्वत्कुम्भसहस्र पूर्णसलिला कुर्वन्ति प्रादक्षिणं ।
यद्वच्चाप्सरगणाश्च संप्रमुदिता स्निग्धं रुतं कुर्वते
हंसाः क्रोञ्चगणा यथा च गगणे गच्छन्ति लीडान्वितं
कुर्वन्ते सुमनाः प्रदक्षिणमृषिं भावि त्वमद्यार्हवान् ॥

यथ वा काञ्चनवर्ण आभरुचिरा क्षत्राश्रता गच्छते
शान्ताश्चापि यथा अपायनिखिला दुःखैर्विमुक्ता प्रजाः ।
यद्वद्दृष्टित चन्द्रसूर्यभवना वायुर्मृदुर्वायते
अद्या भेष्यसि सार्थवाह त्रिभवे जातीजरामोचको ॥

यद्वत्कामरती विहाय च सुरास्त्वत्पूजने ऽभ्यागताः
ब्रह्मा ब्रह्मपुरोहिताश्च अमरा उत्सृज्य ध्यानं सुखं ।
ये केचित्त्रिभवे तथैव च पुरे सर्वे इहाभ्यागताः
अद्या भेष्यसि वैद्यराजु त्रिभवे जातीजरामोचको ॥

मार्गश्चापि यथा विशोधितु सुरैर्येनाद्य त्वं गच्छसे
एतेनागतु क्रकुच्छन्दु भगवान् कनकाह्वयः काश्यपः ।
यथ वा पद्म विशुद्धनिर्मलशुभा भित्वा महीमुद्गताः
यस्मिं निक्षिपसे क्रमानतिबलां भावि त्वमद्यार्हवान् ॥

माराः कोटिसहस्रनेकनयुता गङ्गा यथा वालिकाः
ते तुभ्यं न समर्थ बोधिविटपाच्चालेतु कम्पेतु वा ।

यज्ञा नैकविधाः सहस्रनयुता गङ्गा यथा वालिकाः
यष्टास्ते चरता हिताय जगतस्तेनेह विभ्राजसे ॥

नक्षत्रा सशशी सतारकरवी भूमौ पतेदम्बरात्
स्वस्थानाच्च चलेन्महागिरिवरः शुष्येद्यथो सागरः ।
चतुरो धातव कश्चि विज्ञपुरुषो दर्शेय एकैकसः
नैव त्वं द्रुमराजमूलुपगतो अप्राप्य बोध्युत्थिहेत् ॥

लाभा मह्य सुलब्ध वृद्धि विपुला दृष्टो ऽसि यत्सारथे
पूजा चैव कृता गुणाश्च कथिता बोधाय चोत्साहितः ।
सर्वा नागवधू अहं च ससुता मुच्येमितो योनितः
त्वं यासी यथ मत्तवारणगते गच्छेम एवं वयं ॥ इति ॥

इति हि भिक्षवः कालिकस्य नागराजस्याग्रमहिषी सुवर्णप्रभासा नाम सा संबहुलाभिर्नागकन्याभिः परिवृता पुरस्कृता नानारत्नछत्रपरिगृहीताभिः नानादूष्यपरिगृहीताभिः नानामुक्ताहारपरिगृहीताभिः नानामणिरत्नपरिगृहीताभिः दिव्यमानुष्यकमाल्यविलेपनगुण्ठपरिगृहीताभिः नानागन्धघटिकापरिगृहीताभिः नानातूर्यसंगीतिसंप्रवादितैर्नानारत्नपुष्पवर्षैर्बोधिसत्त्वं गच्छन्तमभ्यवकिरन्ति स्म । आभिश्च गाथाभिस्तुष्टुवुः ।

अभ्रान्ता अत्रस्ता अभीरू अछम्भी
अलीना अदीना प्रहृष्टा दुधर्षा ।
अरक्ता अदुष्टा अमूढा अलुब्धा
विरक्ता विमुक्ता नमस्ते महर्षे ॥

भिषङ्का विशल्या विनेया विनेषी
सुवैद्या जगस्या दुखेभ्यः प्रमोची ।
अलेना अत्राणा अहीना विदित्वा
भवालेनु त्राणो त्रिलोकेस्मि जातः ॥

प्रसन्ना प्रहृष्टा यथा देवसंघाः
प्रवर्षी नभस्था महत्पुष्पवर्षं ।
महाचैलक्षेपं करोन्ती यथेमे
जिनो भेष्यसे ऽद्या कुरुष्व प्रहर्षं ॥

उपेहि द्रुमेन्द्रं निषीदा अक्षुभी
जिना मारसेनां धुन क्लेशजालं ।
विबुध्य प्रशान्तां वरामग्रबोधिं
यथा पौर्वकैस्तैर्विबुद्धा जिनेन्द्रैः ॥

त्वया यस्य अर्थे बहुकल्पकोट्य
कृता दुष्कराणी जगन्मोचनार्थं ।
प्रपूर्णा ति आसा अयं प्राप्तु कालो
उपेहि द्रुमेन्द्रं स्पृशस्वाग्रबोधिं ॥ इति ॥

अथ खलु भिक्षवो बोधिसत्त्वस्यैतदभवत् । कुत्र निषण्णैः पूर्वकैस्तथागतैरनुत्तरा सम्यक्संबोधिरभिसंबुद्धा इति ॥ ततो ऽस्यैतदभूत् । तृणसंस्तरेनिषण्णैरिति ॥

अथ खल्वन्तरीक्षगतानि शुद्धावासकायिकदेवशतसहस्राणि बोधिसत्त्वस्य चेतोभिरेव चेतःपरिवितर्कमाज्ञायैवंवाचो भाषन्ते स्म ।

एवमेतत्सत्पुरुषैवमेतत् तृणसंस्तरे सत्पुरुष निषद्य तैः पूर्वकैस्तथागतैरनुत्तरा सम्यक्संबोधिरभिसंबुद्धा इति ॥

अद्राक्षीत्खल्वपि भिक्षवो बोधिसत्त्वो मार्गस्य दक्षिणे पार्श्वे स्वस्तिकं यावसिकं । तृणानि लुनाति स्म । नीलानि मृदुकानि सुकुमाराणि रमणीयानि कुण्डलजातानि प्रदक्षिणावर्तानि मयूरग्रीवसंनिभानि काचिलिन्दिकसुखसंस्पर्शानि सुगन्धीनि वर्णवन्ति मनोरमाणि । दृष्ट्वा च पुनर्बोधिसत्त्वो मार्गादपक्रम्य येन स्वस्तिको यावसिकस्तेनोपसंक्रामदुपसंक्रम्य स्वस्तिकं यावसिकं मधुरया वाचा समालपति स्म । यासौ वागाज्ञापनी विज्ञापनी विस्पष्टा अनेकलोकैकवर्णसुखा वल्गुः श्रवणीया स्निग्धा स्मरणीया चोदनी तोषणी प्रेमणी अकर्कसा अगद्गदा अपरुषा अचपला श्लक्ष्णा मधुरा कर्णसुखा कायचित्तोद्बिल्यकरणी रागदोषमोहकलिकलुषविनोदनी कलविङ्करुतस्वरा कुणालजीवंजीवकाभिनदितघोषा दुन्दुभिसंगीतिरुतरवितनिर्घोषवती अनपहता सत्या अच्छा भूता ब्रह्मस्वररुतरवितनिर्घोषा समुद्रस्वरवेगनिभा शैलसंघट्टनवती देवेन्द्रासुरेन्द्राभिष्टुता गम्भीरा दुरवगाहा नमुचिबलाबलकरणी परप्रवादमथनी सिंहस्वरवेगा हयगजगर्जितघोषा नागनिर्नादनी मेघस्तनिताभिगर्जितस्वरा । दशदिक्सर्वबुद्धक्षेत्रस्फरणी विनेयसत्त्वसंचोदनी अद्रुता अनुपहता अविलम्बिता संहिता युक्ता कालवादिनी समयानतिक्रमणी धर्मशतसहस्रसुग्रथिता सौम्या असक्ता अधिष्ठितप्रतिभाना एकरुतांसर्वरुतरचनी सर्वाभिप्रायज्ञापनी सर्वसुखसंजननी मोक्षपथसंदर्शिका मार्गसंभारवादिनी पर्षदनतिक्रमणी सर्वपर्षत्संतोषणी सर्वबुद्धभा-

षितानुकूला । ईदृश्या वाचा बोधिसत्त्वः स्वस्तिकं यावसिकं गाथाभिरध्यभाषत ।

तृणु देहि मि स्वस्तिक शीघ्रं अद्य ममार्थु तृणैः सुमहान्तः ।
सबलं नमुचिं निहनित्वा बोधिमनुत्तरशान्ति स्पृशिष्ये ॥
यस्य कृते मयि कल्पसहस्रा दानु दमो ऽपि च संयमत्यागो ।
शीलव्रतं च तपश्च सुचीर्णा तस्य मि निष्पदि भेष्यति अद्य ॥
क्षान्तिबलं तथ वीर्यबलं च ध्यानबलं तथ ज्ञानबलं च ।
पुण्यअभिज्ञविमोक्षबलं च तस्य मि निष्पदि भेष्यति अद्य ॥
प्रज्ञबलं च उपायबलं च ऋद्धिम संगतमैत्रिबलं च ।
प्रतिसंविदपरिसत्यबलं च तेष मि निष्पदि भेष्यति अद्य ॥
पुण्यबलं च तवापि अनन्तं यन्मम दास्यसि अद्य तृणानि ।
नह्यपरं तव एतु निमित्तं त्वं पि अनुत्तरु भेष्यसि शास्ता ॥ ० ॥

श्रुत्वा स्वस्तिकु वाच नायके सुरुचिरमधुरां
तुष्टो आत्तमनाश्च हर्षितः प्रमुदितमनसः ।
गृहीत्वा तृणमुष्टि स्पर्शनवती मृदुतरुणसुभां
पुरतः स्थित्वन वाच भाषते प्रमुदितु हृदयः ॥

यदि तावत्तृणकेभि लभ्यते पदवरममृतं
बोधी उत्तमशान्तदुर्दृशा पुरिमजिनपथः ।
तिष्ठतु ताव महागुणोदधे अपरिमितयशा
अहमेव प्रथमे नु बुध्यमी पदवरममृतं ॥ ० ॥

नैषा स्वस्तिक बोधि लभ्यते तृणवरशयनैः
अचरित्वा बहुकल्पदुष्करी व्रततप विविधा ।

प्रज्ञापुण्यउपायउद्गतो यद् भवि मतिमां
तद् पश्चाज्जिन व्याकरोन्ति मुनयो भविष्यसि विरजः ॥
यदि बोधी इय शक्यु स्वस्तिका परजनि ददितुं
पिण्डीकृत्य ददेय प्राणिनां म भवतु विमतिः ।
यद् बोधी मय प्राप्त जानसी विभजमि अमृतं
आगत्वा शृणु धर्मयुक्त त्वं भविष्यसि विरजः ॥ ० ॥
गृहीत्वा तृणमुष्टि नायकः परमसुमृदुकां
सिंहाहंसगतिश्च प्रस्थितः प्रचलित धरणी ।
देवानागगणाः कृताञ्जली प्रमुदितमनसः
अद्या मारबलं निहत्वयं स्पृसिष्यति अमृतं ॥

इति हि भिक्षवो बोधिसत्त्वस्य बोधिवृक्षमुपसंक्रामतो ऽशीतिबोधिवृक्षसहस्राणि देवपुत्रैश्च बोधिसत्त्वैश्च मण्डितान्यभूवन् । इह निषद्य बोधिसत्त्वो बोधिं प्राप्स्यत्यभिसंभोत्स्यत इति ॥ सन्ति तत्र केचिद्बोधिवृक्षाः पुष्पमया योजनशतसहस्रोद्विद्धाः । केचिद्बोधिवृक्षा गन्धमया द्वियोजनशतसहस्रोद्विद्धाः । केचिद्बोधिवृक्षाश्चन्दनमयास्त्रियोजनशतसहस्रोद्विद्धाः । केचिद्बोधिवृक्षा वस्त्रमयाः पञ्चयोजनशतसहस्राण्युच्चैस्त्वेन । केचिद्बोधिवृक्षा रत्नमया दशयोजनशतसहस्राण्युच्चैस्त्वेन । केचिद्बोधिवृक्षाः सर्वरत्नमया दशयोजनकोटिनयुतशतसहस्राण्युच्चैस्त्वेन । (केचिद्बोधिवृक्षा रत्नमयाः कोटिनयुतशतसहस्रमुद्विद्धाः) । सर्वेषु तेषु बोधिवृक्षमूलेषु यथानुरूपाणि सिंहासनानि प्रज्ञप्तान्यभूवन् । नानादिव्यदूष्यसंस्तृतानि । क्वचिद्बोधिवृक्षे पद्मासनं प्रज्ञप्तमभूत् । क्वचिद्गन्धासनं । क्वचिन्नानाविधरत्नासनं ॥ बोधिसत्त्वस्य

ललितव्यूहं नाम समाधिं समापद्यते स्म । समनन्तरसमापन्नस्य च बोधिसत्त्वस्येमं ललितव्यूहं नाम बोधिसत्त्वसमाधिं । अथ तत्क्षणमेव बोधिसत्त्वः सर्वेषु च तेषु बोधिवृक्षमूलेषु सिंहासने संनिषण्णः संदृश्यते स्म । लक्षणानुव्यञ्जनसमलंकृतेन कायेन । एकैकश्च बोधिसत्त्वो देवपुत्रैश्चैवं संजानीते स्म । ममैव सिंहासने बोधिसत्त्वो निषण्णो नान्येषामिति ॥ यथा च ते संजानन्ते स्म । तथास्यैव ललितव्यूहस्य बोधिसत्त्वसमाधेरनुभावेन सर्वनिरयतिर्यग्योनियमलौकिकाः सर्वे देवमनुष्याश्च सर्वे गत्युपपन्नाः सर्वसत्त्वा बोधिसत्त्वं पश्यन्ति स्म । बोधिवृक्षमूले सिंहासने निषण्ण ॥

अथ च पुनर्हीनाधिमुक्तिकानां सत्त्वानां मतिपरितोषणार्थं बोधिसत्त्वस्तृणमुष्टिमादाय येन बोधिवृक्षस्तेनोपसंक्रामदुपसंक्रम्य बोधिवृक्षं सप्तकृत्वः प्रदक्षिणीकृत्य स्वयमेवाभ्यन्तराग्रं बहिर्मूलं समन्तभद्रं तृणसंस्तरं संस्तीर्य सिंहवच्छूरवद्बलवद्दृढवीर्यवत्स्थामवन्नागवदैश्वर्यवत्स्वयंभूवज्ज्ञानिवदनुत्तरवद्विशेषवदभ्युन्नतवद्यशोवत्कीर्तिवद्दानवच्छीलवत्क्षान्तिवद्वीर्यवद्ध्यानवत्प्रज्ञावज्ज्ञानवत्पुण्यवन्निहतमारप्रत्यर्थिकवत्संभारवत्पर्यङ्कमाभुज्य तस्मिंस्तृणसंस्तरे न्यषीदत् । प्राङ्मुख ऋजुकायं प्रणिधाय अभिमुखां स्मृतिमुपस्थाप्य ईदृश च दृढं समादानमकरोत् ।

इहासने शुष्यतु मे शरीर त्वगस्थिमांसं प्रलय च यातु ।
अप्राप्य बोधिं बहुकल्पदुर्लभां नैवासनात्कायमतश्चलिष्यते ॥ इति ॥

॥ इति श्रीललितविस्तरे बोधिमण्डगमनपरिवर्तो नाम एकोनविंशतितमो ऽध्यायः ॥

इति हि भिक्षवो बोधिसत्त्वस्य बोधिमण्डनिषण्णस्य पूर्वस्यां दिशि षट्कामावचरा देवाः स्थिता अभूवन् । मा बोधिसत्त्वस्य कश्चिदन्तरायं कार्षीदित्येवं दक्षिणपश्चिमोत्तरा दिशो देवैः परिगृहीता अभूवन् ॥

इति हि भिक्षवो बोधिसत्त्वो बोधिमण्डनिषण्णस्तस्यां वेलायां बोधिसत्त्वसंचोदनीं नाम रश्मिं प्रामुञ्चत् । यया रश्म्या समन्ताद्दशसु दिक्ष्वप्रमेयासंख्येयानि धर्मधातुपरमाण्याकाशधातुपर्यवसानानि सर्वबुद्धक्षेत्राण्यवभासितान्यभूवन् ॥

अथ खलु पूर्वस्यां दिशि विमलायां लोकधातौ विमलप्रभासस्य तथागतस्य बुद्धक्षेत्राल्ललितव्यूहो नाम बोधिसत्त्वो महासत्त्वस्तया प्रभया संचोदितः सन् गणनासमतिक्रान्तैश्च बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रामदुपसंक्रम्य च तस्यां वेलायां बोधिसत्त्वस्य पूजाकर्मणे तथारूपमृद्ध्यभिसंस्कारमभिसमकरोद् येनार्द्ध्यभिसंस्कारेणाभिसंस्कृतेन दशसु दिक्ष्वाकाशधातुपर्यवसानानि सर्वबुद्धक्षेत्राण्येकं मण्डलमात्रमादर्शयति स्म । शुद्धस्य नीलवैडूर्यस्य । पञ्चगत्युपपन्नानां सर्वसत्त्वानां पुरतो बोधिमण्डे निषण्णं बोधिसत्त्वमुपदर्शयति स्म ॥ ते च सत्त्वाः परस्परमेकाङ्गुलिकाभिर्बोधिसत्त्वमुपदर्शयन्ति स्म । को ऽयमेवंरूपः सत्त्वो ललितः । को ऽयमेवंरूपः सत्त्वो विराजत इति ॥ तेषां च सत्त्वानां पुरतो बोधिसत्त्वो बोधिसत्त्वान्निर्मिमीते स्म ॥ तत्र ते बोधिसत्त्वविग्रहा इमा गाथा अभाषन्त ।

यस्या किंचन रागदोषकलुषा सावासना उद्धृता
यस्या कायप्रभा कृता दशदिशे सर्वे प्रभा निष्प्रभाः ।
यस्या पुण्यसमाधिज्ञाननिचयः कल्पोघसंवर्धितः
सो ऽयं शाक्यमुनिर्महामुनिवरः सर्वा दिशो भ्राजते ॥ इति ॥

अथ खलु भिक्षवो दक्षिणस्या दिशि रत्नव्यूहाया लोकधातो रत्नार्चिषस्तथागतस्य बुद्धक्षेत्राद्रत्नछत्रकूटसदर्शनो नाम बोधिसत्त्वो महासत्त्वस्तया प्रभया संचोदितः सन् गणनासमतिक्रान्तैर्बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रामदुपसंक्रम्य बोधिसत्त्वस्य पूजाकर्मणे एकरत्नछत्रेण तं सर्वावन्तं मण्डलमात्रं संछादयति स्म ॥ तत्र शक्रब्रह्मलोकपालाः परस्परमितद्वोचन् । कस्येदं फलं केनायमेवंरूपो रत्नछत्रव्यूहः संदृश्यत इति ॥ अथ तस्माद्रत्नछत्रादियं गाथा निश्चरति स्म ।

येन छत्रसहस्रकोटिनयुता गन्धान रत्नान च
दत्ता अप्रतिमेषु मैत्रमनसा तिष्ठन्ति के निर्वृते ।
सो एषो वरलक्षणो हितकरो नारायणस्थामवान्
बोधेर्मूलमुपागतो गुणधरस्तस्यैष पूजा कृता ॥ इति ॥

अथ खलु पश्चिमाया दिशश्चम्पकवर्णाया लोकधातोः पुष्पावलिवनराजिकुसुमिताभिज्ञस्य तथागतस्य बुद्धक्षेत्रादिन्द्रजाली नाम बोधिसत्त्वो महासत्त्वस्तया प्रभया सचोदितः सन् गणनासमतिक्रान्तैर्बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपजगाम उपेत्य च बोधिसत्त्वस्य पूजाकर्मणे सर्वावन्तं मण्डलमात्रमेकरत्नजालेन संछादयति स्म ॥ तत्र दशसु दिक्षु देव-

नागयक्षगन्धर्वाः परस्परमेवमाहुः। कस्यायमेवंरूपो प्रभाव्यूह इति ॥ अथ तस्माद्रत्नजालादियं गाथा निश्चरति स्म ।

रत्नाकरो रतनकेतु रतिस्त्रिलोके
रत्नोत्तमो रतनकीर्ति रतः सुधर्मे ।
रत्नानि त्रीणि न च छेत्स्यति वीर्यप्राप्तः
सो बोधि प्राप्स्यति वरामिय तस्य पूजा ॥ इति ॥

अथ खलूत्तरस्यां दिशि सूर्यावर्ताया लोकधातोश्चन्द्रसूर्यजिह्मीकरप्रभस्य तथागतस्य बुद्धक्षेत्राद्व्यूहराजो नाम बोधिसत्त्वो महासत्त्वस्तया प्रभया संचोदितः सन् गणनासमतिक्रान्तैर्बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रामदुपसक्रम्य बोधिसत्त्वस्य पूजाकर्मणे यावन्तो दशसु दिक्षु सर्वलोकधातुषु बुद्धक्षेत्रगुणव्यूहास्तान्सर्वांस्तस्मिन्मण्डलमात्रे संदर्शयति स्म ॥ तत्र केचिद्बोधिसत्त्वा एवमाहुः। कस्येम एवंरूपा व्यूहाः॥ अथ तेभ्यः सर्वव्यूहेभ्य इय गाथा निश्चरति स्म ॥

कायो येन विशोधितः सुबहुशः पुण्येन ज्ञानेन च
येना वाच विशोधिता व्रततपैः सत्येन धर्मेण च ।
चित्तं येन विशोधितं हिरिधृती कारुण्यमैत्र्या तथा
सो एषो द्रुमराजमूलुपगतः शाक्यर्षभः पूज्यते ॥ इति ॥

अथ खलु पूर्वदक्षिणस्या दिशो गुणाकराया लोकधातोर्गुणराजप्रभासस्य तथागतस्य बुद्धक्षेत्राद्गुणमतिर्नाम बोधिसत्त्वो महासत्त्वस्तया प्रभया संचोदितः सन् गणनासमतिक्रान्तैर्बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रा-

मदुपसंक्रम्य बोधिसत्त्वस्य पूजाकर्मणे सर्वगुणव्यूहं कूटागारं तस्मिन्मण्डलमात्रे ऽभिनिर्मिमीते स्म ॥ तस्य ते परिवारा एवमाहुः । कस्यायमेवंरूपः कूटागारव्यूहः ॥ ततश्च कूटागारादियं गाथा निश्चरति स्म ।

यस्य गुणैः सततं गुणगन्धिका
भोन्ति सुरासुरयक्षमहोरगाः ।
सो गुणवान् गुणराजकुलोदितो
बोधिविटपे उपविष्टु गुणोदधिः ॥ इति ॥

अथ खलु दक्षिणपश्चिमाया दिशो रत्नसंभवाया लोकधातो रत्नयष्टेस्तथागतस्य बुद्धक्षेत्राद्रत्नसंभवो नाम बोधिसत्त्वो महासत्त्वस्तया प्रभया संचोदितः सन् गणनासमतिक्रान्तैर्बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसक्रामदुपसंक्रम्य बोधिसत्त्वस्य पूजाकर्मणे अप्रमेयासख्येयान् रत्नव्योमकांस्तस्मिन्मण्डलमात्रे ऽभिनिर्मिमीते स्म ॥ तेभ्यश्च रत्नव्योमकेभ्य इयं गाथा निश्चचार ।

त्यक्ता येन ससागरा वसुमती रत्नान्यथो ऽनेकशः
प्रासादाश्च गवाक्षहर्मिकवरा युग्यानि यानानि च ।
व्योमालंकृत पुष्प दाम रुचिरा उद्यानकूपा सभा
हस्तापादशिरोत्तमाङ्गनयनाः सो बोधिमण्डे स्थितः ॥ इति ॥

अथ खलु पश्चिमोत्तरस्या दिशो मेघवत्या लोकधातोर्मेघराजस्य तथागतस्य बुद्धक्षेत्रान्मेघकूटाभिगर्जितस्वरो नाम बोधिसत्त्वो महासत्त्वस्तया प्रभया संचोदितः सन् गणनासमतिक्रान्तैर्बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रा-

मदुपसंक्रम्य बोधिसत्त्वस्य पूजाकर्मणे कालानुसार्यगुरुमेघमभिनिर्मायोरगसारचन्दनचूर्णवर्षं तस्मिन्मण्डलमात्रे ऽभिप्रवर्षति स्म ॥ तस्माच्च कालानुसारिमेघमण्डलमात्रादियं गाथा निश्चरति स्म ।

धर्मामेघ स्फुरित्व सर्वत्रिभवे विद्याधिमुक्तिप्रभः
सद्धर्म च विराग वर्षि अमृतं निर्वाणसप्रापकं ।
सर्वा रागकिलेशबन्धनलता सो वासना छेत्स्यति
ध्यानर्द्धीबलइन्द्रियैः कुसुमितः श्रद्धाकरं दास्यते ॥ इति ॥

अथ खलूत्तरपूर्वस्या दिशो हेमजालप्रतिच्छन्नाया लोकधातो रत्नछत्राभ्युद्गतावभासस्य तथागतस्य बुद्धक्षेत्राद्धेमजालालंकृतो नाम बोधिसत्त्वो महासत्त्वस्तया प्रभया संचोदितः सन् गणनासमतिक्रान्तैर्बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रामदुपसंक्रम्य बोधिसत्त्वस्य पूजाकर्मणे सर्वेषु तेषु कूटागारेषु रत्नव्योमकेषु द्वात्रिंशल्लक्षणसमलङ्कृतान् बोधिसत्त्वविग्रहानभिनिर्मिमीते स्म ॥ सर्वे च ते बोधिसत्त्वविग्रहा दिव्यमानुष्यकपुष्पदामपरिगृहीता येन बोधिसत्त्वस्तेनाभिनतकायास्तानि पुष्पदामान्यभिप्रलम्बयन्ति स्म ॥ ते इमां गाथामभाषन्त ।

येन बुद्धनयुता स्तवित पूर्व गौरवेण महता जनिय श्रद्धान् ।
ब्रह्मघोषवचनं मधुरवाणिं बोधिमण्डोपगतं शिरसि वन्दे ॥

अथ खल्वधस्ताद्दिशः समन्तविलोकिताया लोकधातोः समन्तदर्शिनस्तथागतस्य बुद्धक्षेत्राद्रत्नगर्भो नाम बोधिसत्त्वो महासत्त्वस्तया प्रभया संचोदितः सन् गणनासमतिक्रान्तैर्बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रामदुपसंक्रम्य

बोधिसत्त्वस्य पूजाकर्मणे तस्मिन्वैडूर्यमयमण्डलमात्रे जाम्बूनदसुवर्णपद्मान्यभ्युद्गतान्युपदर्शयति स्म । तेषां च पद्मानां कर्णिकास्वर्धकायिका नार्यो वर्णरूपसंपन्नाः सर्वालंकारप्रतिमण्डिता उपदर्शयति स्म । वामदक्षिणे पाणिभिर्हर्षकटककेयूरसुवर्णसूत्रमुक्ताहारादिविविधाभरणपरिगृहीताः पुष्पपट्टदामानि चाभिप्रलम्बयन्त्यो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपर्यभिनतकायास्ताश्चेमां गाथामभाषन्त ।

यो ओनमिष्ट सदा गुरूणां बुद्धश्रावकप्रत्येकजिनानां ।
निर्माणसुशील सदोज्जु प्रष्ठो तस्या ओनमथा गुणधरस्य ॥ इति ॥

अथ खलूपरिष्टाद्दिशो वरगगणाया लोकधातोर्गणेन्द्रस्य तथागतस्य बुद्धक्षेत्राद्गगणगञ्जो नाम बोधिसत्त्वो महासत्त्वस्तया प्रभया संचोदितः सन् गणनासमतिक्रान्तैर्बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रामदुपसंक्रम्य बोधिसत्त्वस्य पूजाकर्मणे । गगणतलस्थ एव यावन्तो दशसु दिक्षु सर्वबुद्धक्षेत्रेष्वदृष्टाश्रुतपूर्वाः सन्ति पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरवस्त्रालंकारछत्रध्वजपटाकावैजयन्तिरत्नमणिकनकरजतमुक्ताहारहयगजरथपत्तिवाहनपुष्पवृक्षपत्रपुष्पफलदारकदारिकादेवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगशक्रब्रह्मलोकपालमानुष्यामानुष्याणां सर्वा गगणतलान्महान्तं पुष्पवर्षमभिप्रवर्षन्ति स्म । सर्वसत्त्वप्रीतिसुखसंजननं च न च कस्यचित्सत्त्वस्य भयं चोत्पीडां वा करोति स्म ॥

तत्रेदमुच्यते ।

पेयालमेष दिशतासु जिनौरसा ये
संपूजितुं हितकरं अनुप्राप्तबोधिं ।

तेषां वियूह क्रमविक्रमसुक्रमाणा
ओपम्यमात्र निशृणोथ जिनौरसाना ॥

के चागता नभसि मेघ इव स्तनन्तो
हारा सहस्रनयुतानि प्रलम्बयन्तः ।
के चागता मकुटरत्नविलम्बचूडाः
पौष्पं विमान गगणे उपदर्शयन्तः ॥

के चागता धरणिसिंह इवा नदन्तः
शून्या निमित्तप्रणिधीरवमुञ्चमानाः ।
के चागता यथ वृषा अभिनन्दमानाः
न च दृष्टपूर्व रुचिराणि चिपन्ति पुष्पा ॥

के चागता नभसि सार इवा रवन्तो
वर्णसहस्र स्वकि आत्मनि दर्शयन्तः ।
के चागता शशिरिवा गगणे सुपूर्णाः
सुगतात्मजस्य गुणमालमुदीरयन्तः ॥

के चागता रविरिव प्रभ मुञ्चमानाः
सर्वाणि मारभवनानि करोन्ति जिह्मा ।
के चागता विमलकेतु यथेन्द्रयष्ट्यः
संभारपुण्यनिचितास्तहि बोधिमण्डे ॥

केचित्चिपन्ति गगणान्मणिरत्नजाला
चन्द्रा सुचन्द्र तथ बाल विरोचमाना ।
मान्दारवा सुमन वार्षिकचम्पदामा
संबोधिसत्त्व द्रुमराजस्थिते चिपन्ति ॥

के चागता धरणि कम्पयमान पद्भ्यां
संकम्पिता वसुध प्रीतिकरी जनस्य ।
के चागता ग्रहिय मेरु करेतलेभिः
उत्सृष्टपुष्पपुट संस्थित अन्तरीक्षे ॥
के चागताश्चतुरि सागर गृह्य मूर्ध्ना
उत्सृष्ट सिञ्चि वसुधां वरगन्धतोयैः ।
के चागता रतनयष्टि गृहीत्व चित्रं
संबोधिसत्त्वमुपदर्शय स्थित्व दूरे ॥
के चागता भविय ब्रह्म प्रशान्तरूपाः
शान्ता प्रशान्तमनस स्थित ध्यानध्यायी ।
रोमेभि तेष स्वरु निश्चरते मनोज्ञ
मैत्रीउपेक्षकरुणामुदिताप्रमाणाः ॥
के चागता मरुतशक्र इवा यथैव
देवैः सहस्रनयुतैश्च पुरस्कृतास्ते ।
उपगम्य बोधिवटु गृह्य कृताञ्जलीभिः
शक्राभिलग्नमणिरत्न क्षिपन्ति चित्रा ॥
के चागताश्चतुर्दिशा च यथैव पाला
गन्धर्वराक्षसपरीवृत किन्नरेभिः ।
विद्युत्स्फुटान्त कुसुमानि प्रवर्षमाणाः
गन्धर्वकिन्नररुतेन स्तुवन्ति वीरं ॥
के चागताः कुसुमितां प्रगृहीत्व वृक्षान्
सफलां सपुष्पवरगन्धप्रमुञ्चमानां ।

जातिषु तेषु स्थित बुद्ध शुद्धकायाः
अवलम्बमान प्रतिमण्डि क्षिपन्ति पुष्पा ॥

के चागताः कुसुमिताः पुडिनी गृहीत्वा
पद्मोत्पलैः कुसुमितैस्तथ पुण्डरीकैः ।
द्वात्रिंशलक्षणधराः स्थित पद्मगर्भे
स्वविष्ट अलिप्तमनसं विदु बोधिसत्त्वं ॥

के चागता विपुलकाय तथैव मेरु
स्थित्वान्तरीक्ष स्वकमात्मनमुत्सृजन्ति ।
उत्सृज्यमात्र भविया नवपुष्पदामाः
सच्छादयन्ति त्रिसहस्रि जिनस्य क्षेत्रं ॥

के चागता उभयचक्षुषि कल्पदाहं
संदर्शयन्त विभवं तथ संभवं च ।
तेषां शरीरि बहुधर्मसुखा रणन्ति
तां श्रुत्व सत्त्वनयुता प्रजहन्ति तृष्णां ॥

के चागता रवितकिन्नरतुल्यघोषाः
बिम्बोष्ठचारुवदनाः परिपूर्णवक्त्राः ।
कन्या यथैव सुअलंकृत चित्रहाराः
प्रेक्षन्त यां सुरगणा न लभन्ति तृप्तिं ॥

के चागता वजिरकाय इवा अभेद्याः
हेष्टा पस्कन्धचरणैः प्रतिग्राह्यमाणाः ।
के चागता रविरिवा शशिपूर्णवक्त्राः
ज्योत्स्नाकराः प्रभकरा हतक्लेशदोषाः ॥

के चागता रतनमण्डित रत्नपाणी
संछादयित्व बहुक्षेत्रसहस्रकोट्यः ।
वर्षन्ति रत्नवर पुष्प सुगन्धगन्धा
संतोषणार्थ बहुसत्त्वहितं सुखार्थं ॥
के चागता महति धारणि रत्नकोशाः
रोमेभि सूत्रनयुतानि प्रभाषमाणाः ।
प्रतिभानवन्त मतिवन्त सुबुद्धिवन्तो
मत्तप्रमत्तजनतां प्रतिबोधयन्तः ॥
के चागता ग्रहिय भेरि यथैव मेरु
आकोट्यमानु गगणे सुमनोज्ञघोषां ।
यस्या रवं दशदिशे व्रजि क्षेत्रकोट्या
अद्यावबोद्धुममृतं अनुबुद्धि शास्ता ॥ इति ॥

॥ इति श्रीललितविस्तरे बोधिमण्डव्यूहपरिवर्तो नाम विंशतितमो ऽध्यायः ॥

इति हि भिक्षवो बोधिसत्त्वैस्त्वेम एवंरूपा व्यूहा बोधिसत्त्वस्य पूजाकर्मणे बोधिमण्डे ऽभिसंस्कृता अभूवन्। स्वय च बोधिसत्त्वो यावन्तो दशसु दिक्ष्वतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां सर्वबुद्धक्षेत्रेषु बोधिमण्डालंकारव्यूहास्तान्सर्वांस्तस्मिन्बोधिमण्डे संदर्शयति स्म ॥

अथ खलु भिक्षवो बोधिमण्डनिषण्णस्य बोधिसत्वस्यैतदभवत् । इह खलु कामधातौ मारः पापीयानधिपतिरीश्वरो वशवर्ती नैत-

न्नमप्रतिरूपं भवेयदहं तेनाविदितो ऽनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं । यन्वहं मारस्य पापीयसः सचोदनं कुर्यां । तस्मिन्विजिते सर्वे कामावचरा देवादयो निगृहीता भविष्यन्ति । ततश्च मारपर्षदः पूर्वावरोपितकुशलमूला मारकायिका देवपुत्रास्ते मम सिंहविक्रीडितं दृष्ट्वा ऽनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयिष्यन्ति ॥

अथ खलु भिक्षवो बोधिसत्त्व एवमनुविचिन्त्य तस्यां वेलायां भ्रूविवरान्तरादूर्णाकोशात् सर्वमारमण्डलविध्वंसनकरीं नामैकां रश्मिमुदसृजत् । यया रश्म्या सर्वस्मिंस्त्रिसाहस्रमहासाहस्रे लोकधातौ सर्वमारभवनान्यवभास्य जिह्मीकृतानि संप्रकम्पितानि चाभूवन् । सर्वश्चायं त्रिसाहस्रमहासाहस्रलोकधातुर्महतावभासेन स्फुटो ऽभूत् ॥ तस्याश्च प्रभाया मारः पापीयानिदमेवंरूपं शब्दमश्रौषीत् ।

कल्पोघचीर्णचरितो ह्यभिशुद्धसत्त्वः
शुद्धोदनस्य तनयः प्रविजह्य राज्य ।
सो निर्गतो हितकरो ह्यमृताभिलाषी
बोधिद्रुमं ह्युपगतो ऽद्य कुरु प्रयत्नं ॥

सो तीर्ण आत्मन परानपि तारयेया
मोचेष्यते स च परा स्वयमेव मुक्तः ।
आश्वासप्राप्त स परानपि चाश्वसेया
निर्वापयिष्यति परां परिनिर्वृतश्च ॥

शून्यां करिष्यति अपायत्रयो ऽप्यशेषां
पूर्णां करिष्यति पुरां सुरमानुषाणां ।

ध्यानानभिज्ञ परमं अमृतं सुखं च
दास्यत्यसौ हितकरो अमृतं स्पृशित्वा ॥
शून्यं करिष्यति पुरं तव कृष्णबन्धो
अबलो बली बलविहीनु अपक्षपक्षो ।
न ज्ञास्यसे क्व नु व्रजामि करोमि किं वा
यद् धर्मवर्षमभिवर्षि स्वयं स्वयंभूः ॥ इति ॥

इति हि भिक्षवो मारः पापीयानाभिः संचोदनाभिर्गाथाभिः संचोदितः सन् द्वात्रिंशदाकारं स्वप्नमपश्यत् । कतमद्द्वात्रिंशदाकारं । तद्यथा । तमसाकुलं च स्वभवनमपश्यत् । रजसाकुलं चाकीर्णसर्करकठल्यं च स्वभवनमपश्यत् । भीतत्रस्तोद्विग्नं दिशो दश प्रपलायमानं चात्मानमपश्यत् । विभ्रष्टमकुटमपविद्धकुण्डलं चात्मानमपश्यत् । शुष्कोष्ठगलतालुकं चात्मानमपश्यत् । संतप्तहृदयं चात्मानमपश्यत् । शीर्णपत्रपुष्पफलानि चोद्यानान्यपश्यत् । अपगतजलाः परिशुष्काश्च पुष्करिणीरपश्यत् । हंसक्रौञ्चमयूरकलविङ्ककुणालजीवंजीवकादींश्च पक्षिगणांश्छीर्णपक्षानपश्यत् । भेरीशङ्खमृदङ्गपटहतूणववीणावल्लकीताडसम्पादींश्च वाद्यभाण्डांश्छिन्नविच्छिन्नान्भूमौ निपतितानपश्यत् । प्रियजनपरिवाराश्च मारमुत्सृज्य दीनमुखा एकान्ते गत्वा प्रध्यायन्तमपश्यत् । अग्रमहिषीं च मारिणीं शयनभ्रष्टां धरण्यामुभाभ्यां पाणिभ्यां शीर्षमभिपीडयन्तीमपश्यत् । ये च ते मारपुत्रा वीर्यवत्तमाश्च बलवत्तमाश्च तेजवत्तमाश्च प्रज्ञावत्तमाश्च तं बोधिसत्त्वं बोधिमण्डवराग्रगतं नमस्यन्त एवमपश्यत् । आत्मनीयाश्च दुहित्रीर्हा तात हा तातेति क्रन्दन्त्यो ऽपश्यत् । मलिनचैलगात्रं चात्मानमपश्यत् ।

अवकीर्णपांसुशिरस्कं च पाण्डुदुर्वर्णमोजोऽपहृतं चात्मानमपश्यत् । हर्म्यकूटागारगवाक्षतोरणांश्च रजसावकीर्णान्पततो ऽपश्यत्। ये चास्य ते सेनापतयो यक्षराक्षसकुम्भाण्डगन्धर्वाधिपतयः । तान्सर्वान् हस्ताञ्छिरसि कृत्वा रोदन्तः क्रन्दन्तः पलायमानांश्चापश्यत् । ये च ते कामावचरेषु देवेषु देवाधिपतयः । तद्यथा । धृतराष्ट्रविरूढकविरूपाक्षवैश्रवणशक्रसुयामसंतुषितसुनिर्मितवसवर्तिप्रभृतयः । तान्सर्वाञ्शुश्रूषमाणान् मारः पापीयान् सबोधिसत्त्वाभिमुखानपश्यत् । रणमध्ये चास्यासिर्विकोशो न भवति स्म । विक्रोशन्तमशिवं चात्मानमपश्यत् । स्वेन च परिवारेणात्मानं परित्यक्तमपश्यत । मङ्गलपूर्णकुम्भांश्च पतितान्द्वारे ऽपश्यत् । नारदं च ब्राह्मणममङ्गल्यशब्दं श्रावयन्तमपश्यत् । आनन्दितं च दौवारिकमनानन्दशब्दं श्रावयन्तमपश्यत् । तमसाकुलं च गगणतलमपश्यत् । कामभवननिवासिनीं च श्रियं रुदन्तीमपश्यत् । स्वमैश्वर्यं चानैश्वर्यमपश्यत् । स्वपक्षं चापक्षमपश्यत्। मणिमुक्ताजालानि च तूष्णीभूतानि छिन्नभिन्नपतितान्यपश्यत्। सर्वं च मारभवनं प्रचलितमपश्यत् । वृक्षाञ्छिद्यमानान्निर्यूहांश्च पततो ऽद्राक्षीत् । सर्वं च मारसेनाव्यूहमभिमुखं पात्यमानमपश्यत् ॥

इति हि भिक्षव एवं द्वात्रिंशदाकारं मारः पापीयान् स्वप्नमपश्यत् । स प्रतिबुद्धः सन् भीतस्त्रस्तः संविग्नः सर्वमन्तर्जनं संनिपात्य सबलपार्षद्यसेनापतिदौवारिकसंनिपतितांश्च तान्विदित्वा ऽभिर्गाथाभिरध्यभाषत् ।

दृष्ट्वान तां स सुपिनां नमुची दुखार्त्तो
आमन्त्रयाति सुत ये ऽपि च पारिषद्या ।

सेनापतिं नमुचि सिंहहनुश्च नाम्ना
सर्वेष तेष परिपृच्छति कृष्णबन्धुः ॥
गाथाभि गीतरचितो ऽद्य श्रुतो ऽन्तरीक्षा
शाक्येषु जातु वरलक्षणचित्रिताङ्गः ।
षड्वर्ष दुष्करव्रतानि चरित्व घोरा
बोधिद्रुमं ह्युपगतः प्रकुरुष्व यत्नं ॥
सो चेद्विबुद्ध स्वयमेव हि बोधिसत्त्वो
बहुसत्त्वकोटिनयुतानि विबोधयेत ।
शून्यं करिष्यति स मे भवनं ह्यशेषं
यद् लप्स्यते ह्यमृतु स्पर्शन शीतिभावं ॥
हन्त: व्रजाम सहिता महता बलेन
घातिम तं श्रमणु एकु द्रुमेन्द्रमूले ।
उद्योजयध्व चतुरङ्गिणि शीघ्र सेनां
यदि इच्छथा मम प्रियं मचिरं करोथ ॥
प्रत्येकबुद्धभि च अर्हभि पूर्ण लोको
निर्वायमाणु न बलं मम दुर्बलं स्यात् ।
सो भूयु एकु जिनु भेष्यति धर्मराजो
गणनातिवृत्तु जिनवंशु न जातु छिद्येत् ॥

अथ खलु भिक्षवः सार्थवाहो नाम मारपुत्रः स मारं पापीयांसं गाथाभिरध्यभाषत् ।

किं तात भिन्नवदनो ऽसि विवर्णवक्त्रो
हृदयं समुत्प्लवति वेधति ते ऽङ्गमङ्गं ।

किं ते श्रुतं अथव दृष्टु भणाहि शीघ्रं
ज्ञास्याम तत्त्वतु विचिन्त्य तथा प्रयोगं ॥

निर्माणु मारु अवची शृणु मह्य वत्स
पापं मि दृष्टु सुपिनं परमं सुघोरं ।
भाषिय सर्वमिह पर्षदि अशेषं
संमूर्छिता क्षितितले प्रपतेयु यूयं ॥ ० ॥

सार्थवाह आह ।

रणकालि प्राप्ति यदि नाम जयो न दोषः
तत्रैव यस्तु निहतो भवते स दोषः ।
स्वप्नान्तरे तु यदि ईदृश ते निमित्ता
श्रेयो उपेक्ष म रणे परिभावु गच्छेत् ॥

मारो ऽब्रवीत् ।

व्यवसायबुद्धिपुरुषस्य रणे प्रसिद्धि
अवलम्ब्य धैर्य सुकृतं यदि नो जयं स्यात् ।
का तस्य शक्ति मम दृष्टि सपारिषद्यं
नोत्थातु मह्य चरणे शिरसा प्रपत्तुं ॥

सार्थवाह आह ।

विस्तीर्णमस्ति हि बलं च सुदुर्बलं च
अस्त्येक शूरु बलवांश्च रणंजहश्च ।
खद्योतकैर्यदि भवेत्त्रिसहस्र पूर्णा
एको रवि ग्रसति निष्प्रभतां करोति ॥

अपि च ।

यस्य मानश्च मोहश्च मीमांसा च न विद्यते ।
विलोम यदि विद्वांसो नासौ शक्यश्चिकित्सितुं ॥

इति हि भिक्षवो मारः पापीयान् सार्थवाहस्य वचनमकृत्वा महतीं चतुरङ्गिनीं सेनामुद्योजयति स्म । महाबलरणशौण्डां भीषणां रोमहर्षणीमदृष्टाश्रुतपूर्वां देवमनुष्यैर्बहुविधमुखविकारकोटिनयुतशतसहस्रविकारप्रकारां भुजगशतसहस्रकरचरणकुटिलपरिवेष्टितशरीरां असिधनुशरशक्तितोमरकुठारपट्टिसभुशुण्डिमुसलदण्डपाशगडाचक्रवज्रकणयधरां वरवर्मकवचवर्मितशरीरां विपरीतशिरःकरचरणनयनां ज्वलितशिरोनयनवदना दुःसंस्थितोदरपाणिपादमुग्रतेजोवदनां परमविकृतवदनदर्शनां विकरालविकृतदंष्ट्रां घनबहुविपुलप्रलम्बजिह्वां सुण्डिककिलिञ्जसदृशजिह्वां ज्वलनसदृशकृष्णसर्पविषपूर्णरक्तनेत्रां । केचिद्धि तत्राशीविषान्वमन्ति स्म । केचित्करतलैराशीविषान्परिगृह्य भक्षयन्ति स्म । गरुडा इव सागरादभ्युत्क्षिप्य केचिन्नरमांसरुधिरकरचरणशिरोयकृदन्त्रपुरीषादींश्च भक्षयन्ति स्म । केचिज्ज्वलितपिङ्गलकृष्णनीलरक्तकद्रुकरालविचित्ररूपाः । केचिद्विकृतकूपप्रज्वलितोत्पाटितविकृतकटाक्षाः । केचित्परिवृत्तज्वलितविकृतनयनाः । केचिज्ज्वलितान्पर्वतान्परिगृह्य सलीलमपरेषु पर्वतेषु अभिरूढा आगच्छन्ति स्म । केचित्समूलान्वृक्षानुत्पाट्य बोधिसत्त्वाभिमुखा अभिधावन्ति स्म । केचिदजकर्णसूर्पकर्णहस्तिकर्णलम्बकर्णवराहकर्णाः । केचिदकर्णाः । केचिद्दकोदरिणो दुर्बलकाया अस्थिकङ्कालसंघाटमभिनिर्माय भग्ननासाः कुम्भोदराः करोटपादा उच्छु-

च्छत्वग्मांसरुधिरच्छिन्नकर्णनासाकरचरणनयनोत्तमाङ्गाः । केचिद्रुधिरपिपासया शिरांसि परस्परं निकृन्तन्ति स्म । केचिद्भिन्नविकृतभैरवरूक्षस्वराः फुत्फुत्कारपिचुत्कारफुलुफुलुप्रक्ष्वेडितानि कुर्वन्ति स्म । केचिदाहुः । आहरत हरताभिहनत हनत बन्धत गृह्णत छिन्दत भिन्दत मथयतोत्क्षिपत नाशयतेमं श्रमणं गौतमं सार्धं द्रुमेणेति ब्रुवन्ति स्म । केचिद्भेरुण्डकशृगालसूकरगर्दभगोहस्त्यश्वोष्ट्रखरमहिषशशचमरखड्गसरभनानाप्रतिभयरौद्रविकृतवक्त्राः । केचित्सिंहव्याघ्रऋक्षवराहवानरद्वीपिबिडालछागलोरभ्रसर्पनकुलमत्स्यमकरशिशुमारकूर्मकाकगृधोलूकगरुडादिसदृशात्मभावाः । केचिद्विरूपरूपाः । केचिदेकशीर्षा द्विशीर्षा यावच्छतसहस्रशीर्षाः । केचिदशीर्षाः । केचिदेकभुजा यावच्छतसहस्रभुजाः । केचिदभुजाः । केचिदेकपादकाः । केचिद्यावच्छतसहस्रपादाः । केचिदपादकाः । केचित्कर्णमुखनासिकाक्षिनाभिस्रोतोभिराशीविषान्निश्चारयन्ति स्म । केचिदसिधनुशरशक्तिपट्टिसपरशुचक्रतोमरकणयवज्रभुशुण्डिभिन्दिपालादीनि नानाप्रहरणानि भ्रामयन्तो नृत्यन्तो बोधिसत्त्वं संतर्जयन्ति स्म । केचिन्नराङ्गुलीश्छित्वा मालागुणान्कृत्वा धारयन्ति स्म । केचिच्छिरोभिरस्थिकरकाञ्छीर्षकटाहकांश्च मालागुणमिव कृत्वा धारयन्ति स्म । केचिदाशीविषपरिवेष्टितशरीराः । केचिच्छीर्षकटाहकान्परिगृह्य हस्त्यश्वोष्ट्रगोगर्दभमहिषारूढाः । केचिदधःशिरस ऊर्धपादाः । केचित्सूचीरोमाणः । केचिद्गोगर्दभवराहनकुलछागलोरभ्रबिडालकपिवृकशृगालरोमाण आशीविषान्वमन्तो ऽयोगुडानि निर्गरन्तो धूमकेतूनुत्सृजन्तो ज्वलितताम्रलोहवर्षं प्रवर्षन्तो विद्युद्वर्षान्क्षिपन्तो वज्राशनिं

प्रमुञ्चन्तस्ताम्रामयोवालिकां प्रवर्षन्तः कालमेघान्संजनयन्तो वातवृष्टिमुत्पादयन्तः शरमेघवर्षानुत्सृजन्तः कालरात्रिं दर्शयन्तो रावं संजनयन्तो बोधिसत्त्वमभिधावन्ति स्म । केचित्पाशान्भ्रामयन्तो महापर्वतान्प्रपातयन्तो महासागरान्क्षोभयन्तो लङ्घयन्तो महापर्वतांश्चालयन्तो मेरुं पर्वतराजं विधावन्तः पलायमाना विक्षिपन्तो ऽङ्गप्रत्यङ्गानि भ्रामयन्तः शरीराणि हसन्तो महाहास्यान्युरांसि प्रस्फोटयन्त उरांसि ताडयन्तः केशांसि धुन्वन्तः पीतमुखानि च नीलशरीरा ज्वलितशिरस ऊर्ध्वकेशा इतस्ततो वेगेन परिधावन्तो भेरुण्डाक्षाश्च बोधिसत्त्वं विभीषयन्ति स्म । जीर्णा स्त्रियश्च रुदन्त्यो बोधिसत्त्वमुपसंक्रम्यैवं वदन्ति स्म । अहो पुत्र हा मम पुत्रोत्तिष्ठोत्तिष्ठ शीघ्रं प्रपलायस्व । राक्षसरूपाः पिशाचरूपाः काणखञ्जदुर्बलाश्च प्रेताः क्षुत्क्षमाक्षा ऊर्ध्वबाहवो विकृतास्याः क्रन्दन्तो भयमुपदर्शयन्तस्त्रासं संजनयन्तो बोधिसत्त्वस्य पुरतो ऽभिधावन्ति स्म ॥ तया चैवंरूपया मारसेनया समुदितया समन्तादशीतिर्योजनान्यायामेन विस्तारेण स्फुटमसूत् । यथा चैकस्य मारस्यैवं कोटीशतानां त्रिसाहस्रपर्यापन्नानां माराणां पापीयसां सेनाभिस्तिर्यगूर्ध्वं च परिस्फुटमभूत् ॥

तत्रेदमुच्यते ।

यक्षकुम्भाण्डमहोरगरूपाः राक्षसप्रेतपिशाचकरूपाः ।
यत्तक लोकि विरूपसुरौद्राः सर्वि त निर्मित तत्र शठेभिः ॥
एकशिरा द्विशिरा त्रिशिराश्च यावत्सहस्रशिरा बहुवक्त्राः ।
एकभुजा द्विभुजा त्रिभुजाश्च यावत्सहस्रभुजा बहुभुजाः ।
एकपदा द्विपदा त्रिपदाश्च यावत्सहस्रपदा बहु अन्ये ॥

नीलमुखानि च पीतशरीराः पीतमुखानि च नीलशरीराः ।
अन्यमुखानि च अन्यशरीराः एकमुपागतु किंकरसैन्यं ॥
वातु प्रवायति वर्षति वर्षं विद्युसहस्रशतानि पतन्ति ।
देव गुडायति वृक्ष लुडन्ति बोधिवटस्य न ईर्यति पत्रं ॥
वर्षति देव प्रवर्षति वर्षं ओघ वहन्ति जलाकुलभूमिं ।
ईदृश भीषणिका बहुराशी यत्र अचेतन वृक्ष पतन्ति ॥
दृष्ट्व च तानतिभीषणरूपां सर्वि विसंस्थित रूपविरूपां ।
श्रीगुणलक्षणतेजधरस्या चित्तु न कम्पति मेरु यथैव ॥
मायसमांस्तथ स्वप्नसमांश्च अभ्रनिभां समुदीक्षति धर्मां ।
ईदृश धर्मनयं विमृषन्तो सुस्थितु ध्यायति संस्थितु धर्मे ॥
यस्य भवेत अहंति ममेति भाव समुच्छ्रयि तत्त्वनिविष्टाः ।
सो बिभियादबुद्धेः स्थितु ग्राहे आत्मनि संभ्रमु गच्छ निरीक्ष्य ॥
शाक्यसुतस्तु स्वभावमभावं धर्म प्रतीत्य समुत्थित बुद्ध्वा ।
गगणोपमचित्तु सुयुक्तो न भ्रमते सबलं शठ दृष्ट्वा ॥०॥

इति हि भिक्षवो मारस्य पापीयसः पुत्रसहस्रं । तत्र ये मारपुत्रा बोधिसत्त्वे ऽभिप्रसन्नाः सार्थवाहपूर्वंगमास्ते मारस्य दक्षिणे पार्श्वे स्थिता अभूवन् । ये मारपाक्षिकास्ते वामे पार्श्वे स्थिता अभूवन मारस्य पापीयसः ॥ तत्र मारः पापीयांस्तान्स्वान्पुत्रानामन्त्रयते स्म । कीदृशेन बलेन वयं बोधिसत्त्वं धर्षयिष्यामः ॥ तत्र दक्षिणे पार्श्वे सार्थवाहो नाम मारपुत्रः स पितरं गाथया प्रत्यभाषत् ।

सुप्तं प्रबोधयितुमिच्छति पन्नगेन्द्रं
सुप्तं प्रबोधयितुमिच्छति यो गजेन्द्रं ।

सुप्तं प्रबोधयितुमिच्छति यो मृगेन्द्रं
सुप्तं प्रबोधयितुमिच्छति सो नरेन्द्रं ॥

वामे पार्श्वे दुर्मतिर्नाम मारपुत्रः स एवमाह ।

संप्रेक्षणेन हृदयान्यभिसंस्फुटन्ति
लोकेषु सार महतामपि पादपानां ।
का शक्तिरस्ति मम दृष्टिहतस्य तस्य
संजीवितुं जगति मृत्युहतस्य वास्तु ॥

दक्षिणे मधुरनिर्घोषो नामाह ।

वृक्षेषु सार क इहास्ति ततो ब्रवीषि
दृष्ट्वा भिनन्मि मनुजेष्वथ का अवस्था ।
मेरुं गिरिं यदि भिनत्सि निरीक्षणेन
नैवास्य तुभ्य नयनेभि हतोन्मिषेरन् ॥

अपि च ।

यः सागरं तरितुमिच्छति वै भुजाभ्यां
तोयं च तस्य पिवितुं मनुजेष्वसन्तु ।
शक्यं भवेदिदमतस्तु वदामि दुःखं
यस्तस्य वक्त्रमभितो ऽप्यमलं निरीक्षेत् ॥ ० ॥

वामे शतबाहुर्नामाह ।

ममेह देहेस्मि शतं भुजानां क्षिपामि चैकेन शतं शराणां ।
भिनन्मि कायं श्रमणस्य तात सुखी भव त्वं व्रज मा विलम्ब ॥

दक्षिणे सुबुद्धिराह ।

शतं भुजानां यदि को विशेषो भुजा किमर्थं न भवन्ति रोमाः।
भुजैकमेकेन तथैव शूलाः तैश्चापि कुर्यान्नहि तस्य किंचित्॥

किं कारणं।

मैत्रावतस्तस्य मुनेः शरीरे विषं न शस्त्रं क्रमते न चाग्निः।
क्षिप्तानि शस्त्राणि व्रजन्ति पुष्पतां मैत्री हि लोकोत्तरभावि तस्य॥

अपि च।

दिवि भुवि च जले च ये बलाढ्याः असिपरशुधराश्च गुह्यका नरा वा।
क्षमबलमिमु प्राप्य ते नरेन्द्रं प्रबलबलाल्पबला भवन्ति सर्वे॥

वामे उग्रतेजा आह।

अन्तर्गतोऽहं धक्ष्यामि प्रविश्यास्य तनुं शुभां।
वृक्षं सकोटरं शुष्कं दावाग्निरिव सूक्ष्मतः॥

दक्षिणे सुनेत्र आह।

मेरुं दहेस्त्वं यदि वापि कृत्स्नं प्रविश्य चान्तर्गतु मेदिनीं वा।
दग्धुं न शक्यः स हि वज्रबुद्धिः त्वत्संनिभैर्वालिकगङ्गतुल्यैः॥

अपि च॥

चलेयुर्गिरयः सर्वे क्षयं गच्छेन्महोदधिः।
चन्द्रसूर्यौ पतेद्भूमौ मही च विलयं व्रजेत्॥
लोकस्यार्थे कृतारम्भः प्रतिज्ञाकृतनिश्चयः।
अप्राप्यैष वरां बोधिं नोत्थास्यति महाद्रुमात्॥

वामे दीर्घबाहुर्गर्वित आह।

आलयं चन्द्रसूर्याणां नक्षत्राणां च सर्वशः।
पाणिनाहं प्रमर्दामि तवेह भवने स्थितः॥

चतुर्भ्यः सागरेभ्यश्च जलं गृह्णामि लीलया ।
तं गृह्य श्रमणं तात सागरस्य परं क्षिपे ॥
तिष्ठतां तात सैनेयं मा त्वं शोकार्दितो भव ।
सबोधिवृक्षमुत्पाट्य क्षेप्स्ये पाण्या दिशो दश ॥

दक्षिणे प्रसादप्रतिलब्ध आह ।

सदेवासुरगन्धर्वां ससागरनगां महीं ।
त्वं मर्दितां प्रकुर्याश्च पाणिभ्यां मदगर्वितः ॥
त्वद्विधानां सहस्राणि गङ्गावालिकया समाः ।
रोमं तस्य न चालेयुर्बोधिसत्त्वस्य धीमतः ॥ ० ॥

वामे भयंकर आह ।

भयं हि ते तात भृशं किमर्थं सेनाय मध्ये किमवस्थितस्य ।
सेना न तस्यास्ति कुतः सहायाः कस्माद्भयं ते भवतीह तस्मात् ॥

दक्षिण एकाग्रमतिराह ।

यूथं न लोके ऽस्ति शशीरवीनां न चक्रवर्ती न च केशरीणां ।
न बोधिसत्त्वानिह तात यूथं एकः समर्थो नमुचिं निहन्तुं ॥

वामे ऽवतारप्रेक्ष्याह ।

न शक्तिशूला न गडा न खड्गाः न हस्तिनो ऽश्वा न रथा न पत्तिः ।
तं सोण्डमेकं श्रमणं निषण्णं हन्स्ये ऽद्य मा संभ्रम तात किंचि ॥

दक्षिणे पुण्यालंकार आह ।

नारायणस्य यथ काय अच्छेद्यभेद्यो
क्षान्तिबलैः कवचितो दृढवीर्यखड्गः ।

त्रिविमोक्षवाहनसि प्रज्ञधनुः स तात
पुण्यावलेन स हि जेष्यति मारसेना ॥

वामे ऽनिवर्त्याह ।

न निवर्तते तृणगतः प्रदहन्दवाग्निः
क्षिप्तं शरो न च निवर्तति शिक्षितेन ।
वज्रं नभे निपतितं न निवर्तते च
न स्थानमस्ति मम शाक्यसुतं ह्यजित्वा ॥ ० ॥

दक्षिणे धर्मकाम आह ।

आर्द्रतृणं प्राप्य निवर्तते ऽग्नि गिरिकूटं आसाद्य निवर्तते शरः ।
वज्र महीं प्राप्य अधः प्रयाति अप्राप्य शान्तममृतं न निवर्तते अयं ॥

किं कारणं ।

शक्य तात अन्तरीक्षे लेख्य चित्र चित्रितुं
यवन्ति केचि सर्वसत्त्व एकचित्त स्थापितुं ।
चन्द्रासूर्य मारुतं च शक्य पाश बन्धितुं
न बोधिसत्त्व शक्य तात बोधिमण्डि चालितुं ॥ ० ॥

वामे ऽनुपशान्त आह ।

दृष्टीविषेण महता प्रदहामि मेरुं
भस्मीकरोमि सलिलं च महोदधीनां ।
बोधिं च पश्य श्रमणं च अहं हि तात
दृष्ट्या यथाद्य उभयं हि करोमि भस्म ॥

दक्षिणे सिद्धार्थ आह ।

विषेण पूर्णो यदि वैष सर्वो भवेत्त्रिसाहस्रवरः प्रदीप्तः ।
निरीक्षणादेव गुणाकरस्य सुनिर्विषत्वं विषमभ्युपेयात् ॥
विषाणमुग्रं त्रिभवेह यच्च रागश्च दोषश्च तथैव मोहः ।
ते तस्य कायि च तथैव चित्ते नभे यथा पङ्करजो न सन्ति ॥
* * * तस्मान्निवर्तामह तात सर्वे ॥ ० ॥

वामे रतिलोलो नामाह ।

अङ्ग तूर्यसहस्र प्रवादितैर् अप्सरकोटिसहस्र अलंकृतैः ।
लोभयित्वन नेष्यि पुरोत्तमं कामरतिं हि करोमि वसे तवे ॥

दक्षिणे धर्मरतिराह ।

धर्मरती सद तस्य रतीहा ध्यानरती अमृतार्थरतिश्च ।
सत्त्वप्रमोक्षणमैत्ररतिश्च रागरतिं स रतिं न करोति ॥

वामे वातजवो नामाह ।

जवेनहं चन्द्ररवी ग्रसेयं प्रवायमानं गगणे च वायुं ।
अद्यैव तात श्रमणं गृहीत्वा प्रासस्य मुष्टिं विकिरामि वायुं ॥

दक्षिणेऽचलमतिर्नाम मारपुत्रः स एवमाह ।

यथा तवैषो जववेग उग्रः तद्वद्यदि स्यात्सुरमानुषाणां ।
सर्वे समग्रापि न ते समर्थाः कर्तुं रुजामप्रतिपुद्गलस्य ॥

वामे ब्रह्ममतिराह ।

स्यात्तादृशानामपि वृन्दमुग्र कुर्यान्न किंचित्तव मानघातं ।
प्रागेव सैकः प्रकरोति किं ते वृन्देन साध्यन्ति हि सर्वकार्या ॥

दक्षिणे सिंहमतिराह ।

न सिंहवृन्दं भुवि दृष्टपूर्वं दृष्टीविषाणां अपि नास्ति वृन्दं।
तेजस्विनां सत्यपराक्रमाणां पुरुषर्षभाणां अपि नास्ति वृन्दं॥

वामे सर्वचण्डालो नामाह ।

न ते श्रुता तात गिरोऽभिदीप्ता यथा नदन्ते तनयास्तवेमे ।
वीर्येण वेगेन बलेन युक्ता व्रजाम शीघ्रं श्रमणं निहन्तुं ॥

दक्षिणे सिंहनादी नामाह ।

बहवः शृगाला हि वनान्तरेषु नदन्ति नादान्न सतीह सिंहे ।
ते सिंहनादं तु निशाम्य भीमं त्रस्ता पलायन्ति दिशो दशासु ॥
मारौरसास्तद्वदमी अपण्डिताः अश्रुत्व नादं पुरुषोत्तमस्य ।
नदन्ति तावत्स्वमता ऽतिधृष्टा मनुष्यसिंहे नदिते न सन्ति ॥

वामात्पार्श्वाद्दुश्चिन्तितचिन्त्याह ।

यच्चिन्तयामि तदिहासु भोति कथं न एषो इम वीक्षते च ।
मूढो व एषो अनभिज्ञ किं वा यदुत्थिहित्वा न पलायते लघुं ॥

दक्षिणात्पार्श्वात्सुचिन्तितार्थो नामाह ।

मूढो न वायं अपराक्रमो वा युष्मैव मूढाश्च असंयताश्च ।
न युष्मि जानाथ इमस्य वीर्यं प्रज्ञाबलेनास्य जिता स्थ सर्वे ॥
मारात्मजानां यथ गङ्गवालिका एतेन वीर्येण यथैव यूयं ।
रोमस्य एकं न समर्थ चालितुं प्रागेव यश्चिन्तयि घातयिष्ये ॥
मा यूयमत्र क्षिणुयात मानसं प्रसन्नचित्ता भवथा सगौरवाः ।
निवर्तया मा प्रकरोथ विग्रहं भविष्यते ऽसौ त्रिभवेस्मि राजा ॥

पेयालमेवं ते सर्वे मारपक्षाः परिपूर्णं पुत्रसहस्रं शुक्लपाक्षिकाश्च कृष्णपाक्षिकाश्च मारं पापीयांसं पृथक्पृथग्गाथाभिरध्यभाषन्त ॥

अथ खलु भद्रसेनो नाम मारस्य पापीयसः सेनापतिः स मारं पापीयसं गाथाभिरध्यभाषत ।

ये ते तवानुयात्राः शक्रो (लोक)पालाश्च किन्नरगणाश्च ।
असुरेन्द्रा गरुडेन्द्राः कृताञ्जलिपुटाः प्रणत तस्मै ॥
किं पुनरनानुयात्रा ब्रह्मा आभास्वराश्च सुरपुत्राः ।
देवाश्च शुद्धावासकास्ते ऽपि च सर्वे प्रणत तस्मै ॥
ये च तवेमे पुत्राः प्रज्ञा मेधाविनश्च बलिनश्च ।
ते बोधिसत्त्वहृदयं अनुप्रविष्टा नमस्यन्ति ॥
याप्येष मारसेना अशीति स्फुट योजनानि यक्षाद्यैः ।
भूयिष्ठ सर्वप्रेक्षी प्रसन्नमनसो हि निर्दोषं ॥
दृष्ट्वा यथा सुभीमां रौद्रां विकृतां चमूमिमां घोरां ।
न च विस्मितो न चलितो ध्रुवमस्य जयो भवत्यद्य ॥
स्थित यत्र च सेनेयं तत्र उलूकाः शिवाश्च विरुवन्ति ।
वायसगर्दभरुदितं निवर्तितव्यं क्षमं शीघ्रं ॥
वीक्षस्व बोधिमण्डे पटुक्रौञ्चाहंसकोकिलमयूराः ।
अभिदक्षिणं करोन्ति ध्रुवमस्य जयो भवत्यद्य ॥
यत्र स्थित सेनेयं तत्र मसिः पांशवाश्च वर्षन्ति ।
महिमण्डि कुसुमवृष्टिः कुरुष्व वचनं निवर्तस्व ॥
यत्र स्थित सेनेयं उत्कुलनिकुल शल्यकण्टकाकीर्णं ।
महिमण्ड कनकनिर्मलु निवर्तितव्यं क्षमं प्राज्ञैः ॥
दृष्टा ति सुपिनि पूर्वे भेष्यसि प्रत्यक्षु यदि न गच्छासि ।
भस्मं चमूं च करिष्यति ऋषिभिर्दग्धा कृता यथा भस्म ॥

राजा यतो ऋषिवरो रोषितु आसीत् स ब्रह्मदत्तेन ।
उद्दग्ध दण्डकवनं वर्षैर्बहुभिस्तृण न जाता ॥
ये केचि सर्वलोके ऋषयो (भूयो) व्रतचारिणस्तपोयुक्ताः ।
तेषामयं प्रधानो ह्यहिंसकः सर्वभूतानां ॥
किं ते न श्रुत पूर्वं काये दीप्ता सुलक्षणा यस्य ।
निष्क्रामति चागारात्स भवति बुद्धो जितक्लेशः ॥
इम ईदृशी विभूतिं पूजार्थं निर्मिता जिनसुतेभिः ।
तं नूनमग्रसत्त्वो ह्यग्राहुतिसंप्रतिग्राही ॥
ऊर्णा यथा सुविमला विराजते क्षेत्रकोटिनयुतेषु ।
जिह्मीकृता स्म च तया निसंशयं एष मारबलहन्ता ॥
मूर्ध्नं यथास्य देवैर्द्रष्टु न शक्यं न वै भवाग्रस्थैः ।
नूनं सर्वज्ञत्वं प्राप्स्यत्यन्यैरनुपदिष्टं ॥
यथ मेरुचक्रवाडाश्चन्द्रासूर्यश्च शक्रब्रह्माणः ।
वृक्षाश्च पर्वतवराः प्रणते सर्वे महीमण्डे ॥
निःसंशयु पुण्यबली प्रज्ञाबलवांश्च ज्ञानबलवांश्च ।
क्षान्तिबल(वांश्च) वीर्यबलवानबलंकर्ता नमुचिपक्षा ॥
हस्ती यथामभाण्डं प्रमर्दते क्रोष्टुकान्यथा सिंहः ।
खद्योतं वादित्यो भेत्स्यति सुगतस्तथा सेनां ॥ ० ॥

एतच्छ्रुत्वापरो मारपुत्रो ऽतीव रोषात्संरक्तनयनो ऽब्रवीत् ।

एकस्य वर्णानतिअप्रमेयां प्रभाषसे तस्य त्वमेककस्य ।
एको हि कर्तुं खलु किं समर्थो महाबला पश्यसि किं न भीमा ॥

अथ दक्षिणात्पार्श्वान्मारप्रमर्दको नाम मारपुत्र आह ।

सूर्यस्य लोके न सहायकृत्यं    चन्द्रस्य सिंहस्य न चक्रवर्तिनः ।
बोधौ निषण्णस्य च निश्चितस्य    न बोधिसत्त्वस्य सहायकृत्यं ॥ ० ॥

अथ बोधिसत्त्वो मारस्य दुर्बलीकरणहेतोर्विकसितशतपत्त्रनिभं वदनं संचारयति स्म । यं दृष्ट्वा मारः पापीयान्प्रपलायानो ऽभूत् । मम चमू बोधिसत्त्वस्य वदनं प्रतिष्ठेति मन्यमानः प्रपलानः पुनरेव प्रतिनिवृत्य सपरिवारो विविधानि प्रहरणानि बोधिसत्त्वस्योपर्युत्सृजन्ति स्म । सुमेरुमात्राश्च पर्वतांस्ते च बोधिसत्त्वस्योपरि प्रक्षिप्ताः पुष्पविताने विमानानि संतिष्ठन्ते स्म । ये च दृष्टिविषा आशीविषाः श्वासविषाश्चाग्निज्वालानुत्सृजन्ति स्म । तच्चाग्निमण्डलं बोधिसत्त्वस्य प्रभामण्डलमिव सतिष्ठते स्म ॥

अथ पुनरेव बोधिसत्त्वो दक्षिणेन पाणिना शीर्षं प्रमार्ष्टि स्म । मारश्च पश्यति स्म । बोधिसत्त्वस्य हस्ते खड्ग इति दक्षिणामुखः प्रपलायते स्म । न किंचिदिति पुनरेव प्रतिनिवर्तते स्म । निवृत्य च बोधिसत्त्वस्योपरि नानाविधानि प्रहरणान्युत्सृजन्ति स्म । असिधनुशरशक्तितोमरपरश्वधभुशुण्डिमुसलकणयगडाचक्रवज्रमुद्गरपादपशिलापाशायोगुडानतिभयानकान्ते चोत्क्षिप्तमात्रा नानाविधानि पुष्पदामानि पुष्पवितानानि इव संतिष्ठन्ते स्म । मुक्तसुकुसुमानि च महीमवकिरन्तो माल्यदामानि चावलम्बमानानि बोधिवृक्षं विभूषयन्ति स्म ॥ तांश्च व्यूहान्विभूतिं दृष्ट्वा बोधिसत्त्वस्य मारः पापीयानीर्ष्यामात्सर्योपहतचेता बोधिसत्त्वमब्रवीत् । उत्तिष्ठोत्तिष्ठ हे राजकुमार राज्यं भुङ्क्ष्व तावत्तव पुण्यं कुतस्ते मोक्षप्राप्तिः ॥

अथ बोधिसत्त्वो धीरगम्भीरोदारश्लक्ष्णमधुरया वाचा मारं पापीयसमेतदवोचत् । त्वया तावत्पापीयन्नेकेन निर्गडेन यज्ञेन कामेश्वरत्वं प्राप्त । मया त्वनेकानि यज्ञकोटीनियुतशतसहस्राणि निर्गडानि यष्टानि । करचरणनयनोत्तमाङ्गानि च निकृत्य निकृत्यार्थिभ्यो दत्तानि । गृहधनधान्यशयनवसन चङ्क्रमोद्यानानि चानेकशो याचनकेभ्यो निसृष्टानि सत्त्वानां मोक्षार्थिना ॥

अथ खलु मारः पापीयान् बोधिसत्त्वं गाथया प्रत्यभाषत ॥

यज्ञो मयेष्टस्त्वमिहात्र साक्षी निरर्गडः पूर्वभवे ऽनवद्यः ।
तवेह साक्षी न तु कश्चिदस्ति किंचित्प्रलापेन पराजितस्त्वं ॥

बोधिसत्त्व आह । इयं पापीयन्मम भूतधात्री प्रमाणमिति ॥

अथ बोधिसत्त्वो मारं मारपर्षदं च मैत्रीकरुणापूर्वंगमेन चित्तेन स्फुरित्वा सिंहवदभीतो ऽनुत्त्रस्तो ऽस्तम्भी अदीनो ऽलीनः । असंक्षुभितो ऽलुडितो विगतभयलोमहर्षः । शङ्खध्वजमीनकलशस्वस्तिकाङ्कुशचक्राङ्कमध्येन जालावितानावनद्धेन सुरुचिरताम्रनखालंकृतेन मृदुतरुणसुकुमारेणानन्तकल्पापरिमितकुशलमूलसंभारोपचितेन दक्षिणेन पाणिना सर्वकायं परिमार्ज्य सलीडं महीं पराहनति स्म । तस्यां च वेलायामिमां गाथामभाषत् ।

इयं मही सर्वजगत्प्रतिष्ठा अपक्षपाता सचराचरे समा ।
इयं प्रमाण मम नास्ति मे मृषा साक्षित्वमस्मिं मम संप्रयच्छतु ॥

संस्पृष्टमात्रा चेयं महापृथिवी बोधिसत्त्वेन षड्विकारमकम्पत् प्राकम्पत् संप्राकम्पत् । अरणत् प्रारणत् संप्रारणत् । तद्यथापि नाम मागधिकानां कांसपात्री काष्ठेनाभ्याहता रणत्यनुरण-

त्येवमेवेयं महापृथिवी बोधिसत्त्वेन पाणिताडिता रणत्यनुरणति स्म ॥

अथ खलु यस्यां त्रिसाहस्रमहासाहस्रलोकधातौ स्थावरा नाम महापृथिवीदेवता सा कोटीशतपृथिवीदेवतापरिवारा सर्वां महापृथिवीं संप्रकम्प्य नातिदूरे बोधिसत्त्वस्य पृथिवीतलं भित्वार्धकायाभ्युन्नाम्य सर्वालंकारप्रतिमण्डिता येन बोधिसत्त्वस्तेनावनतकाया प्राञ्जलीकृता बोधिसत्त्वमेतदवोचत् । एवमेतन्महापुरुषैवमेतत् । यथा त्वयाभिहितं वयमत्र प्रत्यक्षाः । अपि तु भगवंस्त्वमेव सदेवकस्य लोकस्य परमसाक्षीभूतः प्रमाणभूतश्चेति । एवमुक्त्वा स्थावरा महापृथिवीदेवता मारं पापीयांसमनेकप्रकारं निर्भर्त्स्य बोधिसत्त्वं चाभ्यभिष्टुत्य विविधं च स्वकं प्रभावं संदर्श्य सपरिवारा तत्रैवान्तरधात् ॥

तं श्रुत्व मेदिनिरवं स शठः ससैन्यः
उत्त्रस्त भिन्नहृदयो प्रपलान सर्वे ।
श्रुत्वेव सिंहनदितं वने हि शृगालाः
काका व लोष्टुपतने सहसा प्रणष्टाः ॥

अथ खलु मारः पापीयान्दुःखितो दुर्मना अनात्तमना अपत्रपमाणरूपो मानाभिभवान्न गच्छति स्म । न निवर्तते स्म । न पलायते स्म । पश्चान्मुखं स्थित्वा उत्तरि सेनामामन्त्रयते स्म । सहिताः समग्रास्तावद्भवन्तस्तिष्ठन्तु मुहूर्तं यावद्वयं ज्ञास्यामो यदि तावच्छक्येतायमनुनयेनोत्थापयितुं । मा खल्वेवंरूपस्य सत्त्वरत्नस्य सहसा विनाशो भूदिति ॥

अथ खलु मारः पापीयान्स्वा दुहितॄरामन्त्रयते स्म। गच्छध्वं यूयं कन्यका बोधिमण्डमुपसंक्रम्य बोधिसत्त्वस्य जिज्ञासनां कुरुत। किं सरागो ऽथ वीतरागः किं मूढो ऽथ प्राज्ञः किमन्धो ऽथ देशज्ञो ऽर्थपरायणः। दीनो वा धीरो वेति॥ इदं खलु वचनं श्रुत्वा ता अप्सरसो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रामन्नुपसंक्रम्य बोधिसत्त्वस्य पुरतः स्थित्वा द्वात्रिंशदाकारां स्त्रीमायामुपदर्शयन्ति स्म। कतमा द्वात्रिंशदाकारा। तद्यथा। काश्चित्त्वार्धवदनं छादयन्ति स्म। काश्चिदुन्नतान्कठिनान्पयोधरान्दर्शयन्ति स्म। काश्चिदर्धविहसितैर्दन्तावलिं दर्शयन्ति स्म। काश्चिद्बाहूनुत्क्षिप्य विजृम्भमाणान्कक्षान्दर्शयन्ति स्म। काश्चिद्बिम्बफलोपमानोष्ठान्दर्शयन्ति स्म। काश्चिदर्धनिमीलितैर्नयनैर्बोधिसत्त्वं निरीक्षन्ते स्म। दृष्ट्वा च शीघ्र निमीलयन्ति स्म। काश्चिदर्धप्रावृतान्पयोधरान्दर्शयन्ति स्म। काश्चिच्छिथिलाम्बरां समेखलां श्रोणीं दर्शयन्ति स्म। काश्चित्समेखलां तनुदुकूलानिवासिता श्रोणीं दर्शयन्ति स्म। काश्चिज्झणझणाशब्दान्नूपुरैः कुर्वन्ति स्म। काश्चिदेकावलीं स्तनान्तरेषूपदर्शयन्ति स्म। काश्चिद्विनग्नानर्धोरूनुपदर्शयन्ति स्म। काश्चिच्छिरःस्कंधेषु च पत्रगुप्ताञ्शुकशारिकांश्चोपविष्टानुपदर्शयन्ति स्म। काश्चिदर्धकटाक्षैर्बोधिसत्त्वं निरीक्षन्ते स्म। काश्चित्सुनिवस्ता अपि दुर्निवस्ताः कुर्वन्ति स्म। काश्चिज्जघनरसनाः कम्पयन्ति स्म। काश्चित्संभ्रान्ता इव सविलासमितस्ततश्चङ्क्रम्यन्ते स्म। काश्चिन्नृत्यन्ति स्म। काश्चिद्गायन्ति स्म। काश्चिद्विलसन्ति स्म। लज्जन्ते च। काश्चित्कदल्य इव वायुविधूता ऊरू कम्पयन्ति स्म। काश्चिद्गम्भीरा

स्तनन्ति स्म । काश्चिदंशुकप्रावृताः सघण्टारसना विहस्यन्त्यश्चङ्क्रम्यन्ते स्म । काश्चिद्वस्त्राण्याभरणानि च पृथिव्यां छोरयन्ति स्म । काश्चिद्गुह्यप्रकाशानि सर्वाभरणान्युपदर्शयन्ति स्म । काश्चिद्गन्धानुलिप्तान्बाहूनुपदर्शयन्ति स्म । काश्चिद्गन्धानुलेपनकुण्डलान्युपदर्शयन्ति स्म । काश्चिदवगुण्ठिकया वदनानि छादयन्ति स्म । क्षणीक्षणा चोपदर्शयन्ति स्म । काश्चित्पूर्वहसितरमितक्रीडिता अन्योन्यं स्मारयन्ति स्म । पुनरपि लज्जिता इव तिष्ठन्ति स्म । काश्चित्कुमारीरूपाण्यप्रसूतिरूपाणि मध्यस्त्रीरूपाणि चोपदर्शयन्ति स्म । काश्चित्कामोपहितेन बोधिसत्त्वं निमन्त्रयन्ते स्म । काश्चिन्मुक्तकुसुमैर्बोधिसत्त्वमवकिरन्ति स्म । पुरतश्च स्थित्वा बोधिसत्त्वस्याशयं मीमांसन्ते स्म । वदनं च निरीक्षन्ते स्म । किमयं रक्तेन्द्रियैः पश्यत्याहो स्विद्दूरीकरोति नयने ईर्यते वा न वेति ताः पश्यन्ति बोधिसत्त्वस्य वदनं शुद्धं विमलं चन्द्रमण्डलमिव राहुविनिर्मुक्तं सूर्यमिव प्रोदयमानं यूपमिव कनकमयं विकसितमिव सहस्रपत्रं हव्यावसिक्तमिवानलं मेरुमिवाचलं चक्रवाडमिवाभ्युद्गतं गुप्तेन्द्रियं नागमिव सुदान्तचित्तं ॥

अथ ता मारदुहितरो भूयस्या मात्रया बोधिसत्त्वस्य संलोभनार्थमिमा गाथा अभाषन्त ।

सुवसन्तके ऋतुवर आगतके
रमिमो प्रिय फुल्लितपादपके ।
तव रूप सुरूप सुशोभनके
वसवर्ति सुलक्षण चित्रितके ॥

वय जात सुजात सुसंस्थितिकाः
सुखकारण देवनराण सुसंतुतिकाः ।
उत्थि लघुं परिभुञ्ज सुयौवनिकं
दुल्लभ बोधि निवर्तय मानसकं ॥

प्रेक्षसि ताव इमा मरुकन्य सुलंकृतिका
तवकारण सज्जित भूषित आगतिका ।
को रूपमिमं समवेक्ष्य न रज्यति रागरतो
अपि जर्जरकाष्ठ व सोषितजीवितको ॥

केश मृदू सुरभीवरगन्धिनिका
मकुटाकुण्डल पत्रविबोधितआननिका ।
सुललाट सुलेपनआननिका
पद्मविशुद्धविशालसुलोचनिका ॥

परिपूरितचन्द्रनिभाननिका
बिम्बसुपक्वनिभाधरिका ।
शङ्खकुण्डहिमशुक्लसुदन्तिनिका
प्रेक्ष कान्त रतिलालसिकां ॥

कठिनपीनपयोधर उद्गतिकां
त्रिवलीकृतमध्य सुसुन्दरिकां ।
जघनाङ्गन चारुसुवित्थरिकां
प्रेक्षसु नाथ सुकामिनिकां ॥

गजभुजसंनिभऊरुणिकां
वलयनिरन्तरबाहनिकां ।

काञ्चीवरश्रोणिसुमण्डितिकां
प्रेक्षहि नाथ इमा तव दासिनिकां ॥
हंसगतीसुविलम्बितगामिनिकां
मञ्जुमनोज्ञसुमन्मथभासिनिकां ।
ईदृशरूपसुभूषिणिकां
दिव्यरतीषु सुपण्डितिकां ॥
गीतकवादितनृत्यसुसिक्षितिकां
रतिकारणजातिसुरूपिणिकां ।
यदि नेच्छसि कामसुलालसिकां
सुष्ठु सुवञ्चितको ऽसि भृशं खलु लोके ॥
निधि दृष्ट यथा हि पलायति को चि नरो
धनसौख्यमजानकु मूढमनो ।
त्वमपि तथैव हि रागमजाननको
य स्वयमागतिको नहि भुञ्जसि कामिनिकां ॥ इति ॥

अथ खलु भिक्षवो बोधिसत्त्वो ऽनिमिषनयनः प्रहसितवदनः स्मितमुखो ऽविकोपितैरिन्द्रियैरनभिसंस्कृतैर्गात्रैरजिह्मो ऽरक्तो ऽदुष्टो ऽमूढः शैलेन्द्रवदप्रकम्प्यो ऽनवलीनो ऽनवदीर्णो ऽसंपीडितः सुसंस्थितया बुद्ध्या स्वाधीनेन ज्ञानमुखेनात्यन्तसुप्रहीणत्वात्क्लेशानां श्लक्ष्णया मधुरया वाचा ब्रह्मातिरेकेण घोषेण करविङ्करुतेन स्वरेण वल्गुना मनोज्ञेन तां मारदुहितॄन्गाथाभिः प्रत्यभाषत् ।

कामा भो बहुदुःखसंचया दुःखमूला
ध्यानर्द्धीतपसं च भ्रंसनी अबुधानां ।

न स्त्रीकामगुणेभि तृप्तितां विदुमाज्ञः
प्रज्ञातृप्तिकरो भविष्यहं अबुधानां ॥

कामां सेवयतो विवर्धते पुन तृष्णा
पीत्वा वै लवणोदकं यथा नरु कश्चि ।
नात्मार्थे न परार्थि भोतिहा प्रतिपन्नो
आत्मार्थे च परार्थ उत्सुको भविताहं ॥

फेनाबुद्बुदतुल्यसंनिभं तव रूपं
मायारङ्गमिवा विथापितं स्वमतेन ।
क्रीडा वै सुपिनेव अध्रुवा अपिनित्या
बालानां सद चित्तमोहना अबुधानां ॥

नेत्रा बुद्बुदतुल्यसादृशा त्वचनद्धाः
कठिनं शोणितपिण्डमुद्गतं यथ गण्डं ।
उदरो मूत्रपुरीषसंचयो असुचोक्षः
कर्मक्लेशसमुत्थितो दुःखयन्त्रः ॥

संमूढा यहि बालबुद्धयो न तु विज्ञाः
सुभतो कल्पयमान आश्रयं वितथेन ।
संसारि बहुकालसंसरी दुःखमूले
अनुभोक्ता निरयेषु वेदना बहुदुःखा ॥

स्रोणि प्रस्रवते विगन्धिका प्रतिकूला
ऊरूजङ्घक्रमाश्च संस्थिता यथ यन्त्रं ।
भूतं युष्मि अहं निरीक्षमी यथ माया
हेतुप्रत्ययतः प्रवर्तथा वितथेन ॥

दृष्ट्वा कामगुणांश्च निर्गुणां गुणहीनां
आर्यज्ञानपथस्य उत्पथां विपथांश्च ।
विषपत्राग्निसमां महोरगां यथ क्रुद्धां
बाला अत्र हि मूर्छिता सुखसंज्ञाः ॥

कामादासु भवीति यो नर प्रमदानां
शीले उत्पथि ध्यायि उत्पथि मतिहीनो ।
ज्ञाने सो हि सुदूरि तिष्ठते रतिलोलो
यो ऽसौ धर्मरतिं जहित्वना रमि कामैः ॥

नो रागेण सही वसाम्यहं न च दोषैः
नो नैर्नित्यअसुभअनात्मभिर्वसि सार्धं ।
आरातीयरतीयसंवसेन च सार्धं
निर्मुक्तं मम चित्तु मारुतो गगणे वा ॥

पूर्णं सर्वजगत्त्वमीदृशैर्यदिह स्यात्
कल्पं ताभि सहा समोसृतो विहरेयं ।
नो वा मह्य खिलं न रज्यना न च मोहो
आकाशःसमतुल्यमानसा जिन भोन्ति ॥ ० ॥

यद्यपीह रुधिरास्थिवर्जिताः देवअप्सर सुनिर्मलाः शुभाः ।
ते ऽपि सर्वि सुमहद्भये स्थिताः नित्यभावरहिता अशाश्वताः ॥

अथ खलु ता मारदुहितरः सुशिक्षिताः स्त्रीमायासु भूयस्या मात्रया रागमददर्पं संजनय्य चेष्टामुपदर्श्य गात्राणि विभूषयित्वा स्त्रीमायामुपदर्श्य बोधिसत्त्वं प्रलोभयन्ति स्म ॥

तत्रेदमुच्यते ।

तृष्णरतीरतिश्च सहिता प्रमदवर मधुरा
मारसमीरिताः सुलडिता त्वरितमुपगताः ।
वायुसमीहिता किसलयास्तरुणतरुलता
नृत्तत लोभयं नृपसुतं द्रुमविटपगतं ॥

एष वसन्तकालसमयः प्रवर ऋतुवरो
नारिनराण हर्षणकरो निहततमरजः ।
कोकिलहंसमोररविश्रा द्विजगणकलिलः
काल उपस्थितो ऽनुभवितुं मदनगुणरतिं ॥

कल्पसहस्रशीलनिरतो व्रततपचरितो
निश्चल शैलराजसदृशस्तरुणरविवपुः ।
मेघनिनादवल्गुवचनो मृगपतिनिनदो
वचनमुवाच सो ऽर्थसहितं जगति हितकरः ॥

कामविवाद वैरकलहा मरणभयकरा
बालजनोपसेवित सदा बुधजनरहिता ।
प्राप्तयु कालु यत्र सुगतैरमृतमधिगतं
अद्य भविष्य मारु जिनिया दशबलु अरहान् ॥

माय निदर्शयन्त्विय वदं शृणु कमलमुखा
राजु भविष्यसेश्वरवरः क्षितिपति बलवान् ।
तूर्यसहस्र संप्रभनिते प्रमदवरगणे
किं मुनिवेषकेन भवतो विरम रति भजा ॥

बोधिसत्त्व आह ।

भेष्यि अहं हि राजु त्रिभवे दिवि भुवि महितो
ईश्वरु धर्मचक्रचरणो दशबलु बलवान् ।
शैक्ष्यअशैक्ष्यपुत्रनयुतैः सततसमितमभिनतो
धर्मरती रमिष्यि विषयैर्न रमि रमति मनः ॥

ता आहुः ।

याव च यौवनं न गलितं प्रथमवयधरो
याव च व्याधि नाक्रमति ते न च जर असिता ।
याव च रूपयौवनधरो वयमपि च सुखी
तावनुभुङ्क्ष्व कामरतयः प्रहसितवदनः

बोधिसत्त्व आह ।

याव च दुर्लभो ऽद्य लभितः क्षणवर अमृतो
याव च वर्जिता क्षणदुःखा असुरसुरपुरे ।
याव जरा च व्याधिमरणं न कुपितरूपवं
तावकु भावयिष्यि सुपथं अभयपुरगमं ॥

ता आहुः ।

देवपुरालये ऽप्सरवृतस्त्रिदशपतिरिवा
यामसुयामसंतुषितके अमरवरस्तुतो ।
मारपुरे च कामरतयः प्रमदवसगतः
क्रीड्यनुभुङ्क्ष्व अस्मभि सहा विपुलरतिकरः ॥

बोधिसत्त्व आह ।

काम तृणासबिन्दुचपला सरद्घनसमा
पन्नगकन्यरोषसदृशा भृसभयकरणा ।
शक्रसुयामदेवतुषिता नमुचिवसगताः
कोच रमेत नार्यभिलषिते व्यसनपरिगते ॥

ता आहुः ।

पुष्पित पश्चिमां तरुवरां तरुणकिसलयां
कोकिलजीवजीवकरुता मधुकरविरुता ।
स्निग्धसुनीलकुञ्चितमृदुं धरणितलरुहे
किं नरसिंह सेवितवने रमसु युवतिभिः ॥

बोधिसत्त्व आह ।

कालवशात्पुष्पित द्रुमे किसलय तरवो
भुक्षपिपासिता मधुकराः कुसुममभिगताः ।
भास्करु सोषयिष्यति यदा धरणितलरुहां
पूर्वजिनोपभुक्तममृतं व्यवसितमिह मे ॥

मारदुहितर आहुः

प्रेक्षहि ताव चन्द्रवदना नवनडिनिनिभा
वाच मनोज्ञ श्लक्ष्ण दशना हिमरजतनिभा ।
ईदृश दुर्लभा सुरपुरे कुत मनुजपुरे
ते त्वय लब्ध ये सुरवरैरभिलषित सदा ॥

बोधिसत्त्व आह ।

पश्यमि कायमेध्यमशुचिं क्रमिकुलभरितं
जर्जरमित्वरं च भिदुरं असुखपरिगतं ।

यत्सचराचरस्य जगतः परमसुखकरं
तत्पदमच्युतं प्रतिलभे बुधजनमहितं ॥ ० ॥

ता चतुषष्टिकामललितानि चमनुभविया
नूपुरमेखला अभिहनी विगडितवसना ।
कामसराहताः समदनाः प्रहसितवदनाः
किं तव आर्यपुत्र विकृतं यदि न भजसे ॥

सर्वभवेषु दोष विदितो ऽवचि विधुतरजा
काम ऽसिशक्तिशूलसदृशाः समधुक्षुरसमाः ।
सर्पशिरोग्निकर्षुसदृशाः सुविदित इह मे
तेनक्ष नारिसंघ त्यजमी गुणहर प्रमदाः ॥ ० ॥

ता बहुभिः प्रकारनयुतैः प्रमदगुणकरैः
लोभयितुं न शेकु सुगतं गजकरभगतिं ।
लज्जिहिरोत्रपात्तु मुनिन प्रपतिषु चरणे
गौरवु तुष्ट प्रेम जनिया स्तविषु हितकरं ॥

निर्मलपद्मगर्भसदृशा सरदिशशिमुखा
सर्पिहुतार्चितेजसदृशा कनकगिरिनिभा ।
सिध्यतु चिन्तिता ति प्रणिधि भवशतचरिता
स्वामुपतीर्य तारय जगद्व्यसनपरिगतं ॥

ता कर्णिकारचम्पकनिभं स्तविय बहुविधं
कृत्व प्रदक्षिणं अतिशयं गिरिरिव अचलं ।
गत्व पितुर्निपत्य शिरसा इदमवचि गिरं
साध्वस नं हि तात प्रतिघं अमरनरगुरोः ॥

पश्यति पद्मपत्रनयनः प्रहसितवदनो
नापि सरक्तु प्रेक्षति जनं नपि च सभृकुटिः ।
मेरु चलेय शुष्य उदधिः शशिरवि प्रपते
नैव स दोषदर्शि त्रिभवे प्रमदवसगमिया ॥ ० ॥

अथ खलु मारः पापीयानिदं वचनं श्रुत्वा भूयस्या मात्रया दुःखितो दुर्मना अनात्तमनाः प्रदुष्टमनास्तां स्वदुहितॄनामन्त्रयते स्म। कथं भो न शक्यते स बोधिमण्डादुत्थापयितुं । मा खलु मूढः। अन्धो ऽथ युष्माकं रूपाकृतिं न पश्यति ॥

अथ खलु ता मारदुहितरः स्वपितरं गाथाभिः प्रत्यभाषन्त ।

श्लक्ष्णा मधुरं च भाषते न च रक्तो
गुरुगुह्यं च निरीक्षते न च दुष्टः ।
ईर्या चर्या च प्रेक्षते न च मूढः
काया सर्व पनेति आशयो सुगभीरः ॥

निःसंशयेन विदिताः पृथु इस्त्रिदोषाः
कामैर्विरक्तमनसो न च रागरक्तः ।
नैवस्त्यसौ दिवि भुवीह नरः सुरो वा
यस्तस्य चित्तचरितं परिजानयेया ॥

या इस्त्रिमाया उपदर्शित तत्र तात
प्रविलीयु तस्य हृदयं भवियः सरागः ।
तं दृष्ट एकमपि कम्पितु नास्य चित्तं
शैलेन्द्रराज इव तिष्ठति सो ऽप्रकम्प्यः ॥

शतपुण्यतेजभरितो गुणतेजपूर्णः
शीलि तपस्मि चरितो बहुकल्पकोट्यः ।
ब्रह्मा च देव शुभतेज विशुद्धसत्त्वा
मूर्ध्ना निपत्य चरणेषु नमन्ति तस्मै ॥

निःसंशयेन विनिहत्य स मारसेनां
पूर्वे जिनानुमत प्राप्स्यति अग्रबोधिं ।
ताता न रोचति हि नो व रणे विवादे
बलवत्सुविग्रहु सुतीक्ष्ण अयं प्रयोगः ॥

प्रेक्षस्व तात गगणे मणिरत्नचूडा
संबोधिसत्त्वनयुता स्थित गौरवेण ।
रत्नाकरा कुसुमदामविचित्रिताङ्गा
संप्रेषिता दशबलैरिह पूजनार्थं ॥

ये चेतना अपि च ये च अचेतना च
वृक्षाश्च शैल गरुडेन्द्रसुरेन्द्रयक्षाः ।
अभ्योनता अभिमुखा गुणपर्वतस्य
श्रेयो भवे प्रतिनिवर्तितुमद्य तात ॥ ० ॥

अपि च ।

न तं तरेद्यस्य न पारमुत्तरे न तं खनेद्यस्य न मूलमुद्धरेत् ।
न कोपयेत्तं क्षमयेत्पुनोपि तं कुर्यान्न तं येन भवेच्च दुर्मनाः ॥

अथ खलु भिक्षवस्तस्मिन्समये ऽष्टौ बोधिवृक्षदेवताः । तद्यथा ।
श्रीः वृद्धिः तपा श्रेयसी विदुः ओजोबला सत्यवादिनी समङ्गिनी च ।

ता एता बोधिसत्त्वं संपूज्य षोडशभिराकारैर्बोधिसत्त्वं श्रिया वर्धयन्ति स्म । अभिष्टुवन्ति स्म ।

उपशोभसे त्वं विशुद्धसत्त्व चन्द्र इव शुक्लपक्षे ।
अभिविरोचसे त्वं विशुद्धबुद्ध सूर्य इव प्रोद्यमानः ॥
प्रफुल्लितस्त्वं विशुद्धसत्त्व पद्ममिव वारिमध्ये ।
नदसि त्वं विशुद्धसत्त्व केशरीव वनराजावनुचारी ॥
विभ्राजसे त्वं अग्रसत्त्व पर्वतराज इव सागरमध्ये ।
अभ्युद्गतस्त्वं विशुद्धसत्त्व चक्रवाड इव पर्वतः ॥
दुरवगाहस्त्वं अग्रसत्त्व जलधर इव रत्नसंपूर्णः ।
विस्तीर्णबुद्धिरसि लोकनाथ गगणमिवापर्यन्तं ॥
सुस्थितबुद्धिरसि विशुद्धसत्त्व धरणितलवत्सर्वसत्त्वोपजीव्यः ।
अकलुषबुद्धिरसि अग्रसत्त्व अनवतप्त इव सरः सदा प्रसन्नः ॥
अनिकेतबुद्धिस्त्वं अग्रसत्त्व मारुत इव सर्वलोकि सदाप्रसक्तः ।
दुरासदस्त्वं अग्रसत्त्व तेजोराज इव सर्वमन्युना प्रहीनः ॥
बलवानसि त्वं अग्रसत्त्व नारायण इव दुर्धर्षः ।
दृढसमादानस्त्वं लोकनाथ अनुत्थाता बोधिमण्डा ॥
अनिवर्त्यस्त्वं अग्रसत्त्व इन्द्रकरोत्सृष्ट इव वज्रः ।
सुलब्धलाभस्त्वं अग्रसत्त्व दशबलसमग्र्योऽचिराद्भविष्यसि ॥ इति ॥

एवं खलु भिक्षवो बोधिवृक्षदेवताः षोडशाकारं बोधिसत्त्वं श्रिया वर्धयन्ति स्म ॥ ॥

तत्र भिक्षवः शुद्धावासकायिका देवपुत्राः षोडशभिराकारैर्मारं पापीयांसं दुर्बलं कुर्वन्ति स्म । कतमैः षोडशभिः । तद्यथा ।

ध्वस्तस्त्वं पापीयं जीर्णक्रोञ्च इव ध्यायसे ।
दुर्बलस्त्वं पापीयं जीर्णगज इव पङ्कमग्नः ॥
एकाक्यसि त्वं पापीयं निर्जित इव शूरप्रतिज्ञः ।
अद्वितीयस्त्वं पापीयं अटव्यां त्यक्त इव रोगार्त्तः ॥
अबलस्त्वं पापीयं भारक्लिष्ट इव बलीवर्द्दः ।
अपविद्धस्त्वं पापीयं वातक्षिप्त इव तरुः ॥
कुपथस्थितस्त्वं पापीयं मार्गभ्रष्ट इव सार्थिकः ।
दीनहीनस्त्वं पापीयं मत्सरिण इव दरिद्रपुरुषः ॥
मुखरस्त्वं पापीयं वायस इव प्रगल्भः ।
मानाभिभूतस्त्वं पापीयं अकृतज्ञ इव दुर्विनीतः ॥
पलायिष्यसे त्वमद्य पापीयं क्रोष्टुक इव सिंहनादेन ।
विधुनिष्यसे त्वमद्य पापीयं वैरम्भवायु विक्षिप्त इव पक्षी ॥
अकालज्ञस्त्वं पापीयं पुण्यपरिक्षीण इव भिक्षुकः ।
विवर्जिष्यसे त्वमद्य पापीयं भिन्नभाजनमिव पांशुप्रतिपूर्णं ॥
निगृहीष्यसे त्वमद्य पापीयं बोधिसत्त्वेन मन्त्रेणेवोरगाः ।
सर्वबलप्रहीणोऽसि पापीयं छिन्नकरचरण इवोरुण्डः ॥

एवं खलु भिक्षवः शुद्धावासकायिका देवपुत्राः षोडशभिराकारैर्मारं पापीयांसं दुर्बलमकार्षुः ॥ ॥

तत्र भिक्षवो बोधिपरिचारिका देवपुत्राः षोडशभिराकारैर्मारं पापीयांसं विक्छन्दयन्ति स्म । कतमैः षोडशभिः । तद्यथा ।

अद्य त्वं पापीयं निर्जेष्यसे
बोधिसत्त्वेन परसैन्य इव शूरेण ।

निगृहीष्यसे त्वमद्य पापीयं
बोधिसत्त्वेन दुर्बलमल्ल इव महामल्लेन ॥
अभिभविष्यसे त्वमद्य पापीयं
बोधिसत्त्वेन खद्योतकमिव सूर्यमण्डलेन ।
विध्वंसयिष्यसे त्वमद्य पापीयं
बोधिसत्त्वेन मुञ्जमुष्टिमिव महामारुतेन ॥
वित्रासिष्यसे त्वमद्य पापीयं
बोधिसत्त्वेन केशरिणेव शृगालः ।
प्रपातिष्यसे त्वमद्य पापीयं
बोधिसत्त्वेन महासाल इव मूलच्छिन्नं ॥
विलोप्स्यसे त्वमद्य पापीयं
बोधिसत्त्वेनामित्रनगरमिव महाराजेन ।
विशोषिष्यसे त्वमद्य पापीयं
बोधिसत्त्वेन गोष्पद्वारीव महातपेन ॥
पलायिष्यसे त्वमद्य पापीयं
बोधिसत्त्वेन वध्यविमुक्त इव धूर्तपुरुषः ।
उद्भ्रामिष्यसे त्वमद्य पापीयं
बोधिसत्त्वेन अग्निदाहेनेव मधुकरवृन्दं ॥
रोषिष्यसे त्वमद्य पापीयं
बोधिसत्त्वेन राष्ट्रभ्रष्ट इव धर्मराजः ।
ध्यायिष्यसे त्वमद्य पापीयं
बोधिसत्त्वेन जीर्णक्रौञ्च इव लूनपक्षः ॥

विभर्त्स्यसे त्वमद्य पापीयं
बोधिसत्त्वेन क्षीणपथ्यादन इवाटवीकान्तारे ।
विलपिष्यसे त्वमद्य पापीयं
बोधिसत्त्वेन भिन्नयानपात्र इव महार्णवे ॥

आम्लायिष्यसे त्वमद्य पापीयं
बोधिसत्त्वेन कल्पदाह इव तृणवनस्पतयः ।
विकिरिष्यसे त्वमद्य पापीयं
बोधिसत्त्वेन महावज्रेणेव गिरिकूटं ॥

एवं खलु भिक्षवो बोधिपरिचारिका देवपुत्राः षोडशाकारैर्मारं विक्रन्दयन्ति स्म । न च मारः पापीयान्विनिवर्तते स्म ॥ ॥

तत्रेदमुच्यते ।

भूतांचोदन श्रुत्व देवतगणा न निवर्तते सो ऽन्तको
उच्छेथा हनथा विलुम्पथ इमां मा दास्यथा जीवितं ।
एषोत्तीर्ण स्वयं ममापि विषयां तारिष्यते चापरां
नान्यं मोक्ष वदेमि किंचि श्रमणे उत्थापयेत्प्रक्रमेत् ॥

बोधिसत्त्व आह ।

मेरू पर्वतराज स्थानतु चले सर्वं जगन्नो भवेत्
सर्वे तारकसंघ भूमि प्रपते सज्योतिषेन्दु नभात् ।
सर्वा सत्त्व करेय एकमतयः शुष्येन्महासागरो
न त्वेव द्रुमराजमूलुपगतश्चाल्येत अस्मद्विधः ॥ ० ॥

मार आह ।

कामेश्वरो ऽस्मि वसिता इह सर्वलोके
देवा सदानवगणा मनुजाश्च तिर्या ।
व्याप्ता मया मम वसेन च यान्ति सर्वे
उत्तिष्ठ मह्य विषयस्थ वचं कुरुष्व ॥

बोधिसत्त्व आह ।

कामेश्वरो ऽसि यदि व्यक्तमनीश्वरो ऽसि
धर्मेश्वरो ऽहमपि पश्यसि तत्त्वतो मां ।
कामेश्वरो ऽसि यदि दुर्गति न प्रयासि
प्राप्स्यामि बोधिमवसस्यतु पश्यतस्ते ॥ ० ॥

मार आह ।

एकात्मकः श्रमण किं प्रकरोषि रण्ये
यं प्रार्थयस्यसुलभः खलु संप्रयोगः ।
भृग्वङ्गिरप्रभृतिभिस्तपसो प्रयत्ना
प्राप्तं न तत्पदवरं मनुजः कुतस्त्वं ॥

बोधिसत्त्व आह ।

अज्ञानपूर्वकु तपो ऋषिभि प्रतप्तो
क्रोधाभिभूतमतिभि दिवलोककामैः ।
नित्यं ननित्यमिति चात्मनि संश्रयद्भिः
मोक्षं च देशगमनस्थितमाश्रयद्भिः ॥
ते तत्त्वतो ऽर्थरहिताः पुरुषं वदन्ति
व्यापिं प्रदेशगत साश्वतमाऊरेके ।

मूर्त न मूर्तमगुणं गुणिनां तथैव
कर्ता न कर्त इति चाप्यपरे ब्रुवन्ति ॥
प्राप्याद्य बोधिविरजामिह चासनस्थः
त्वां जित्व मार विहतं सबलं ससैन्य ।
वर्तेष्यि अस्य जगतः प्रभवोद्भवं च
निर्वाणदुःखसमनं तथ सीतिभावं ॥ ० ॥

मारः क्रुद्धो दुष्टो रुष्टः परुषगिर पुन तु भणति गृहाण सुगौतमं
एषो ह्येको ऽरण्ये न्यस्तो ग्रहिय मम पुरतु व्रजथा लघुं वसु कुर्वथा।
शीघ्रं गत्वा मह्यं गेहे हडिनिगड युगड विकृतं करोथ दुवारिकं
स्वा मं द्रक्ष्ये दुःखेनार्त्तं बहुविविधजवितरवितं मरूण व चेटकं ॥

बोधिसत्त्व आह ।
शक्याकाशे लेख्यं चित्रं बहुविविधविकृतपदशः प्रकर्तु पृथक्पृथक्
शक्यो वायुः पाशैर्बद्धुं दिशविदिश गमनजवितो नरेण सुयत्नतः ।
शक्या कर्तुं चन्द्रादित्यौ तमतिमिर वितिमिरकरौ नभोद्य महीतलं
शक्यो नाहं त्वत्सादृशैर्बहुभिरपि गणन विरुतैर्द्रुमात्प्रतिचालितुं॥०॥

अभ्युत्थिता बलवती नमुचेश्चमू सा
हाकारशङ्खरवभेरिमृदङ्गशब्दैः
हा पुत्र वत्स दयिता किमसि प्रनष्टो
दृष्ट्वा इमां नमुचिसेनमतीव भीमा ॥
जाम्बूनदाकनकचम्पकगर्भगौरा
सुकुमार देवनरसंस्तुत पूजनीय ।

अद्य प्रयास्यसि विनासु महारणेस्मिं
मारस्य एष्यसि वशं असुरस्य वेन्दुः ॥ ० ॥

ब्रह्मस्वरेण करविङ्करुतस्वरेणा
तान्यचराचसगणां सुगतो बभाषि ।
आकासु त्रासयितुमिच्छति यो ह्यविद्वान्
सो ऽस्मद्विधं द्रुमवराद्ग्रहणाय इच्छेत् ॥

भित्वा च यो रजु गणेय महासहस्रे
लोम्ना च सागरजलं च समुद्धरेद्यः ।
वज्रमयां गिरिवरां विकिरेत्क्षणाच्च
सो चापि मां तरुगतं न विहेठयेत ॥ ० ॥

युगमन्तरस्मि स्थित मारु प्रदुष्टचित्तो
निष्कोष पाणिनमसिं प्रगृहीत्व तीक्ष्णं ।
उत्तिष्ठ शीघ्र श्रमणास्ममतेन गच्छ
मा वेणुयष्टि हरितां व छिनद्मि ते ऽद्य ॥

बोधिसत्त्व आह ।

सर्वेयं त्रिसहस्र मेदिनि यदि मारैः प्रपूर्णा भवेत्
सर्वेषां यथ मेरु पर्वतवरः पाणीषु खड्गो भवेत् ।
ते मह्यं न समर्थ लोम चलितुं प्रागेव मां घातितुं
मा दूषी न ति वेल संप्रनदहे स्मारेमि ते ऽनदृढं ॥ ० ॥

विध्यन्ति शैलशिखरां ज्वलिताग्निवर्णां
वृक्षां समूलक क्षिपी तथ ताम्रलोहं ।

उष्ट्राश्च गोगजमुखास्तथ भैरवाक्षा
आशीविषा भुजग दृष्टिविषाश्च घोराः ॥
मेघेव उत्थित चतुर्दिश गर्जमाना
वज्राशनी तथ अयोगुड वर्षमाणाः ।
असिशक्ति तीक्ष्णपरशुं सविषांश्च बाणां
भिन्दन्ति मेदिनितलं प्रमथन्ति वृक्षां ॥
बाहुशतैः सरशतानि क्षिपन्ति केचि
आशीविषां हुतवहांश्च मुखा सृजन्ति ।
मकरादिकांश्च जलजानुदधेर्गृहीत्वा
विध्यन्ति केचि भुजगां गरुडाश्च भूत्वा ॥
केचित्सुमेरुसदृशानयसा गुडानि
तप्ताग्निवर्णशिखरा निक्षिपन्ति रुष्टाः ।
आसाद्य मेदिनितलं क्षुभयन्ति चोर्वीं
हेष्टा पस्कन्ध सलिलस्य विलोडयन्ति ॥
केचित्पतन्ति पुरतस्तथ पृष्ठतो ऽस्य
वामे च दक्षिण पतन्ति अहो ति वत्स ।
विपरीतहस्तचरणा ज्वलितोत्तमाङ्गा
नेत्रेभि निश्चरति विद्युदिव प्रदीप्ता ॥ ० ॥
दृष्ट्वा विकारविकृता नमुचेस्तु सेना
मायाकृतं च यथ प्रेक्षति शुद्धसत्त्वः ।
नैवात्र मारु न बलं न जगन्न चात्मा
उदचन्द्ररूपसदृशो भ्रमति त्रिलोकः ॥

चक्षुर्न दृष्टि पुरुषो नपि चात्मनीयं
श्रोतं च घ्राण तथ जिह्व तथैव कायः ।
अध्यात्मशून्य बहिशून्य प्रतीत्यजाता
धर्मा इमे कारकवेदकवीतिवृत्ताः ॥

सो सत्यवाक्यमकरोत्सद सत्यवादी
येनेह सत्यवचनेनिम शून्यधर्माः ।
ये केचि सौम्यविनये अनुकूलपक्षाः
ते शस्त्र पाणिषु निरीक्षिषु पुष्पदामा ॥

सो दक्षिणे करतले रचिताग्रजाले
ताम्रैर्नखैः सुरुचिरैः सहस्रारचक्रे ।
जाम्बूनदार्चिसदृशैः शुभपुण्यजुष्टे
मूर्धातु याव स्पृशति चरणां सलीडं ॥

बाहुं प्रसार्य यथ विद्युदिवा नभस्था
आभाषते वसुमतीनिय मह्य साक्षी ।
चित्रा मि यज्ञनयुतानपि यष्ट पूर्वे
न मि जातु याचनक बन्ध्य कृता नु दास्ये ॥

आपो मि साक्षि तथ तेज तथैव वायु
ब्रह्मा प्रजापति सजोतिस चन्द्रसूर्याः ।
बुद्धा मि साक्षि दशसु स्थित ये दिशासु
यथ मह्य शीलव्रत उन्नत बोधिअङ्गाः ॥

दानं मि साक्षि तथ शीलु तथैव क्षान्तिः
वीर्यापि साक्षि तथ ध्यान तथैव प्रज्ञा ।

चतुर प्रमाण मम साक्षि तथा अभिज्ञा
अनुपूर्व बोधिचरि सर्व ममेह साक्षी ॥
यावन्ति सत्त्व निखिला दशसु दिशासु
यत्तेषु पुण्य बल शीलु तथैव ज्ञानं ।
यज्ञा निरर्गड य यष्ट सठाःकलीभिः
ते मह्य रोम शतिमां कल नोपयान्ति ॥
सो पाणिना धरणि आहनते सलीडं
रणते इयं वसुमती यथ कंसपात्री ।
मारो निसम्य रवु मेदिनिये निरस्तः
शृणुते वचं हनत गृह्नत कृष्णबन्धुं ॥
प्रस्विन्नगात्रु हततेजु विवर्णवक्त्रो
मारो जराभिहतु आत्मनु संप्रपश्यी ।
उर ताड क्रन्दतु भयार्त्तु अनाथभूतो
भ्रान्तं मनो नमुचिनो गतु चित्तमोहं ॥
हस्त्यश्वयानरथ भूमितले निरस्ताः
धावन्ति राक्षसकुम्भाण्ड पिशाच भीताः ।
संमूढ मार्ग न लभन्ति अलेनत्राणाः
पक्षी दवाग्निपतनेव निरीक्ष्य क्रान्ताः ॥
माता स्वसा पितर पुत्र तथैव भ्राता
पृच्छन्ति तत्र कहि दृष्ट कहिं गता वा ।
अन्योन्य विग्रह करोन्ति तथैव हेठाः
प्राप्ता वयं व्यसन जीवित नावकाशः ॥

सा मारसेन विपुला महती अक्षोभ्या
विभ्रष्ट सर्व विरडीकृत नैव संधिः ।
दिवसानि सप्त अभिजानि परस्परेण
आभासि दृष्ट यदि जीवसि तं खु प्रीताः ॥ ० ॥
सा वृक्षदेवत तदा करुणां हि कृत्वा
वारीघटं ग्रहिय सिञ्चति कृष्णबन्धुं ।
उत्तिष्ठ शीघ्र व्रजहे म पुनो विलम्ब
एवं हि तेष भवते गुरुउद्धराणां ॥

मार आह ।

दुःखं भयं व्यसनशोकविनाशनं च
धिक्कारशब्दमवमानगतं च दैन्यं ।
प्राप्तो ऽस्मि अद्य अपराध्य सुशुद्धसत्त्वे
अश्रुत्व वाक्य मधुरं हितमात्मजानां ॥ ० ॥

देवता आह ।

भयं च दुःखं व्यसनं च दैन्यं धिक्कारशब्दं बधबन्धनं च ।
दोषाननेकां लभते ह्यविद्वान् निरापराधेष्वपि राध्यते यः ॥ ० ॥

देवासुरा गरुडराक्षसकिन्नरेन्द्रा
ब्रह्माथ शक्र परनिर्मित साकनिष्ठाः ।
भाषन्ति तस्य विजयं जय लोकवीर
यत्रेदृशी नमुचिसेन त्वया निरस्ता ॥
हारार्धचन्द्र ध्वजछत्रपताक देन्ती
पुष्पागरू तगरचन्दनचूर्णवर्षां ।

तूर्या पराहनिय वाक्यमुदीरयन्ति
अच्छा द्रुमे तुव च सूर जितारिसिंहा ॥
अत्रैव चासनवरे लभसे ऽद्य बोधिं
आवेणिकां दशबलां प्रतिसंविदं च ।
सर्वं च बुद्धविषयं लभसे ऽद्य शूर
मैत्रा विजित्य विपुलां सठमारपक्षां ॥ ० ॥
इह मारधर्षणकृते च रणे प्रवृत्ते
संबोधिसत्त्वबलविक्रम येभि दृष्टं ।
षट्त्रिंशकोटिनयुता चतुरे च विंशा
येभिर्मनः प्रणिहितं वरबुद्धबोधौ ॥ इति ॥

॥ इति श्रीललितविस्तरे मारधर्षणपरिवर्तो नामैकविंशतितमो ऽध्यायः ॥

इति हि भिक्षवो बोधिसत्त्वो निहतमारप्रत्यर्थिको मर्दितकण्टको रणशिरसि विजितविजयः। उच्छ्रितच्छत्रध्वजपताको विविक्तं कामैर्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसंपद्य विरहति स्म ॥ सवितर्कसविचाराणां व्युपसमाद्ध्यात्मसंप्रसादाच्चेतसः। एकोतिभावादवितर्कमविचारं समाधिजं प्रीतिसुखं द्वितीयं ध्यानमुपसंपद्य विहरति स्म ॥ स प्रीतेर्विरागादुपेक्षको विहरति स्म । स्मृतिमान्संप्रजानन्सुखं कायेन प्रतिसंवेदयते स्म । यत्तदार्या आचक्षते स्म । उपेक्षकः स्मृतिमान्सुखवि-

हारी निष्प्रीतिकं तृतीयं ध्यानमुपसंपद्य विहरति स्म ॥ स सुखस्य च प्रहाणाद्दुःखस्य च प्रहाणात्पूर्वमेव च सौमनस्यदौर्मनस्ययोरस्तंगमाददुःखासुखमुपेक्षास्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसंपद्य विहरति स्म ॥

अथ बोधिसत्त्वस्तथासमाहिते चित्ते परिशुद्धे पर्यवदाते प्रभास्वरे ऽनङ्गणे विगतोपक्लेशे मृदुनि कर्मण्युपस्थिते आनिंज्यप्राप्ते रात्र्यां प्रथमे यामे दिव्यस्य चक्षुषो ज्ञानदर्शनविद्यासाक्षात्क्रियायै चित्तमभिनिर्हरति स्म । अभिनिर्नामयति स्म ॥

अथ बोधिसत्त्वो दिव्येन चक्षुषा परिशुद्धेनातिक्रान्तमानुष्यकेण सत्त्वान्पश्यति स्म । च्यवमानानुपपद्यमानान्सुवर्णान्दुर्वर्णान्सुगतान्दुर्गतान्हीनान्प्रणीतान्यथाकर्मोपगान्सत्त्वान्प्रजानाति स्म ॥ इमे वत भोः सत्त्वाः कायदुश्चरितेन समन्वागताः । वाङ्मनोदुश्चरितेन समन्वागताः । आर्याणामपवादका मिथ्यादृष्टयस्ते मिथ्यादृष्टिकर्मधर्मसमादानहेतोः कायस्य भेदात्परं मरणादपायदुर्गतिविनिपातं नरकेषूपपद्यन्ते ॥ इमे पुनर्भवन्तः सत्त्वाः कायसुचरितेन समन्वागताः । वाङ्मनःसुचरितेन समन्वागताः । आर्याणामनपवादकाः सम्यग्दृष्टयस्ते सम्यग्दृष्टिकर्मधर्मसमादानहेतोः कायस्य भेदात्सुगतौ स्वर्गलोकेषूपपद्यन्ते ॥

इति हि दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुष्यकेण सत्त्वानापश्यति स्म । च्यवमानानुपपद्यमानान्सुवर्णान्दुर्वर्णान्सुगतान्दुर्गतान्हीनान्प्रणीतान्यथाकर्मोपगान् ॥ एवं खलु भिक्षवो बोधिसत्त्वो रात्र्यां प्रथमे यामे विद्यां साक्षात्करोति स्म । तमो निहन्ति स्म । आलोकमुत्पादयति स्म ॥

अथ बोधिसत्त्वस्तथासमाहिते चित्ते परिशुद्धे पर्यवदाते प्रभास्वरे निरङ्गने विगतोपक्लेशे मृदुनि कर्मण्युपस्थिते आनिंज्यप्राप्ते रात्र्यां मध्यमे यामे पूर्वनिवासानुस्मृतिज्ञानदर्शनविद्यासाक्षात्क्रियायै चित्तमभिनिर्हरति स्म । अभिनिर्नामयति स्म ॥ स आत्मनः परसत्त्वानां चानेकविधं पूर्वनिवासाननुस्मरति स्म । तद्यथा । एकामपि जातिं द्वे तिस्रश्चतस्रः पञ्च दश विशतिस्त्रिंशच्चत्वारिंशत्पञ्चाशज्जातिशतं जातिसहस्रं जातिशतसहस्रं । अनेकान्यपि जातिशतसहस्राण्यपि जातिकोटीमपि जातिकोटीशतमपि जातिकोटीसहस्रमपि जातिकोटीनयुतमपि । अनेकान्यपि जातिकोटीसहस्राण्यपि अनेकान्यपि जातिकोटीशतसहस्राण्यपि अनेकान्यपि जातिकोटीनयुतशतसहस्राणि यावत्संवर्तकल्पमपि विवर्तकल्पमपि संवर्तविवर्तकल्पमपि अनेकान्यपि संवर्तविवर्तकल्पान्यनुस्मरति स्म । अमुत्राहमासन्नेवंनामा एवंगोत्र एवंजात्य एवंवर्ण एवमाहार एवमायुष्प्रमाणमेवंचिरस्थितिकः । एवंसुखदुःखप्रतिवेदी सो ऽहं ततश्च्युतः सन्नमुत्रोपपन्नः । ततश्च्युत्वामुत्रोपपन्नः । ततश्च्युत्वेहोपपन्न इति साकारं सोद्देशमनेकविधमात्मनः सर्वसत्त्वानां च पूर्वनिवासमनुस्मरति स्म ॥

अथ बोधिसत्त्वस्तथासमाहितेन चित्तेन परिशुद्धेन पर्यवदातेन प्रभास्वरेण अनङ्गनेन विगतोपक्लेशेन मृदुना कर्मण्यस्थितेनानिंज्यप्राप्तेन रात्र्यां पश्चिमे यामे अरुणोद्घाटनकालसमये नन्दीमुख्यां रात्रौ दुःखसमुदयास्तंगताया आश्रवक्षयज्ञानदर्शनविद्यासाक्षात्क्रियायै चित्तमभिनिर्हरति स्म । अभिनिर्नामयति स्म ॥ तस्यैतदभवत् ।

कृच्छ्रं वतायं लोक आपन्नो यदुत जायते जीर्यते म्रियते च्यवते उपपद्यते। अथ च पुनरस्य केवलस्य महतो दुःखस्कन्धस्य निःशरणं न संप्रजानाति। जराव्याधिमरणादिकस्य अहो वतास्य केवलस्य महतो दुःखस्कन्धस्यान्तःक्रिया न प्रज्ञायते सर्वस्य जराव्याधिमरणादिकस्य ॥

ततो बोधिसत्त्वस्यैतदभूत्। कस्मिन्सति जरामरणं भवति। किं प्रत्ययं च पुनर्जरामरणं ॥ तस्यैतदभूत्। जात्यां सत्यां जरामरणं भवति। जातिप्रत्ययं हि जरामरणं ॥

अथ बोधिसत्त्वस्य पुनरेतदभवत्। कस्मिन्सति जातिर्भवति किं प्रत्यया च पुनर्जातिः ॥ तस्यैतदभवत्। भवे सति जातिर्भवति भवप्रत्यया च पुनर्जातिः ॥

अथ बोधिसत्त्वस्यैतदभवत्। कस्मिन्सति भवो भवति किं प्रत्ययश्च पुनर्भवः ॥ तस्यैतदभवत्। उपादाने सति भवो भवति उपादानप्रत्ययो हि भवः ॥

अथ बोधिसत्त्वस्यैतदभवत्। कस्मिन्सत्युपादानं भवति किं प्रत्ययं च पुनरुपादानं ॥ तस्यैतदभवत्। तृष्णायां सत्यामुपादानं भवति तृष्णाप्रत्ययं ह्युपादानं ॥

अथ बोधिसत्त्वस्य पुनरेतदभवत्। कस्मिन्सति तृष्णा भवति किं प्रत्यया च तृष्णा ॥ तस्यैतदभवत्। वेदनायां सत्यां तृष्णा भवति वेदनाप्रत्यया च तृष्णा ॥

अथ बोधिसत्त्वस्य पुनरेतदभूत्। कस्मिन्सति वेदना भवति किं प्रत्यया पुनर्वेदना ॥ तस्यैतदभूत्। स्पर्शे सति वेदना भवति स्पर्शप्रत्यया हि वेदना ॥

अथ बोधिसत्त्वस्य पुनरेतदभवत् । कस्मिन्सति स्पर्शो भवति किं प्रत्ययश्च पुनः स्पर्शः ॥ तस्यैतदभवत् । षडायतने सति स्पर्शो भवति षडायतनप्रत्ययो हि स्पर्शः ॥

अथ बोधिसत्त्वस्य पुनरेतदभवत् । कस्मिन्सति षडायतनं भवति किं प्रत्ययं च पुनः षडायतनं ॥ तस्यैतदभवत् । नामरूपे सति षडायतनं भवति नामरूपप्रत्ययं हि षडायतनं ॥

अथ बोधिसत्त्वस्य पुनरेतदभवत् । कस्मिन्सति नामरूपं भवति किं प्रत्ययं च पुनर्नामरूपं ॥ तस्यैतदभवत् । विज्ञाने सति नामरूप भवति विज्ञानप्रत्ययं हि नामरूपं ॥

अथ बोधिसत्त्वस्य पुनरेतदभवत् । कस्मिन्सति विज्ञानं भवति किं प्रत्ययं च पुनर्विज्ञानं ॥ तस्यैतदभवत् । संस्कारेषु सत्सु विज्ञानं भवति संस्कारप्रत्ययं च विज्ञानं ॥

अथ बोधिसत्त्वस्य पुनरेतदभवत्। कस्मिन्सति संस्कारा भवन्ति किं प्रत्ययाश्च पुनः संस्काराः । तस्यैतदभवत् । अविद्यायां सत्यां संस्कारा भवन्ति अविद्याप्रत्यया हि संस्काराः ॥

इति हि भिक्षवो बोधिसत्त्वस्यैतदभूत् । अविद्याप्रत्ययाः संस्काराः संस्कारप्रत्ययं विज्ञानं विज्ञानप्रत्ययं नामरूपं नामरूपप्रत्ययं षडायतनं षडायतनप्रत्ययं स्पर्शः स्पर्शप्रत्ययं वेदना वेदनाप्रत्ययं तृष्णा तृष्णाप्रत्ययमुपादानं उपादानप्रत्ययं भवो भवप्रत्यया जातिर्जातिप्रत्यया जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासाः संभवन्ति । एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति । समुदयः समुदय इति ॥

इति हि भिक्षवो बोधिसत्त्वस्य पूर्वमश्रुतेषु धर्मेषु योनिशो मनसिकाराद्बहुलीकाराज्ज्ञानमुदपादि चक्षुरुदपादि विद्योदपादि भूरिरुदपादि मेधोदपादि प्रज्ञोदपादि आलोकः प्रादुर्बभूव ॥ कस्मिन्नसति जरामरणं न भवति कस्य वा निरोधाज्जरामरणनिरोध इति ॥ तस्यैतदभूत् । जात्यामसत्यां जरामरणं न भवति जातिनिरोधाज्जरामरणनिरोधः ॥

अथ बोधिसत्त्वस्य पुनरेतदभवत् । कस्मिन्नसति जातिर्न भवति कस्य वा निरोधाज्जातिनिरोधः ॥ तस्यैतदभवत् । भवे ऽसति जातिर्न भवति भवनिरोधाज्जातिनिरोधः ॥

अथ बोधिसत्त्वस्य पुनरप्येतदभवत् । कस्मिन्नसति विस्तरेण यावत्संस्कारा न भवन्ति । कस्य वा निरोधात्संस्कारनिरोधः ॥ तस्यैतदभवत् । अविद्यायामसत्यां सस्कारा न भवन्त्यविद्यानिरोधात्संस्कारनिरोधः । संस्कारनिरोधाद्विज्ञाननिरोधो यावज्जातिनिरोधाज्जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासा निरुध्यन्ते । एवमस्य केवलस्य महतो दुःखस्कन्धस्य निरोधो भवतीति ॥

इति हि भिक्षवो बोधिसत्त्वस्य पूर्वमश्रुतेषु धर्मेषु योनिशो मनसिकाराद्बहुलीकाराज्ज्ञानमुदपादि चक्षुरुदपादि विद्योदपादि भूरिरुदपादि मेधोदपादि प्रज्ञोदपादि आलोकः प्रादुर्बभूव ॥ सो ऽहं भिक्षवस्तस्मिन्समये । इदं दुःखमिति । यथाभूतमज्ञासिषं ॥ अयमाश्रवसमुदयो ऽयमाश्रवनिरोध इयमाश्रवनिरोधगामिनी प्रतिपदिति । यथाभूतमज्ञासिषं ॥ अयं कामाश्रवो ऽयं भवाश्रवो ऽयमविद्याश्रवो ऽयं दृष्ट्याश्रवः । इहाश्रवा निरवशेषतो निरुध्यन्ते ।

इहाश्रवो निरवशेषमनाभासमस्तंगच्छतीति ॥ इयमविद्या अयमविद्यासमुदयो ऽयमविद्यानिरोध इयमविद्यानिरोधगामिनी प्रतिपदिति । यथाभूतमज्ञासिषं । इहाविद्या अपरिशेषमनाभसमस्तगच्छतीति ॥ पेयालं ॥ अमी संस्कारा अयं संस्कारसमुदयो ऽय संस्कारनिरोध इयं संस्कारनिरोधगामिनी प्रतिपदिति । यथाभूतमज्ञासिषं ॥ इदं विज्ञानमयं विज्ञानसमुदयो ऽयं विज्ञाननिरोध इयं विज्ञाननिरोधगामिनी प्रतिपदिति । यथाभूतमज्ञासिषं ॥

इदं नामरूपमयं नामरूपसमुदयो ऽयं नामरूपनिरोध इयं नामरूपनिरोधगामिनी प्रतिपदिति । यथाभूतमज्ञाशिषं ॥ इदं षडायतनमयं षडायतनसमुदयो ऽयं षडायतननिरोध इय षडायतननिरोधगामिनी प्रतिपदिति । यथाभूतमज्ञासिषं ॥ अयं स्पर्शो ऽयं स्पर्शसमुदयो ऽयं स्पर्शनिरोध इय स्पर्शनिरोधगामिनी प्रतिपदिति । यथाभूतमज्ञाशिषं ॥ इयं वेदना अयं वेदनासमुदयो ऽयं वेदनानिरोध इयं वेदनानिरोधगामिनी प्रतिपदिति । यथाभूतमज्ञासिषं ॥ इयं तृष्णा अयं तृष्णासमुदयो ऽयं तृष्णानिरोध इयं तृष्णानिरोधगामिनी प्रतिपदिति । यथाभूतमज्ञासिषं ॥ इदमुपादानमयमुपादानसमुदयो ऽयमुपादाननिरोध इयमुपादाननिरोधगामिनी प्रतिपदिति । यथाभूतमज्ञासिषं ॥ अयं भवो ऽयं भवसमुदयो ऽयं भवनिरोध इयं भवनिरोधगामिनी प्रतिपदिति । यथाभूतमज्ञासिषं ॥ इयं जातिरयं जातिसमुदयो ऽयं जातिनिरोध इयं जातिनिरोधगामिनी प्रतिपदिति । यथाभूतमज्ञासिषं ॥

इयं जरा अयं जरासमुदयो ऽयं जरानिरोध इयं जरानिरोधगा-

मिनी प्रतिपदिति । यथाभूतमज्ञासिष ॥ इदं मरणमयं मरणसमुदयो ऽयं मरणनिरोध इयं मरणनिरोधगामिनी प्रतिपदिति । यथाभूतमज्ञासिषं ॥ इमे शोकपरिदेवदुःखदौर्मनस्योपायासा एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति यावन्निरोधो भवतीति । यथाभूतमज्ञासिषं ॥ इदं दुःखमयं दुःखसमुदयो ऽयं दुःखनिरोध इयं दुःखनिरोधगामिनी प्रतिपदिति । यथाभूतमज्ञासिषं ॥ ॥

एवं खलु भिक्षवो बोधिसत्त्वेन रात्र्यां पश्चिमे यामे ऽरुणोद्घाटनकालसमये नन्दीमुख्यां रात्रौ यत्किंचित्पुरुषेण सत्पुरुषेणातिपुरुषेण महापुरुषेण पुरुषर्षभेण पुरुषनागेन पुरुषसिंहेन पुरुषपुंगवेन पुरुषशूरेण पुरुषधीरेण पुरुषजानेन पुरुषपद्मेन पुरुषपुण्डरीकेण पुरुषधौरेयेणानुत्तरेण पुरुषदम्यसारथिना एवंभूतेनार्येण ज्ञानेन ज्ञातव्यं बोद्धव्यं प्राप्तव्यं द्रष्टव्यं साक्षात्कर्तव्यं सर्वं तदेकचित्तेक्षणसमायुक्तया प्रज्ञयानुत्तरां सम्यक्संबोधिमभिसंबुध्य त्रैविद्याधिगता ॥

ततो भिक्षवो देवा आहुः । अवकिरत मार्षाः पुष्पाण्यभिसंबुद्धो भगवान् ॥ ये तत्र देवपुत्राः पूर्वबुद्धदर्शिनस्तस्मिन्संनिपतिता आसंस्ते ऽवोचन् । मा स्म तावन्मार्षाः पुष्पाण्यवकिरत यावत्तावद्भगवान्निमित्तं प्रादुःकरोति । पूर्वका अपि सम्यक्संबुद्धा निमित्तमकार्षुः । निर्मितामभिनिर्मिखन्ति स्म ॥

अथ खलु भिक्षवस्तथागतस्तान्देवपुत्रान्विमतिप्राप्ताञ्ज्ञात्वा सप्ततालमात्रं विहायसमभ्युद्गम्य तत्रस्थ इदमुदानमुदानयति स्म ।

छिन्न वर्त्मोपसान्त रजाः शुष्का आश्रवा न पुन श्रवन्ति ।
छिन्ने वर्त्मनि वर्तत दुःखस्यैषो ऽन्त उच्यते ॥ इति ॥

ततस्ते देवपुत्रा दिव्यैः कुसुमैस्तथागतमभ्यवकिरन्ति स्म । ततो जानुमात्रं दिव्यानां पुष्पाणां संस्तरो ऽभूत् ॥ ॥

इति हि भिक्षवस्तथागते ऽभिसंबुद्धे विगतं तमोऽन्धकारं विशोधिता तृष्णा विवर्तिता दृष्टिर्विक्षोभिता क्लेशा विशारिता शल्या मुक्तो ग्रन्थिः प्रपातितो मानध्वज उच्छ्रेपितो धर्मध्वज उद्घाटिता अनुशया ज्ञाता धर्मतथता अवबुद्धा भूतकोटिः परिज्ञातो धर्मधातुर्व्यवस्थापितः सत्त्वधातुः संवर्णितः सम्यक्त्वनियतो राशिर्विवर्णितो मिथ्यात्वनियतो राशिः परिगृहीतो ऽनियतराशिर्व्यवस्थापितानि सत्त्वेन्द्रियाणि परिज्ञाता सत्त्वचरिता अवबुद्धा सत्त्वव्याधिः सत्त्वसमुत्थानसिद्धो ऽमृतभैषजप्रयोगः उत्पन्नो वैद्यराजः प्रमोचकः सर्वदुःखेभ्यः प्रतिष्ठापको निर्वाणसुखे निषण्णस्तथागतगर्भे तथागतमहाधर्मराजासने सर्व आबद्धो विमुक्तिपट्टः प्रविष्टः सर्वज्ञतानगरं समवसृतं सर्वबुद्धैरसंभिन्नो धर्मधातुप्रसरानुबोधिः । प्रथमे सप्ताहे भिक्षवस्तथागतस्तस्मिन्नेव बोधिमण्डे निषण्णो ऽस्थात् । इह मया ऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धः । मया ऽनवराग्रस्य जातिजरामरणदुःखस्यान्तः कृत इति ॥

समनन्तरप्राप्ते खलु पुनर्भिक्षवो बोधिसत्त्वेन सर्वज्ञत्वे । अथ तत्क्षणमेव दशसु दिक्षु सर्वलोकधातुषु सर्वसत्त्वास्तत्क्षणं तल्लवं तन्मुहूर्तं परमसुखसमर्पिता अभूवन् । सर्वलोकधातवश्च महतावभासेनावभास्वन्तः । या अपि ता लोकान्तरिका अघा अघस्फुटा

अन्धकारा इति पूर्ववत् । षड्विकारं च दशसु दिक्षु सर्वलोकधातवो ऽकम्पत् प्राकम्पत् सम्प्राकम्पत् । अवेधत् प्रावेधत् संप्रावेधत् । अचलत प्राचलत् सम्प्राचलत् । अक्षुभ्यत् प्राक्षुभ्यत् संप्राक्षुभ्यत् । अरणत् प्रारणत् संप्रारणत् । अगर्जत् प्रागर्जत् संप्रागर्जत् ॥ सर्वबुद्धाश्च तथागतायाभिसंबुद्धाय साधुकारं ददन्ति स्म । धर्माच्छादाश्च संप्रेषयन्ति स्म । यैर्धर्माच्छादैरयं त्रिसाहस्रमहासाहस्रलोकधातुरनेकरत्नच्छत्रसंछन्नो ऽभूत् । तेभ्यश्च रत्नच्छत्रेभ्य एवंरूपा रश्मिजाला निश्चरन्ति स्म । यैर्दशसु दिक्षु अप्रमेयासङ्ख्येया लोकधातवो ऽवभास्यन्ते । दशसु दिक्षु बोधिसत्त्वाश्च देवपुत्राश्चानन्दशब्दं निश्चारयामासुः । उत्पन्नः सत्त्वपण्डितः पद्मो ज्ञानसरसि सभूतो ऽनुपलिप्तो लोकधर्मैः । समन्ततो महाकरुणामेघं स्फुरित्वा धर्मधातुभवन वर्षयिष्यति । धर्मवर्षविनये जनभैषजाङ्कुरप्ररोहणं सर्वकुशलमूलवीजानां विवर्धनं श्रद्धाङ्कुराणां दाता विमुक्तिफलाना ॥

तत्रेदमुच्यते ।

मारं विजित्य सबलं स हि पुरुषसिंहो
ध्यानामुखं अभिमुखं अभितो ऽपि शास्ता ।
त्रैविद्यता दशबलेन यदा हि प्राप्ता
संकम्पिता दशदिशो बहुक्षेत्रकोट्यः ॥

ये बोधिसत्त्व पुरि आगत धर्मकामा
चरणौ निपत्य इति भाषिषु मासि क्लान्तो ।
प्रत्यक्ष अस्मि चमु यादृशिका सुभीमा
सा प्रज्ञपुण्यबलवीर्यबलेन भग्ना ॥

बुद्धैश्च क्षेत्रनयुतैः प्रहितानि छत्रा
साधो महापुरुष धर्षित मारसेना ।
प्राप्तं त्वया पदवरं अमृतं विशोकं
सद्धर्मवृष्टि त्रिभवे अभिवर्ष शीघ्रं ॥

बाहुं प्रसार्य दशदिशु च सत्त्वसारा
आभासयिंसु कलविङ्करुताय वाचा ।
बोधिर्यथामनुगता भवता विशुद्धा
तुल्यः समो ऽसि यथ सर्पिणि सर्पिमण्डैः ॥ ० ॥

अथ खलु भिक्षवः कामावचरा अप्सरसो बोधिमण्डनिषण्णं तथागतं प्राप्ताभिज्ञं परिपूर्णसंकल्पं विजितसंग्रामं निर्जितमारप्रत्यर्थिकमुच्छ्रितछत्रध्वजपताकं शूरं जयोद्गतं पुरुषं महापुरुषं वैद्योत्तमं महाशल्यहर्तारं सिंहं विगतभयलोमहर्षं नागं सुदान्तचित्तं निर्मलं त्रिमलविप्रहीनं वैद्यकं त्रैविद्यतामनुप्राप्तं पारगं चतुरोघोत्तीर्णं क्षत्रियमेकरत्नछत्रधारिणं त्रैलोक्यब्राह्मणं बाहितपापकर्माणं भिक्षुं भिन्नाविद्याण्डकोषं श्रमणं सर्वसङ्गसमतिक्रान्तं श्रोत्रियं निःसृतक्लेशं शूरमप्रपातितध्वजं बलीयांसं दशबलधारिणं रत्नाकरमिव सर्वधर्मरत्नसंपूर्णं विदित्वा बोधिमण्डाभिमुखास्तथागतमाभिर्गाथाभिरभ्यष्टाविषुः ।

एष द्रुमराजमूले अभिजित्य मारसैन्यं
स्थितु मेरुवदप्रकम्प्यो निर्भीरप्रलापी ।
अनेकबहुकल्पकोट्यो दानदमसंयमेन
समुदानयं प्रबोधि तेनैष सोभते ऽद्य ॥

अनेन बहुकल्पकोट्यः शीलव्रततातपोभि
जिह्मिकृत शक्रब्रह्मा बोधिवर एषता हि ।
अनेन बहुकल्पकोट्यः क्षान्तिबलवर्मितेन
अधिवासिता दुःखानी तेन प्रभ स्वर्णवर्णा ॥

अनेन बहुकल्पकोट्यो वीर्यबलविक्रमेण
पराङ्मुखा कृतास्या तेन मार जित सेना ।
अनेन बहुकल्पकोट्यो ध्याना अभिज्ञज्ञानैः
संपूजिता मुनीन्द्रास्तेनैव पूजितो ऽद्य ॥

अनेन बहुकल्पकोट्यः प्रज्ञा श्रुत संचयेन
प्रगृहीत सत्त्वकोट्यस्तेन लघु बोधि प्राप्ता ।
अनेन जितु स्कन्धमारस्तथ मृत्यु क्लेशमारः
अनेन जितु देवपुत्रमारस्तेनास्य नास्ति शोकः ॥ ० ॥

एषो हि देवदेवो देवैरपि पूजनीयः पूजारहस्त्रिलोकि
पुण्यार्थिकान क्षेत्रं अमृतफलस्य दाता ।
एषु वरदक्षिणीयो उत्पातु दक्षिणाहि
नास्त्युत्तरस्य नासो या च वरबोधि लब्धा ॥

ऊर्णा विराजते ऽस्य स्फुरती बहुक्षेत्रकोट्यो
जिह्मिकृत चन्द्रसूर्या अन्धकारालोकप्राप्ता ।
एव हि सुरूपरूपो वररूप साधुरूपो
वरलक्षणो हितैषी त्रैलोक्यपूजनीयः ॥

एष सुविशुद्धनेत्रो बहु प्रेक्षते स्वयंभूः
क्षेत्रा च सत्त्वकाया चित्तानि चेतना च ।

एष सुविशुद्धश्रोत्रः शृणुते अनन्तशब्दां
दिव्यांश्च मानुषांश्च जिनशब्द धर्मशब्दां ॥
एष प्रभूतजिह्वः कलविङ्कमञ्जुघोषः
श्रोष्याम अस्य धर्म अमृतं प्रशान्तगामिं ।
दृष्ट्वा च मारसैन्यं न क्षुभ्यते मनो ऽस्य
पुन दृष्ट्व देवसंघां न च हर्षते सुमेधा ॥
शस्त्रैर्न चापि बाणैर्जित एन मारसेना
सत्यव्रततपोभि जितु एन दुष्टमल्लः ।
चलितो न चासना न च कायु वेधिनो ऽस्य
न च खेदु नापि दोषस्तदनन्तरे अभूवन् ॥
लाभा सुलब्ध तेषां मरुणां नराण चैव
ये तुभ्य धर्म श्रुत्वा प्रतिपत्तिमेष्यती हि ।
यत्पुण्य त्वां स्तवित्वा जिनपुण्य तेजरासे
सर्वे भवेम क्षिप्रं यथ त्वं मनुष्यचन्द्रः ॥ ० ॥

बुद्धित्व बोधि पुरुषर्षभ नायकेन
संक्रम्य क्षत्रनयुतानि विजित्य मारं ।
ब्रह्मस्वरेण कलविङ्करुतस्वरेण
प्रथमेन गाथा इमि भाषित नायकेन ॥
पुण्यविपाकु सुख सर्वदुःखापनेती
अभिप्रायु सिध्यति च पुण्यवतो नरस्य ।
क्षिप्रं च बोधि स्पृशते विनिहत्य मारं
शान्तापथो गच्छति च निर्वृतिशीतिभावं ॥

तस्मात्क पुण्यकरणे न भवेत तृप्तः
शृण्वञ्च धर्ममृतं भवि को वितृप्तः ।
विजने वने च विहरं भवि को वितृप्तः
कः सत्त्व अर्थकरणे न भवेद्धि तृप्तः ॥

पाणिं प्रसार्य समुवाच च बोधिसत्त्वां
पूजां कृता व्रजत चैव स्वकस्वकानि ।
सर्वे ऽभिवन्द्य चरणौ च तथागतस्य
नानावियूहगत चैव स्वकस्वकानि ॥

दृष्ट्वा च तां नमुचिनां महतीमवस्थां
विक्रीडितां च सुगतस्य तथा सलीडं ।
बोधाय चित्तमतुलं प्रणिधाय सत्त्वां
मारं विजित्य सबलं अमृतं स्पृसेम ॥ ० ॥

अभिसंबुद्धस्य भिक्षवस्तथागतस्य बोधिवृक्षमूले सिंहासनोपविष्टस्य तस्मिन्क्षणे ऽप्रमेयानि बुद्धविक्रीडितान्यभूवन् । यानि न सुकरं कल्पेनापि निर्देष्टुं ॥

तत्रेदमुच्यते ।

करतलसदृशा ऽभूत्सुस्थिता मेदिनीयं
विकसितशतपत्रार्श्वोद्गता रश्मिजालैः ।
अमरशतसहस्रा ओनमी बोधिमण्डं
द्रुमु प्रथम निमित्तं सिंहनादेन दृष्टं ॥
द्रुमशतत्रिसहस्रो बोधिमण्डे नमन्ते
गिरिवर तथनेके शैलराजस्य मेरुः ।

दृष्टबलमधिगम्य ब्रह्मशक्रा नमन्ते
इदमपि नरसिंहे क्रीडितं बोधिमण्डे ॥
रश्मिशतसहस्रा स्वोशरीरात्मभावा
स्फुरि जिनवरक्षत्रा त्रीणि शान्ता अपायाः ।
तत क्षणसुमुहूर्ते शोधिता चाक्षणानि
न च खिलमददोषा बाधिषु कंचि सत्त्वं ॥
इयमपि नरसिंहस्यासनस्थस्य क्रीडा
शशिरविमणिवह्निर्विद्युताभा च दिव्या ।
न तपति अभिभूता भानुवत्योर्णपाशा
न च जगदिह कश्चित्प्रेक्षते शास्तु मूर्ध ॥
इयमपि नरसिंहस्यासनस्थस्य क्रीडा
करतलस्पृशनेना कम्पिता चोर्वि सर्वा ।
येन नमुचिसेना क्षोभिता तूलभूता
नमुचि इषु गृहीत्वा मेदिनी व्यालिखेद्य ॥
इदमपि नरसिंहस्यासने क्रीडितं भूदिति ॥

॥ इति श्रीललितविस्तरे ऽभिसंबोधनपरिवर्तो नाम द्वाविंशतितमो ऽध्यायः ॥

अथ खलु शुद्धावासकायिका देवपुत्रा बोधिमण्डनिषण्णं तथागतं प्रदक्षिणीकृत्य दिव्यैश्चन्दनचूर्णवर्षैरभ्यवकीर्याभिः सारूप्याभिर्गाथाभिरभितुष्टुवुः ।

उत्पन्नो लोकप्रद्योतो लोकनाथः प्रभंकरः ।
अन्धभूतस्य लोकस्य चक्षुर्दाता रणंजहः ॥
भवान्विजितसंग्रामः पुण्यैः पूर्णमनोरथः ।
संपूर्णः शुक्लधर्मैश्च जगत्त्वं तर्पयिष्यसि ॥
उत्तीर्णपङ्को ह्यनिघः स्थले तिष्ठति गौतमः ।
अन्यां सत्त्वां महोघेन प्रोह्यतस्तारयिष्यसि ॥
उद्गतस्त्वं महाप्राज्ञो लोकेष्वप्रतिपुद्गलः ।
लोकधर्मैरलिप्तस्त्वं जलस्थमिव पङ्कजः ॥
चिरप्रसुप्तमिमं लोकं तमस्कन्धावगुण्ठितं ।
भवान्प्रज्ञाप्रदीपेन समर्थः प्रतिबोधितुं ॥
चिरातुरे जीवलोके क्लेशव्याधिप्रपीडिते ।
वैद्यराट् त्वं समुत्पन्नः सर्वव्याधिप्रमोचकः ॥
भविष्यन्त्यक्षणा शून्या त्वयि नाथे समुद्गते ।
मनुष्याश्चैव देवाश्च भविष्यन्ति सुखान्विताः ॥
येषां त्वद्दर्शनं सौम्य एष्यसे पुरुषर्षभः ।
न ते कल्पसहस्राणि जातु यास्यन्ति दुर्गतिं ॥
पण्डिताश्चाप्यरोगाश्च धर्मं श्रोष्यन्ति ये ऽपि ते ।
गम्भीराश्चोपधीक्षीणा भविष्यन्ति विशारदाः ॥
मोक्ष्यन्ते च लघुं सर्वे छित्वा वै क्लेशबन्धनं ।
यास्यन्ति निरुपादाना: फलप्राप्तिवरं शुभं ॥
दक्षिणीयाश्च ते लोके आहुतीनां प्रतिग्रहाः ।
न तेषु दक्षिणा न्यूना सत्त्वानिर्वाणहेतुकी ॥ ० ॥

एवं खलु भिक्षवः शुद्धावासकायिका देवपुत्रास्तथागतमभिष्टुत्यैकान्ते प्राञ्जलयस्तस्थुः । प्राञ्जलयस्तथागतं नमस्यन्तः ॥ ॥

अथ खलु चाभास्वरा देवपुत्रास्तथागतं बोधिमण्डनिषण्णं दिव्यैर्नानाप्रकारैः पुष्पधूपगन्धमाल्यविलेपनछत्रध्वजपताकाभिः संपूज्य त्रिप्रदक्षिणीकृत्य चाभिर्गाथाभिरभ्यस्ताविषुः ।

गम्भीरबुद्धे मधुरस्वरा मुने ब्रह्मस्वरा मुनिवरगीत सुस्वरं ।
वराग्रबोधि परमार्थप्राप्ता सर्वस्वरे पारगते नमस्ते ॥
त्राताऽसि द्वीपोऽसि परायणोऽसि नाथोऽसि लोके कृपमैत्रचित्तः ।
वैद्योत्तमस्त्वं खलु शल्यहर्ता चिकित्सकस्त्वं परमं हितंकरः ॥
दीपंकरस्य सहदर्शनं त्वया समुदानितं मैत्रकृपाभ्रजालं ।
प्रमुञ्च नाथा अमृतस्य धारां समेहि तापं सुरमानुषाणां ॥
त्वं पद्मभूतं त्रिभवेष्वलिप्तं त्वं मेरुकल्पो विचलो ह्यकम्प्यः ।
त्वं वज्रकल्पो ह्यचलप्रतिज्ञ त्वं चन्द्रमा सर्वगुणाग्रधारी ॥०॥

एवं खलु भिक्षव आभास्वरा देवास्तथागतमभिसंस्तुत्यैकान्ते तस्थुः । प्राञ्जलयस्तथागतं नमस्यन्तः ॥ ॥

अथ खलु सुब्रह्मदेवपुत्रप्रमुखाः ब्रह्मकायिका देवास्तथागतं बोधिमण्डनिषण्णमनेकमणिरत्नकोटीनयुतशतसहस्रप्रत्युप्तेन रत्नजालेनाभिच्छाद्य त्रिप्रदक्षिणीकृत्य चाभिः सारूप्याभिर्गाथाभिरभ्यस्ताविषुः ।

शुभविमलप्रज्ञ प्रभतेजधरा द्वात्रिंशलक्षण वराग्रधरा ।
स्मृतिमं मतिमं गुणज्ञानधरा अकिलान्तका सिरसि वन्दमि ते ॥
अमला विमला त्रिमलैर्विमला त्रैलोक्यविश्रुत त्रिविद्यगता ।
त्रिविधाविमोक्षवरचक्षुददा वन्दामि त्वां त्रिनयनं विमलं ॥

कलिकलुष उद्धृत सुदान्तमना  कृपकरुण उद्गत जगार्थकरा ।
मुनिमुदित उद्गत प्रसान्तमना  द्वयमतिविमोचक उपेक्षरता ॥
व्रततपस उद्गत जगार्थकरा  खचरी विशुद्धचरि पारगता ।
चतुसत्यदर्शक विमोक्षरता  मुक्तो विमोचयसि चान्यजगत् ॥
बलवीर्य आगतु इहा नमुचि  प्रज्ञाय वीर्य तव मैत्र्य जितो ।
प्राप्तं च ते पदवरं अमृतं  वन्दाम ते शठचमूमथना ॥ ०॥

एवं खलु भिक्षवः सुब्रह्मदेवपुत्रप्रमुखा ब्रह्मकायिका देवास्तथागतमाभिर्गाथाभिरभिष्टुत्यैकान्ते तस्थुः । प्राञ्जलयस्तथागतं नमस्यन्तः ॥ ॥

अथ खलु ते शुक्लपाक्षिका मारपुत्रा येन तथागतस्तेनोपसंक्रामन्नुपसंक्रम्य महारत्नच्छत्रवितानैस्तथागतमभिच्छाद्य प्राञ्जलयस्तथागतमाभिः सारूप्याभिर्गाथाभिरभ्यस्ताविषुः ।

प्रत्यक्षे ऽस्मि बले तवाति विपुले मारस्य घोरा चमू
यत्सा मारचमू महाप्रतिभया एकक्षणे ते जिता ।
न च ते उत्थितु नैव कायु क्षमितो नो वा गिरा व्याहृता
त्वां वन्दामहि सर्वलोकमहितं सर्वार्थसिद्धं मुनिं ॥

मारा कोटिसहस्रनेकनयुता गङ्गाणुभिः संमिताः
ते तुभ्यं न समर्थ बोधिसुवटा संचालितुं कम्पितुं ।
यज्ञा कोटिसहस्रनेकनयुता गङ्गा यथा वालिका
यष्टा बोधिवटासितेन भवता तेनाद्य विभ्राजसे ॥

भार्या चेष्टतमा सुताश्च दयिता दास्यश्च दासास्तथा
उद्याना नगराणि राष्ट्रनिगमा राज्यानि सान्तपुराः ।

हस्ता पाद शिरोत्तमाङ्गमपि वा चक्षुंषि जिह्वा तथा
त्यक्ता ते वरबोधिचर्यचरता तेनाद्य विभ्राजसे ॥

उक्तं यद्वचनं त्वया सुवक्रसो बुद्धो भविष्याम्यहं
तारिष्ये बहुसत्त्वकोटिनयुता दुःखार्णवेनोह्यता ।
ध्यानाधीन्द्रियबुद्धिभिः कवचितः सद्धर्मनावा स्वयं
सा चैषा प्रतिपूर्ण तुभ्य प्रणिधिस्तारिष्यसे प्राणिनः ॥

यत्पुण्यं च स्तविल वादिवृषभं लोकस्य चक्षुर्ददं
सर्वे भूत्व उदग्रहृष्टमनसः प्रार्थेम सर्वज्ञतां ।
समुदानीत्व वराग्रबोधिमतुलां बुद्धैः सुसंवर्णितां
एवं तद्विनिहत्य मारपरिषां बुद्धेम सर्वज्ञतां ॥ ० ॥

एवं खलु भिक्षवो मारपुत्रास्तथागतमभिष्टुत्यैकान्ते तस्थुः । प्राञ्जलयस्तथागतं नमस्यन्तः ॥ ॥

अथ खलु परनिर्मितवशवर्ती देवपुत्रो ऽनेकैर्देवपुत्रशतसहस्रैः परिवृतः पुरस्कृतो जाम्बूनदसुवर्णवर्णैः पद्मैस्तथागतमभ्यवकीर्य सम्मुखमाभिर्गाथाभिरभ्यस्तावीत् ।

अपिडित अलुडित अवितथवचना
अपगततमरज अमृतगतिगता ।
अरहसि दिवि भुवि श्रियक्रियमतुला
अतिद्युति स्मृतिमति प्रणिपति शिरसा ॥

रतिकर रणजह रजमलमथना
रमयसि सुरनर सुविसदवचनैः ।

विकसित सुविपुल वरतनुकिरणैः
सुरनरपतिरिव जयसि जगदिद ॥

परगणि प्रमथन परचरिकुशला
प्रियु भव नरमरु परमतिधुनता ।
परचरि विभजसि सुनिपुनमतिमान्
पथि इह विचरतु दशबलगमने ॥

त्यजि पृथु भवग्रहि वितथदुःखमहा
विनयसि सुरनर यथमतिविनये ।
विचरसि चतुदिश शशिरिव गगने
चक्षु भव परायण इह भुवि त्रिभवे ॥

प्रियु भव नरमरु न च खलि विषये
रमयसि शुभरति कामरतिविरतो ।
दिनदर्शि परिषदि न ति समु त्रिभवे
नाथु गतिपरायणु त्वमिह हि जगतः ॥ ० ॥

एवं खलु भिक्षवो वशवर्तिदेवपुत्रप्रमुखाः परनिर्मितवशवर्तिनो देवपुत्रास्तथागतमभिष्टुत्यैकान्ते तस्थुः । प्राञ्जलयस्तथागतं नमस्यन्तः ॥ ॥

अथ खलु सुनिर्मितो देवपुत्रो देवसंघपरिवृतः पुरस्कृतो नानारत्नपट्टदामैस्तथागतमभिछाद्य संमखमाभिर्गाथाभिरभ्यस्तावीत् ।

धर्मालोकभवान्समुद्गत त्रिविधमलनुच्छिदो
मोहादृष्टिअविद्यघातको हिरिशिरिभरितः ।

मिथ्यामार्गरतामिमां प्रजाममृते स्थपयितो
उत्पन्नो इह लोकि चेतियो दिवि भुवि महितः ॥
त्वं वैद्यो कुशलचिकित्सको ह्यमृतसुखददो
दृष्टिक्लेशमविद्यसंचयं पुरिममनुशयं ।
सर्वव्याध्यपनेसि देहिनां पुरिमजिनपथे
तस्माद्वैद्यतमो ऽसि नायका विचरसि धरणीं ॥
चन्द्रासूर्य प्रभास्व ज्योतिषा मणि तथ ज्वलना
शक्रब्रह्मप्रभा न भासते पुरतु श्रिरिघने ।
प्रज्ञालोककरा प्रभंकरा प्रभसिरिभरिता
प्रत्यक्षास्तव ज्ञाति अद्भुते प्रणिपति शिरसा ॥
सत्यासत्यकथी विनायका सुमधुरवचना
दान्ताशान्तमना जितेन्द्रिय प्रशमितमनसा ।
शास्ता शासनियां प्रशाससे नरमरुपरिषां
वन्दे शाक्यमुनिं नरर्षभं सुरनरमहितं ॥
ज्ञानिं ज्ञानकथाग्रधारका ज्ञपयसि त्रिभवे
त्रैविद्य त्रिविमोक्षदेशका त्रिमलमलनुदा ।
भव्याभव्य मुने प्रजानसे यथमतिविनये
वन्दे त्वां त्रिसहस्रि अद्भुतं दिवि भुवि महितं ॥ ० ॥

एवं खलु भिक्षवः सुनिर्मितो देवपुत्रः सपरिवारस्तथागतमभिष्टुत्वैकान्ते ऽस्थात् । प्राञ्जलीकृतस्तथागतं नमस्कुर्वन् ॥ ॥

अथ खलु संतुषितो देवपुत्रः सार्धं तुषितकायिकैर्देवैर्येन तथागतस्तेनोपसंक्रामदुपसंक्रम्य महता दिव्यवस्त्रजालेन बो-

धिमण्डनिषण्णं तथागतमभिसत्काव्य संमुखमाभिर्गाथाभिरभ्यस्तौषीत् ।

तुषितालयि यद्वसितस्त्वं तत्र ति देशितु धर्म उदारो ।
न च छिद्यति सा अनुशास्ति अद्यपि धर्मचरी सुरपुत्राः ॥
न च दर्शन तृप्ति लभामो धर्मशृणोतु न विन्दति तृप्तिं ।
गुणसागर लोकप्रदीपा वन्दिम ते शिरसा मनसा च ॥
तुषितालय यच्चलितस्त्वं सोषित अक्षण सर्वि तदा ते ।
यद बोधिवटे उपविष्टः सर्वजगस्य किलेश प्रशान्ताः ॥
यस्य कृतेन च बोधि उदारा एषति प्राप्ति जिनित्वन मारं ।
त्वा प्रणिधी तपसा परिपूर्णा क्षिप्र प्रवर्तय चक्रमुदारं ॥
बहु देविषु प्राणिसहस्रा धर्मरता शृणियामथ धर्मं ।
क्षिप्र प्रवर्तय चक्रमुदारं मोचय प्राणिसहस्र भवेषु ॥ ० ॥

एवं खलु भिक्षवः संतुषितो देवपुत्रः सपरिवारस्तथागतमभिष्टुत्यैकान्ते ऽस्थात् । प्राञ्जलीकृतस्तथागतं नमस्यमानः ॥ ॥

अथ खलु सुयामदेवपुत्रप्रमुखाः सुयामा देवा येन तथागतस्तेनोपसंक्रामदुपसक्रम्य नानापुष्पधूपगन्धमाल्यविलेपनैर्बोधिमण्डनिषण्णं तथागतं संपूज्य संमुखमाभिः सारूप्याभिर्गाथाभिस्तुष्टुवुः ।

सदृशो ऽस्ति न ते कुतोन्तरे शीलसमाधि तथैव प्रज्ञया ।
अधिमुक्ति विमुक्तिकोविदा शिरसा वन्दिम ते तथागतं ॥
दृष्टा स वियूह सोभना बोधिमण्डस्मि मरुभि या कृता ।
न तमर्हति अन्य कश्चना यथ त्वं देवमनुष्यपूजितः ॥
न मुधाय भवान्समुद्गतो यस्य अर्थे बहु चीर्ण दुष्करा ।

विजितो हि शठः ससैन्यकः प्राप्ता बोधि अनुत्तरा त्वया ॥
आलोक कृते दशादिशे प्रज्ञादीपेन त्रिलोक ज्वालितः ।
तिमिरं अपनाययिष्यसे दास्यसि चक्षुरनुत्तरं जगे ॥
बहुकल्प स्तुवन्ति भाषतो रोमकूपस्य न चान्तु अस्ति ते ।
गुणसागर लोकविश्रुता शिरसा वन्दिम ते तथागतं ॥ ० ॥

एवं खलु ते सुयामदेवपुत्रप्रमुखा देवास्तथागतमभिष्टुत्यैकान्ते तस्थुः । प्राञ्जलयस्तथागतं नमस्यन्तः ॥ ॥

अथ खलु शक्रो देवानामिन्द्रः सार्धं त्रायत्रिंशकायिकैर्देवैर्नानापुष्पधूपदीपगन्धमाल्यविलेपनचूर्णचीवरछत्रध्वजपटाकाव्यूहैस्तथागतं संपूज्याभिर्गाथाभिरभ्यस्तावीत् ।

अस्खलिता अनवद्या सदा सुस्थिता मेरुकल्पा मुने
दशदिशि सुविघुष्ट ज्ञानप्रभा पुण्यतेजान्विता ।
बुद्धशतसहस्र संपूजिता पूर्वि तुभ्यं मुने
तस्य विशेषु येन बोधिद्रुमे मारसेना जिता ॥
शीलश्रुतसमाधिप्रज्ञाकरा ज्ञानकेतुध्वजा
जरमरणनिघाति वैद्योत्तमा लोकचक्षुर्ददा ।
त्रिमलखिलप्रहीण शान्तेन्द्रिया शान्तचित्ता मुने
शरणु तवमुपेम शाक्यर्षभा धर्मराजा जगे ॥
बोधिचरी अनन्ततुल्या अभूद्वीर्यस्थामोद्गता
प्रज्ञाबल उपायमैत्राबलं ब्राह्मपुण्यं बलं
एति बलमनन्ततुल्या भवं बोधि संप्रस्थिते
दशबलबलधारी अद्या पुनर्बोधिमण्डे भुतो ॥

दृष्ट चमु अनन्तसत्त्वे सुरा भीतत्रस्ताभवन्
मा खु श्रमणराजु वाधिष्यते बोधिमण्डे स्थितः ।
न च भवतु बभूव तेभ्यो भयं नो च कायेञ्जना
करहत गुरुभार संकम्पना मारसेना जिता ॥
यथ च पुरिमकेभि सिंहासने प्राप्त बोधि वरा
तथ त्वया अनु बुद्ध तुल्या समा अन्यथा त्वं न हि ।
सममनस समचित्त सर्वज्ञता स्थाम प्राप्त त्वया
तेन भव स्वयंभु लोकोत्तमो पुण्यक्षेत्रं जगे ॥ ० ॥

एवं खलु भिक्षवः शक्रो देवानामिन्द्रः सार्धं देवपुत्रैस्त्रायत्रिंशैस्तथागतमभिष्टुत्यैकान्ते ऽस्थात् । प्राञ्जलीकृतस्तथागतं नमस्कुर्वन् ॥ ॥

अथ खलु चत्वारो महाराजानः सार्धं चतुर्महाराजकायिकैर्देवपुत्रैर्येन तथागतस्तेनोपसंक्रामदुपसंक्रम्याभिमुक्तकचम्पकसुमनावार्षिकधानुस्कारिमाल्यदामपरिगृहीता अप्सरःशतसहस्रपरिवृता दिव्यसंगीतिसंप्रवादितेन तथागतस्य पूजां कृत्वा आभिः सारूप्याभिर्गाथाभिस्तुष्टुवुः ।

सुमधुरवचना मनोज्ञघोषा शशिव प्रसान्तिकरा प्रसन्नचित्ता ।
प्रहसितवदना प्रभूतजिह्वा परमसुप्रीतिकरा मुने नमस्ते ॥
रुत रवित य अस्ति सर्वलोके सुमधुर प्रेमणिया नरामरूणां ।
भवत स्वरु प्रमुक्त मञ्जुघोषो अभिभवते रुत सर्वि भाषमाणां ॥
रागु समयि दोषमोहक्लेशा प्रीति जनेति अमानुषां विशुद्धां ।
अकलुषहृदया निशाम्य धर्मं आर्यविमुक्ति लभन्ति ते हि सर्वे ॥
न च भव अतिमन्यसे अविद्वां न च पुन विद्वमदेन जातु मत्तः ।

उन्नतु न च नैव चोनतस्त्वं   गिरिरिव सुस्थितु सागरस्य मध्ये ॥
लाभ इह सुलब्ध मानुषाणां   यत्र हि तादृशु जातु सत्त्व लोके ।
श्रीरिव पद्मो धनस्य दात्री   तथ तव दास्यति धर्मु सर्वलोके ॥०॥

एवं खलु चतुर्महाराजप्रमुखा महाराजकायिका देवा बोधिमण्डनिषण्णं तथागतमभिष्टुत्यैकान्ते तस्थुः । प्राञ्जलयस्तथागतं नमस्यन्तः ॥ ॥

अथ खल्वन्तरिक्षा देवास्तथागतस्यान्तिकमुपसंक्रम्याभिसंबोधेः पूजाकर्मणे सर्वमन्तरीक्षं रत्नजालेन किङ्किणीजालेन रत्नछत्रै रत्नपटाकाभि रत्नपट्टदामै रत्नावतंसकैर्विविधमुक्ताहारपुष्पदामार्धकायिकदेवतापरिगृहीतैरर्धचन्द्रकैश्च समलंकृत्य तथागताय निर्यातयन्ति स्म । निर्यात्य च संमुखमाभिर्गाथाभिरभ्यस्ताविषुः ।

अस्माकु वासं गगणे ध्रुवं मुने   पश्याम सत्त्वा चरिया यथा जगे ।
भवतश्चरि प्रेक्षिय शुद्धसत्त्व   स्खलितं न पश्याम तवैकचित्ते ॥
ये आगता पूजन बोधिसत्त्वा   गगणं स्फुटं तैर्नरनायकेभिः ।
हानिर्विमानान न चाभवन्त   तथा हि ते वै गगणात्मभावाः ॥
ये अन्तरीक्षातु प्रवर्षि पुष्पां   स्वाचूडबन्धा हि महासहस्रा ।
ते तुभ्य काये पतिता अशेषा   नद्यो यथा सागरि संप्रविष्टाः ॥
पश्याम छत्राण्यवतंसका च   मालागुणां चम्पकपुष्पदामां ।
हारांश्च चन्द्रांश्च तथार्धचन्द्रां   क्षिपन्ति देवा न च संस्करोति ॥
वालस्य नाभूदवकाशमस्मिन्   देवै स्फुटं सर्वत अन्तरीक्षं ।
कुर्वन्ति पूजां द्विपदोत्तमस्य   न च ते मदो जायति विस्मयो वा ॥०॥

एवं खल्वन्तरीक्षदेवा बोधिमण्डे निषण्णं तथागतमभिष्टुत्यैकान्तेऽवतस्थिवन्तः । प्राञ्जलयस्तथागतं नमस्यन्तः ॥ ॥

अथ खलु भौमा देवास्तथागतस्य पूजाकर्मणे सर्वावन्तं धरणीतलं सुशोधितोपलिप्तं गन्धोदकपरिषिक्तं पुष्पावकीर्णं च कृत्वा नानादूष्यवितानविततं च तथागताय निर्यातयन्ति स्म । आभिर्गाथाभिरभितुष्टुवुः ।

वज्रमिव अभेद्या संस्थिता त्रिःसहस्रा
 वज्रमयपदेनाय स्थितो बोधिमण्डे ।
इह मम त्वचमांसं शुष्यतामस्थि मज्जा
 नं च अकृ अस्पृशित्वा बोधि उत्थेष्य अस्मात् ॥

सविभव नरसिंहा सर्विय त्रिःसहस्रा
 न करिषु अधिस्थानं स्याद्विदीर्णशेषा ।
तादृश महवेगा आगता बोधिसत्त्वा
 येष क्रमतलेभिः कम्पिता क्षेत्रकोट्यः ॥

लाभ इह सुलब्धा भूमिदेवैरुदारा
 यत्र परमसत्त्वश्चङ्क्रमी मेदिनीये ।
यत्र कु रजु लोके सर्व ओभासितास्ते
 क्षेतिभु त्रिसहस्रः किं पुनस्तुभ्य कायः ॥

हेष्टि शतसहस्रं यावतश्चापस्कन्धो
 धरणितलु जगस्या यावतश्चोपजीव्यः ।
सर्व वयु धरेमो मेदिनी त्रिःसहस्रां
 सर्व तव ददामो भुङ्क्ष्मां त्वं यथेष्टं ॥

यत्र भव स्थिहेद्वा चङ्क्रमेद्वा शयेद्वा
ये ऽपि सुगतपुत्राः श्रावका गौतमस्य ।
धर्मकथकथेन्ती ये ऽपि वा तां शृणोन्ति
सर्व कुशलमूलं बोधये नामयामः ॥

एवं खलु भौमा देवा बोधिमण्डनिषण्णं तथागतमभिष्टुत्यैकान्ते तस्थुः । प्राञ्जलयस्तथागतं नमस्यन्तः ॥ ॥

॥ इति श्रीललितविस्तरे संस्तवपरिवर्तो नाम त्रयोविंशतितमो ऽध्यायः ॥

इति हि भिक्षवो ऽभिसंबुद्धस्तथागतो देवैरभिष्टूयमानः पर्यङ्कमभिन्दन्ननिमिषनयनो द्रुमराजं प्रेक्षते स्म । ध्यानप्रीत्याहारः सुखप्रतिसंवेदी सप्तरात्रं बोधिवृक्षमूले ऽभिनामयति स्म ॥

अथ सप्ताहे ऽतिक्रान्ते कामावचरा देवपुत्रा दशगन्धोदककुम्भसहस्राणि परिगृह्य येन तथागतस्तेनोपसंक्रामन्ति स्म । रूपावचरा अपि देवपुत्रा दशगन्धोदककुम्भसहस्राणि परिगृह्य येन तथागतस्तेनोपसंक्रामन्ति स्म । उपसंक्रम्य बोधिवृक्षं तथागतं च गन्धोदकेन स्नापयन्ति स्म । गणनासमतिक्रान्ताश्च देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगास्तेन तथागतकायपतितेन गन्धोदकेन स्वकस्वकान्कायानुपलिम्पन्ति स्म । अनुत्तरायां च सम्यक्संबोधौ चित्तान्युत्पादयामासुः । स्वभवने प्रविष्टा अपि च ते देवपुत्रादयो ऽविरहिता अभूवंस्तेन गन्धोदकगन्धेन न चान्यस्मै गन्धाय स्पृहामु-

त्यादयामासुः । तेनैव च प्रीतिप्रामोद्येन तथागतगौरवमनसिकारनिर्जातेनाविवर्तिका अभूवन्ननुत्तरायाः सम्यक्संबोधेः ॥ ॥

अथ खलु भिक्षवः समन्तकुसुमो नाम देवपुत्रस्तस्यामेव पर्षदि संनिपतितो ऽभूत् । स तथागतस्य चरणयोर्निपत्य प्राञ्जलिस्तथागतमेतदवोचत् । को नामायं भगवन्समाधिर्येन समाधिना समन्वागतस्तथागतः सप्तरात्र विहरत्यभिन्नपर्यङ्कः ॥ एवमुक्तो भिक्षवस्तथागतस्तं देवपुत्रमेतदवोचत् । प्रीत्याहारव्यूहो नाम देवपुत्रायं समाधिर्येन समाधिना समन्वागतस्तथागत. सप्तरात्रं व्याहार्षीदभिन्नपर्यङ्कः ॥

अथ खलु भिक्षवः समन्तकुसुमो देवपुत्रस्तथागतं गाथाभिरभ्यस्तावीत् ।

रथचरणनिचितचरणा दशशतअरजलज कमलदलतेजा ।
सुरमुकुटघृष्टचरणा वन्दे चरणौ शिरिघनस्य ॥
अभिवन्द्य सुगतचरणौ प्रमुदितचित्तस्तदा स सुरपुत्रः ।
इदमवचि विमतिहरणं प्रशान्तकरणं नरमरूणां ॥
शाक्यकुलनन्दिजनना अन्तकरा रागदोषमोहानां ।
प्रम्लानअन्तकरणा विनेहि काङ्क्षां नरमरूणां ॥
किं कारणं दशबला बुद्धा सर्वज्ञतामपरिमाणां ।
सप्ताहं महिमण्डे जिना न भिन्दन्ति पर्यङ्कं ॥
किं तु खलु पश्यमानः सप्ताहं अनिमिषेण नरसिंहा ।
प्रेक्षसि विशुद्धचक्षो विकसितशतपत्रतुल्याक्षः ॥
किं तु भवतेष प्रणिधी उताहु सर्वेष वादिसिंहानां ।
येन द्रुमराजमूले पर्यङ्क न भिन्दि सप्ताहं ॥

साधु समशुक्लदन्ता सुगन्धगन्धामुखं दशबलस्य ।
प्रवद वचनं अवितथं कुरुष्व प्रीतिं नरमरूणां ॥
तमुवाच चन्द्रवदनः शृणुष्व मे भाषतो अमरपुत्र ।
अस्य प्रश्नस्याहं किंचिन्मात्रं प्रवक्ष्यामि ॥
राजा यद्वद्यस्मिन्नभिषिक्तो भवति ज्ञातिसंघेन ।
सम्राड्ढ तं प्रदेशं न जहाति हि धर्मता राज्ञां ॥
एवमेव दशबला अपि अभिषिक्ता भोन्ति यद प्रणिधिपूर्णाः ।
सम्राड्ढ धरणिमण्डे जिना न भिन्दन्ति पर्यङ्कं ॥
शूरो यथारिसंघां निरीक्षते निर्जितां निरवशेषां ।
बुद्धापि बोधिमण्डे क्लेशां निहतां निरीक्षन्ते ॥
इह ते कामक्रोधा मोहप्रभवा जगत्परिनिकासाः ।
साहोढा इव चौरा विनाशिता ये निरवशेषाः ॥
इह मे हतान विविधा मानविधामन्युना पुरनिकेताः ।
सर्वास्रवा प्रहीना ज्ञानं चाग्रं समोत्पन्नं ॥
इह सा अकार्यकर्त्री भवतृष्णाचारिणी तथाविद्या ।
सानुशयमूलजाता पटुनाज्ञानाग्निना दग्धा ॥
इह सा अहं ममेति च कलिपासु दुरानुगाढलितमूला ।
नीवरणकठिनग्रन्थि छिन्ना मे ज्ञानशस्त्रेण ॥
इह ते चिरं समायत उल्लापनका विनाशपर्यन्ताः ।
स्कन्धा सोपादाना ज्ञानेन मया परिज्ञाता ॥
इह ते द्वयसंमोहा मिथ्याग्राहा महानरकनिष्ठाः ।
मय उद्धृता अशेषा भूयस्य न जातु ज्ञास्यन्ते ॥

इह नीवरणवनानी दग्धा मे कुशलमूलतेजेन ।
चतुरश्च विपर्यासा निर्दग्ध मया निरवशेषाः ॥
इह सा वितर्कमाला संज्ञासूत्रेषु ग्रथिता निपथी ।
विनिवर्तिता अशेषा बोध्यङ्गविचित्रमालाभिः ॥
दुर्गानि पञ्च षष्टि मोहानी त्रिंशतिं च मलिनानि ।
चत्वारिंशद्घानी छिन्ना मे ऽस्मिं धरणिमण्डे ॥
षोडश असंवृतानी अष्टादश धातवश्च महिमण्डे ।
कृच्छ्राणि पञ्चविंशति छिन्नानि मयेह संस्थेन ॥
विंशति रजस्तराणी अष्टाविंशति जगस्य विचासाः ।
इह मे समतिक्रान्ता वीर्यबलपराक्रमं करित्वा ॥
तथ बुद्धनर्दितानी पञ्चशतास्मि मया समनुबुद्धा ।
परिपूर्णशतसहस्रं धर्मान मया समनुबुद्ध ॥
इह मे ऽनुशय अशेषा अष्टानवतिः समूलपर्यन्ताः ।
पर्युत्थानकिशलया निर्दग्धा ज्ञानतेजेन ॥
काङ्क्षा विमतिसमुदया दृष्टीजडजन्तिता अशुभमूला ।
तृष्णानदी त्रिवेगा प्रशोषिता ज्ञानसूर्येण ॥
कुहनलपनप्रहाणं मायामात्सर्यदोषइर्ष्याद्यं ।
इह ते क्लेशारण्यं छिन्नं विनयाग्निना दग्धं ॥
इह ते विवादमूला आकर्षणदुर्गतीषु विषमासु ।
आर्यापवादवचना ज्ञानवरविरेचनैर्वान्ता ॥
इह रुदितक्रन्दितानां शोचितपरिदेवितान पर्यन्तं ।
प्राप्तं मया ह्यशेषं ज्ञानगुणसमाधिमागम्य ॥

ओघा अयोगग्रन्थाः शोकाः शल्या मदप्रमादाश्च ।
विजिता ममेह सर्वे सत्यनयसमाधिमागम्य ॥
इह मय किलेशगहना संकल्पविरूढमूल भववृक्षाः ।
स्मृतिपरशुना अशेषा छिन्ना ज्ञानाग्निना दग्धा ॥
इह सो मया ह्यतिबलो अस्मिं मारस्त्रिलोकवशवर्ती ।
ज्ञानासिना शठात्मा हतो यथेन्द्रेण दैत्येन्द्रः ॥
इह जालिनी अशेषा षट्त्रिंशति चारिणी धरणिमण्डे ।
प्रज्ञासिना बलवता छित्वा ज्ञानाग्निना दग्धा ॥
इह ते मूलक्लेशाः सानुशया दुःखशोकसंभूताः ।
मय उद्धृता अशेषा प्रज्ञाबललाङ्गलमुखेन ॥
इह मे प्रज्ञाचक्षुर्विशोधितं प्रकृतिशुद्धसत्त्वानां ।
ज्ञानाञ्जनेन महता मोहपटलविस्तरं भिन्नं ॥
इह धातुभूतचतुरो मदमकरविलोडिता विपुलतृष्णाः ।
स्मृतिसमथभास्करांशो विशोषिता मे भवसमुद्रा ॥
इह विषयकाष्ठनिचयो वितर्कसामो महामदनवह्निः ।
निर्वापितो ऽतिदीप्तो विमोक्षरसशीततोयेन ॥
इह मे अनुशयपटला आस्वादतडिद्वितर्कनिर्घोषाः ।
वीर्यबलपवनवेगैर्विधूय विलयं समुपनीता ॥
इह मे हतो ह्यशेषश्चित्तचरि रिपुर्भवानुगतवैरी ।
प्रज्ञासिना बलवता स्मृतिविमलसमाधिमागम्य ॥
इह सा ध्वजाग्रधारी हस्त्यश्वरथोच्छ्रिता विकृतरूपा ।
नमुचिबलवीर्यसेना मैत्रीमागम्य विध्वस्ता ॥

इह पञ्चगुणसमृद्धाः षडिन्द्रियहया सदा मदोन्मत्ताः ।
बद्धा मया ह्यशेषाः समाधिसशुभं समागम्य ॥
इह अनुनयप्रतिघानां कलहविवादप्रहाणपर्यन्तः ।
प्राप्तो मया ह्यशेषो अप्रतिहतसमाधिमागम्य ॥
इह ममियिता च सर्वे अध्यात्मिक बाहिरा परिक्षीणा ।
कल्पितविकल्पितानि च शून्यमिति समाधिमागम्य ॥
इह लालयिता सर्वे मर्त्या दिव्या भवाग्रपर्यन्ताः ।
त्यक्ता मया ह्यशेषा आगम्य समाधिमनिवर्तं ॥
सर्वं भवबन्धनानि च मुक्तानि मयेह तानि सर्वाणि ।
प्रज्ञाबलेन निखिला त्रिविधमिह विमोक्षमागम्य ॥
इह हेतुदर्शनाद्धि जिता मया हेतुकास्त्रयः ।
संज्ञा नित्यानित्ये संज्ञा सुखदुःख चात्मनि च ॥
इह मे कर्मविधाना समुदयमुदिता षडायतनमूला ।
छिन्ना द्रुमेन्द्रमूले सर्वानित्यप्रहारेण ॥
इह मोहतमः कलुषं दुष्टीकृत दर्परोषसंकीर्णं ।
भित्वा (क्षेत्रे सु)चिरान्धकारं प्रभासितं ज्ञानसूर्येण ॥
इह रागमदनमकरं तृष्णोर्मिजलं कुदृष्टिसंग्राहं ।
संसारसागरमहं संतीर्णो वीर्यबलनावा ॥
इह तन्मयानुबुद्धं यद्बुद्धो रागद्वेषमोहांश्च ।
प्रदहति चित्तवितर्का दवाग्निपतितानिव पतङ्गा ॥
इह अङ्ग चिरप्रयातो ह्यपरिमितकल्पकोटिनयुतानि ।
संसारपथा क्लिष्टो विश्रान्तो नष्टसंतापः ॥

इह तन्मयानुबुद्धं सर्वपरप्रवादिभिर्यदप्राप्तं ।
अमृतं लोकहितार्थं जरामरणशोकदुःखान्तं ॥
यत्र स्कन्धैर्दुःखं आयतनैः तृष्णसंभवं दुःखं ।
भूयो न चोद्भविष्यति अभयपुरमिहाभ्युपगतो ऽस्मि ॥
इह ते मयानुबुद्धा रिपवो अध्यात्मिका महाक्षत्स्नाः ।
बद्धा च संप्रदग्धाः क्षताश्च मे पुन भवनिकेताः ॥
इह तन्मयानुबुद्धं यस्यार्थे कल्पकोटिनयुतानि ।
त्यक्ता समांसनयना रत्नानि बहून्यमृतहेतोः ॥
इह तन्मयानुबुद्धं यद्बुद्धं (प्राक्तनै)तैर्जिनैरपरिमाणैः ।
यस्य मधुराभिरम्यः शब्दो लोकेषु विख्यातः ॥
इह तन्मयानुबुद्धं प्रतीत्यसमुदागतं जगच्छून्यं ।
चित्तेक्षणे ऽनुयातं मरीचिगन्धर्वपुरतुल्यं ॥
इह मे तत्खलु शुद्धं वरनयनं येन (लोक)धातवः सर्वा ।
पश्यामि पाणिमध्ये न्यस्तानि यथा द्रुमफलानि ॥
पूर्वेनिवासस्मरणं तिस्रो विद्या मयेह संप्राप्ताः ।
अपरिमितकल्पनयुता स्मरामि स्वप्नादिव विबुद्धः ॥
यैरादीप्त सुरनरा विपरीतविसंज्ञिनो विपर्यस्ताः ।
सो पि च तथा अवितथा इह मय पीतो ह्यमृतमण्डः ॥
यस्यार्थाय दशबला मैत्री भावेन्ति सर्वसत्त्वेषु ।
मैत्रीबलेन जित्वा पीतो मे ऽस्मिन्नमृतमण्डः ॥
यस्यार्थाय दशबलाः करुणा भावेन्ति सर्वसत्त्वेषु ।
करुणाबलेन जित्वा पीतो मे ऽस्मिन्नमृतमण्डः ॥

यस्यार्थाय दशबला मुदिता भावेन्ति सर्वसत्त्वेषु ।
मुदिताबलेन जित्वा पीतो मे ऽस्मिन्नमृतमण्डः ॥
यस्यार्थाय दशबला उपेक्ष भावेन्ति कल्पनयुतानि ।
तमुपेक्षबलैर्जित्वा पीतो मे ऽस्मिन्नमृतमण्डः ॥
यत्पीतं च दशबलैर्गङ्गानदीवालिकाबहुतरेभिः ।
प्राग्जिनसिंहैः पूर्वे इह मे पीतो ह्यमृतमण्डः ॥
या भाषिता च वाग्मे मारस्येहागतस्य ससैन्यस्य ।
भेत्स्यामि न पर्यङ्कं अप्राप्य जरामरणपारं ॥
भिन्ना मया ह्यविद्या दीप्तेन ज्ञानकठिनवज्रेण ।
प्राप्तं च दशबलत्व तस्मात्प्रभिनद्मि पर्यङ्कं ॥
प्राप्तं मयारहत्वं क्षीणा मे आस्रवा निरवशेषाः ।
भग्ना च नमुचिसेना भिनद्मि तस्माद्धि पर्यङ्कं ॥
नीवरणकपाटानि च पञ्च मयेह प्रदारिता सर्वे ।
तृष्णीलता विच्छिन्ना ऽह तेह भिनद्मि पर्यङ्क ॥ ० ॥
अथ सो मनुष्यचन्द्रः सविलम्बितमासनात्समुत्थाय ।
भद्रासने निषीदत्महाभिषेकं प्रतीच्छंश्च ॥
रत्नघटसहस्रैरपि नानागन्धोदकैश्च सुरसंघाः ।
स्नपयन्ति लोकबन्धुं दशबलगुणपारमिप्राप्तं ॥
वादित्रसहस्रैरपि समन्ततो देवकोटिनयुतानि ।
अतुलां करोन्ति पूजां अप्सरनयुतैः सह समग्राः ॥
एवं खलु देवसुताः सहेतु सप्रत्यय च सनिदानं ।
सप्ताङ्ग धरणिमण्डे जिना न भिन्दन्ति पर्यङ्कं ॥ इति ॥

इति हि भिक्षवो ऽभिसंबुद्धबोधिस्तथागतः प्रथमे सप्ताहे तत्रैवासने ऽस्थात् । इह मयानुत्तरा सम्यक्संबोधिरभिसंबुद्धा । इह मयानवराग्रस्य जातिजरामरणदुःखस्यान्तः कृत इति ॥ द्वितीये सप्ताहे तथागतो दीर्घचङ्क्रमं चङ्क्रम्यते स्म । त्रिसाहस्रमहासाहस्रलोकधातुमुपगृह्य ॥ तृतीये सप्ताहे तथागतो ऽनिमिषं बोधिमण्डमीक्षते स्म । इह मयानुत्तरां सम्यक्संबोधिमभिसंबुध्यानवराग्रस्य जातिजरामरणदुःखस्यान्तः कृत इति ॥ चतुर्थे सप्ताहे तथागतो दहरचङ्क्रमं चङ्क्रम्यते स्म । पूर्वसमुद्रात्पश्चिमसमुद्रमुपगृह्य ॥

अथ खलु मारः पापीयान्येन तथागतस्तेनोपसंक्रामदुपसंक्रम्य तथागतमेतदवोचत् । परिनिर्वातु भगवन्परिनिर्वातु सुगत । समय इदानीं भगवतः परिनिर्वाणाय ॥ एवमुक्ते भिक्षवस्तथागतो मारं पापीयांसमेतदवोचत् । न तावदहं पापीयन्परिनिर्वास्यामि यावन्मे न स्थविरा भिक्षवो भविष्यन्ति दान्ता व्यक्ता विनीता विशारदा बहुश्रुता धर्मानुधर्मप्रतिपन्नाः प्रतिबला स्वयमाचार्यकं ज्ञानं परिदीपयितुमुत्पन्नोत्पन्नानां च परप्रवादिनां सह धर्मेण निगृह्याभिप्रायं प्रसाद्य सप्रातिहार्यं धर्मं देशयितुं । न तावदहं पापीयन्परिनिर्वास्यामि यावन्मया बुद्धधर्मसंघवंशो लोके न प्रतिष्ठापितो भविष्यति । अपरिमिता बोधिसत्त्वा न व्याकृता भविष्यन्ति । अनुत्तरायां सम्यक्संबोधौ । न तावदहं पापीयन्परिनिर्वास्यामि । यावन्मे न चतस्रः पर्षदो दान्ता विनीता व्यक्ता विशारदा भविष्यन्ति । यावत्सप्रातिहार्यं धर्मं देशयितुमिति ॥

अथ खलु मारः पापीयानिद वचनं श्रुत्वा एकान्ते प्रक्राम्य स्थितो ऽभूत् । दुःखी दुर्मना विप्रतिसारी अधोमुखः काष्ठेन महीं विलिखन्विषय मे ऽतिक्रान्त इति ॥

अथ खलु तास्तिस्रो मारदुहितरो रतिश्चारतिश्च तृष्णा च मार पापीयासं गाथयाध्यभाषन्त ।

दुर्मनासि कथं तात प्रोच्यता यद्यसौ नरः ।
रागपाशेन तं बध्वा कुञ्जर वा नयामहे ॥
आनयित्वा च तं शीघ्र करिष्याम वशे तव ।

मार आह ।

अरहन्सुगतो लोके न रागस्य वश व्रजेत् ।
विषयं मे ह्यतिक्रान्तस्तस्मा क्षोचाम्यहं भृशं ॥ ० ॥

ततस्ता स्त्रीचापल्यादविदितप्रभावा अपि बोधिसत्त्वभूतस्यैव तथागतस्य पितुर्वचनमश्रुत्वैव प्रभूतयौवनमध्ययौवनधारिण्यो भूत्वा विचक्षुःकर्मणे तथागतस्यान्तिकमुपसंक्रान्ता स्त्रीमाया अति तत्सर्वमकार्षुः । ताश्च तथागतो न मनसि करोति स्म । भूयश्च ता जराजर्जरा अध्यतिष्ठत् ॥ ततस्ताः पितुरन्तिके गत्वैवमाहुः ।

सत्यं वदसि नस्तात न रागेण स नीयते ।
विषयं मे ह्यतिक्रान्तस्तस्मा क्षोचाम्यहं भृशं ॥
वीक्षेत यद्यसौ रूपं यदस्माभिर्विनिर्मितं ।
गौतमस्य विनाशार्थं ततो ऽस्य हृदयं स्फुटेत् ॥

तत्साधु नस्तातेदं जराजर्जरशरीरमन्तर्धापय ॥

मार आह ।

नाहं पश्यामि तं लोके पुरुषं सचराचरे ।
बुद्धस्य यो ह्यधिष्ठानं शक्नुयात्कर्तुमन्यथा ॥
शीघ्रं गत्वा निवेद्य अत्ययं स्वकृतं मुनेः ।
सर्वं पौराणकं कायं करिष्यति यथामतं ॥

ततस्ता गत्वा तथागतं क्षमापयन्ति स्म । अत्ययं नो भगवान्प्रतिगृह्णातु । अत्ययं नो सुगतो प्रतिगृह्णातु यथा बालानां यथा मूढानां यथाव्यक्तानामकुशलानामक्षेत्रज्ञानां या वयं भगवन्तमासादयितव्यं मन्यामहे ॥ ततस्तास्तथागतो गाथयाध्यभाषत ।

गिरिं नखैर्विलिखेथ लोहं दन्तैर्विखादथ ।
शिरसा बिभित्सथ गिरिमगाधे गाधमेषत ॥

तस्माद्युष्माकं दारिका अत्ययं प्रतिगृह्णामि । तत्कस्मात् । वृद्धिरेषा ऽर्ये धर्मविनये यो ऽत्ययमत्ययतो दृष्ट्वा प्रतिदिशयत्यायत्यां च संवरमापद्यते ॥ ॥

पञ्चमे सप्ताहे भिक्षवस्तथागतो मुचिलिन्दनागराजभवने विहरति स्म । सप्ताहे महादुर्दिने ऽथ खलु मुचिलिन्दनागराजः स्वभवनान्निष्क्रम्य तथागतस्य काये सप्तकृद्भोगेन परिवेष्य फणैश्छादयति स्म । मा भगवतः कायं शीतवाताः प्राक्षुरिति । पूर्वस्या अपि दिशो ऽन्ये ऽपि संबहुला नागराजा आगत्य तथागतस्य कायं सप्तकृद्भोगैः परिवेष्य फणैश्छादयन्ति स्म । मा भगवतः कायं शीतवाताः प्राक्षुरिति । यथा पूर्वस्यां दिशि एवं दक्षिणपश्चिमोत्तराभ्यो दिग्भ्यो

नागराजा आगत्य तथागतस्य कायं सप्तकृत्वो भोगैः परिवेष्ट्य फणैश्छादयन्ति स्म । मा भगवतः कायं शीतवाताः प्राक्षुरिति ॥ स च नागराजभोगराशिर्मेरुपर्वतेन्द्रवदुच्चैस्त्वेन स्थितो ऽभूत् । न च तैर्नागराजैस्तादृशं कदाचित्सुखप्राप्तं पूर्वं यादृशं तेषां तानि सप्तरात्रिन्दिवसानि तथागतकायसंनिकर्षादासीत् ॥ ततः सप्ताहस्यात्ययेन ततस्ते नागराजा व्यपगतदुर्दिनं विदित्वा तथागतस्य कायाद्भोगानपनीय तथागतस्य पादौ शिरसाभिवन्द्य त्रिप्रदक्षिणीकृत्य स्वकस्वकानि भवनान्युपजग्मुः । मुचिलिन्दो ऽपि नागराजस्तथागतस्य पादौ शिरसाभिवन्द्य त्रिप्रदक्षिणीकृत्य स्वभवन प्राविक्षत् ॥ ॥

षष्ठे सप्ताहे तथागतो मुचिलिन्दभवनादजपालस्य न्यग्रोधमूलं गच्छति स्म ॥ अन्तरे च मुचिलिन्दभवनस्यान्तराच्चाजपालस्य नद्या नैरञ्जनायास्तीरे चरकपरिव्राजकवृद्धश्रावकगौतमनिर्ग्रन्थाजीविकादयस्तथागतं दृष्ट्वाभिभाषन्ते स्म । अपि भगवता गौतमेनेदं सप्ताहमकालदुर्दिनं सम्यक्सुखेन व्यतिनामितं ॥

अथ खलु भिक्षवस्तथागतस्तस्यां वेलायामिदमुदानमुदानयति स्म।

सुखो विवेकस्तुष्टस्य श्रुतधर्मस्य पश्यतः ।
अव्याबध्यं सुखं लोके प्राणिभूतेषु संयतः ॥
सुखा विरागता लोके पापानां समतिक्रमः ।
अस्मिन्मानुष्यविषये एतद्वै परमं सुखं ॥

पश्यति स्म भिक्षवस्तथागतो लोकमादीप्तं प्रदीप्तं जात्या जरया व्याधिभिर्मरणेन शोकपरिदेवदुःखदौर्मनस्योपायासैः । तत्र तथागत इदमिहोदानमुदानयति स्म ।

अयं लोकः संतापजातः शब्दस्पर्शरसरूपगन्धैः ।
भयभीतो भयं भूयो मार्गते भवतृष्णया ॥ ० ॥

सप्तमे सप्ताहे तथागतो तारायणमूले विहरति स्म ॥ तेन खलु पुनः समयेनोत्तरापथकौ द्वौ भ्रातरौ त्रपुषभल्लिकनामकौ वणिजौ पण्डितौ निपुणौ विविधपण्यं गृहीत्वा महालब्धलाभौ दक्षिणापथादुत्तरापथं गच्छेते स्म । महता सार्थेन पञ्चभिर्धुरशतैः सुपरिपूर्णैः ॥ तयोः सुजातः कीर्तिश्च नामाजानेयौ द्वौ बलीवर्धावास्तां । नास्ति तयोर्लग्नभयं । यत्रान्ये बलीवर्धा न वहन्ति स्म । तत्र तौ युज्येते स्म । यत्र चाग्रतो भयं भवति स्म । तत्र तौ कीलबद्धाविव तिष्ठेते स्म । न च तौ प्रतोदेन वाह्येते स्म । उत्पलहस्तकेन वा सुमनादामकेन वा तौ वाह्येते स्म ॥ तेषां तारायणसमीपे क्षीरिकावननिवासिनीदेवताधिष्ठानात्ते शकटाः सर्वे विष्ठिता नवहन्ति स्म । वरत्रादीनि च सर्वशकटाङ्गानि च छिद्यन्ते स्म । भिद्यन्ते च । शकटाचक्राणि च नाभीपर्यन्तं भूमौ निमग्नानि सर्वप्रयत्नैरपि ते शकटा न वहन्ति स्म ॥ ते विस्मिता भीताश्चाभूवन् । किं नु खल्वत्र कारणं को ऽयं विकारो यदिमे स्थले शकटा विष्ठिताः । तैस्तौ सुजातकीर्तिबलीवर्धौ योजितौ । तावपि न वहेते स्म । सोत्पलहस्तेन च सुमनादामकेन च वाह्यमानौ ॥ तेषामेतदभवत । असंशयं पुरतः किंचिद्भयं येनैतावपि न वहतः । तैरश्वदूताः पुरतः प्रेषिताः । अश्वदूताः प्रत्यागताः प्राहुर्नास्ति किंचिद्भयमिति ॥ तयापि देवतया स्वरूपं संदर्श्य आश्वासिता मा भेतव्य-

मिति । तावपि च बलीवर्दौ येन तथागतस्तेन शकटा प्रकर्षितौ ॥ यावत्ते पश्यन्ति स्म तथागतं वैश्वानरमिव प्रदीप्तं द्वात्रिंशन्महापुरुषलक्षणैः समलंकृतमचिरोदितमिव दिनकरं श्रिया देदीप्यमानं । दृष्ट्वा च ते विस्मिता बभूवुः । किं नु खल्वय ब्रह्मा इहानुप्राप्त उताहो शक्रो देवेन्द्र उताहो वैश्रवण उताहो सूर्यश्चन्द्रो वा उताहो किंचिद्गिरिदैवतं वा नदीदैवतं वा ॥ ततस्तथागतः काषायाणि वस्त्राणि प्रकटायति स्म ॥ ततस्ते आहुः । प्रव्रजितः खल्वयं काषायसंवृतो नास्माद्भयमस्तीति । ते प्रसाद प्रतिलब्धा अन्योन्यमेवमाहुः । प्रव्रजितः खल्वय कालभोजी भविष्यति । अस्ति किंचित् । आहुरस्ति मधुतर्पणं लिखितकाश्चेक्षवः ॥ ते मधुतर्पणमिक्षुलिखितकांश्चादाय येन तथागातस्तेनोपसंक्रामन्नुपसंक्रम्य तथागतस्य पादौ शिरसाभिवन्दित्वा त्रिप्रदक्षिणीकृत्यैकान्ते तस्थुः । एकान्ते स्थितास्ते तथागतमेवमाहुः । प्रतिगृह्णातु भगवन्निदं पिण्डपात्रमस्माकमनुकम्पामुपादाय ॥

अथ खलु भिक्षवस्तथागतस्यैतदभूत् । असाधु खल्विदं स्याद्यदहं हस्ताभ्यां प्रतिगृह्णीयां । कस्मिन्खलु पूर्वकैस्तथागतैः सम्यक्संबुद्धैः प्रतिगृहीतं । पात्रेणेत्यज्ञासीत् ॥

इति हि भिक्षवस्तथागतस्य भोजनकालसमय इति विदित्वा तत्क्षणमेव चतसृभ्यो दिग्भ्यश्चत्वारो महाराजा आगत्य चत्वारि सौवर्णानि पात्राण्यादाय तथागतस्योपनामयन्ति स्म । प्रतिगृह्णातु भगवन्निमानि सौवर्णानि (चत्वारि) पात्राण्यस्माकमनुकम्पामुपादाय ॥ तानि न श्रमणप्रतिरूपाणि इति कृत्वा तथागतो न प्रतिगृह्णीते

स्म । एवं चत्वारि रूप्यमयानि चत्वारि वैडूर्यमयानि स्फटिकमयानि मुसारगल्वमयानि अश्मगर्भमयानि ॥ ततश्चत्वारि सर्वरत्नमयानि पात्राणि गृहीत्वा तथागतस्योपनामयन्ति स्म । न श्रमणस्य सारूप्याणि इति कृत्वा तथागतो न प्रतिगृह्णीते स्म ॥

अथ खलु भिक्षवस्तथागतस्य पुनरेतदभूत् । एवं कतमद्विधैः पात्रैः पूर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैः प्रतिगृहीतं । शैलपात्रैरित्यज्ञासीत् । एवं च चित्तमुत्पन्नं तथागतस्य ॥

अथ खलु वैश्रवणो महाराजस्तदन्यांस्त्रीन्महाराजानामन्त्रयते स्म । इमानि खलु पुनर्मार्षाश्चत्वारि शैलपात्राणि नीलकायिकैर्देवपुत्रैरस्मभ्यं दत्तानि । तत्रास्माकमेतदभूत् । एषु वयं परिभोक्ष्याम इति ॥ ततो वैरोचनो नाम नीलकायिको देवपुत्रः सो ऽस्मानेवमाह ।

मा एषु भोक्ष्यथ भाजनेषु धारितिमे चेतिय संमतीति ।
भविता जिनः शाक्यमुनीति नाम्ना तस्येति पात्राण्युपनामयेथा ॥
अयं स कालः समयश्च मार्षा उपनामितुं शाक्यमुनेर्हि भाजना ।
संगीतितूर्यस्वरनादितेन दास्याम पात्राणि विधाय पूजां ॥
स भाजनं धर्ममयं ह्यभेद्यं इमे च शैलामयभेद्य भाजना ।
प्रतिग्रहीतु क्षमते न चान्यः प्रतिग्रहार्थाय व्रजाम हन्त ॥

अथ खलु चत्वारो महाराजाः स्वस्वजनपार्षद्याः पुष्पधूपगन्धमाल्यविलेपनतूर्यताडावचरसंगीतिसंप्रभानितेन स्वैः स्वैः पाणिभिस्तानि पात्राणि परिगृह्य येन तथागतस्तेनोपसंक्रामन्नुपसंक्रम्य तथागतस्य पूजां कृत्वा तानि पात्राणि दिव्यकुसुमप्रतिपूर्णानि तथागतायोपनामयन्ति स्म ॥

अथ खलु भिक्षवस्तथागतस्यैतदभवत् । अमी खलु पुनश्चत्वारो महाराजाः श्राद्धाः प्रसन्ना मम चत्वारि शैलपात्राण्युपनामयन्ति । न च मे चत्वारि शैलपात्राणि कल्पन्ते । अथैकस्य प्रतिगृहीष्यामि त्रयाणां वैमनस्यं स्यात् । यन्वहमिमानि चत्वारि पात्राणि प्रतिगृह्यैकं पात्रमधितिष्ठेयं ॥

अथ खलु भिक्षवस्तथागतो दक्षिणं पाणिं प्रसार्य वैश्रवणं महाराजं गाथयाध्यभाषत ।

उपनामयस्व सुगतस्य भाजनं त्वं भेष्यसे भाजनमग्रयाने ।
अस्मद्विधेभ्यो हि प्रदाय भाजन स्मृतिर्मतिश्चैव न जातु हीयते ॥

अथ खलु भिक्षवस्तथागतो वैश्रवणस्य महाराजस्यान्तिकात्तत्पात्रं प्रतिगृह्णीते स्म । अनुकम्पामुपादाय । प्रतिगृह्य च धृतराष्ट्रं महाराजं गाथयाध्यभाषत ।

यो भाजनं देति तथागतस्य न तस्य जातु स्मृति प्रज्ञ हीयते ।
अतिनाम्य कालं च सुखं सुखेन यावत्पद बुध्यति शीतिभावं ॥

अथ खलु भिक्षवस्तथागतो धृतराष्ट्रस्य महाराजस्यान्तिकात्तत्पात्रं प्रतिगृह्णीते स्म । अनुकम्पामुपादाय । प्रतिगृह्य च विरूढकं महाराजं गाथयाध्यभाषत ।

ददासि यस्त्वं परिशुद्धभाजनं विशुद्धचित्ताय तथागताय ।
भविष्यसि त्वं लघु शुद्धचित्तः प्रशंसितो देवमनुष्यलोके ॥

अथ खलु भिक्षवस्तथागतो विरूढकस्य महाराजस्यान्तिकात्तत्पात्रं प्रतिगृह्णीते स्म । अनुकम्पामुपादाय । प्रतिगृह्य च विरूपाक्षं महाराजं गाथयाध्यभाषत ।

अच्छिद्रशीलस्य तथागतस्य अच्छिद्रवृत्तस्य अच्छिद्रभाजनं ।
अच्छिद्रचित्तः प्रददासि श्रद्धया अच्छिद्र ते भेष्यति पुण्यदक्षिणा ॥

प्रतिगृह्णीते स्म भिक्षवस्तथागतो विरूपाक्षस्य महाराजस्यान्तिकात्तत्पात्रं अनुकम्पामुपादाय । प्रतिगृह्य चैकं पात्रमधितिष्ठति स्म । अधिमुक्तिबलेन ॥ तस्यां च वेलायामिदमुदानमुदानयति स्म ।

दत्तानि पात्राणि पुरे भवे मया फलपूरिता प्रेमणिया च कृत्वा ।
तेनेमि पात्राश्चतुरः सुसंस्थिता ददन्ति देवाश्चतुरो महर्द्धिकाः ॥

तत्रेदमुच्यते ।

स सप्तरात्रं वरबोधिवृक्षं संप्रेक्ष्य धीरः परमार्थदर्शी ।
षड्भिः प्रकारैः प्रविकम्प्य चोर्वी अभ्युत्थितः सिंहगतिर्नृसिंहः ॥
समन्त नागेन्द्र विलम्बगामी क्रमेण तारायणमूलमेत्य ।
उपाविशन्मेरुवदप्रकम्प्यो ध्यानं समाधिं च मुनि प्रदध्यौ ॥
तस्मिंश्च काले त्रपुषश्च भल्लिको भ्रातृद्वयं वणिजगणेन सार्धं ।
शकटानि ते पञ्च धनेन पूर्णा संपुष्पिते सालवने प्रविष्टाः ॥
महर्षितेजेन च अक्षमात्रं चक्राणि भूमौ विविशुः क्षणेन ।
तां तादृशीं प्रेक्ष्य च ते अवस्थां महद्भयं वणिजगणस्य जातं ॥
ते खड्गहस्ताः शरशक्तिपाणयो वने मृगं वा मृगयन्त एष ।
वीक्षन्त ते शारदचन्द्रवक्त्रं जिनं सहस्रांशुमिवाभ्रमुक्तं ॥
प्रहीनकोपा अपनीतदर्पाः प्रणम्य मूर्ध्ना विमृषुः क एष ।
नभस्तलाद्देवत वाच भाषते बुद्धो ह्ययं लोकहितार्थकारी ॥
रात्रिंदिवा सप्त न चान्नपानं अनेन भुक्तं करुणात्मकेन ।
यदिच्छथा आत्मन क्लेशशान्तिं भोजेथिमं भावितकार्यचित्तं ॥

शब्दं च ते तं मधुरं निशाम्य वन्दित्व कृत्वा च जिनं प्रदक्षिणं।
प्रीतास्ततस्ते सहितैः सहायैः जिनस्य पिण्डाय मतिं प्रचक्रुः॥०॥

तेन खलु भिक्षवः समयेन त्रपुषभल्लिकानां वणिजां प्रत्यन्तकर्वटे गोयूथं प्रतिवसति स्म ॥ अथ ता गावस्तस्मिन्काले तस्मिन्समये सर्पिमण्डं प्रदुग्धा अभूवन् ॥ अथ गोपालास्तत्सर्पिमण्डमादाय येन त्रपुषभल्लिकौ वणिजौ तेनोपसंक्रामन्नुपसंक्रम्येमां प्रकृतिमारोचयन्ति स्म । यत्खलु यूयं भद्रा जानीयात सर्वास्ता गावः सर्पिमण्डं प्रदुग्धाः। तत्किमेतत्प्रशस्तमाहोस्विन्नेति ॥

तत्र लोलुपजात्या ब्राह्मणा एवमाहुः। अमङ्गल्यमेतद्ब्राह्मणानां महायज्ञो यष्टव्य इति ॥

तेन खलु पुनर्भिक्षवः समयेन त्रपुषभल्लिकानां वणिजां शिखण्डी नाम ब्राह्मणः पूर्वजातिसालोहितो ब्रह्मलोके प्रत्याजातोऽभूत् । स ब्राह्मणरूपमभिनिर्माय तान्वणिजो गाथाभिरध्यभाषत ।

युष्माकं प्रणिधिः पूर्वे बोधिप्राप्तस्तथागतः।
अस्माकं भोजनं भुक्त्वा धर्मचक्रं प्रवर्तयेत् ॥
स चैष प्रणिधिः पूर्णो बोधिप्राप्तस्तथागतः।
आहारमुपनाम्येत भुक्त्वा चक्रं प्रवर्तयेत् ॥
सुमङ्गलं सुनक्षत्रं गवां वः सर्पिदोहनं।
पुण्यकर्मणस्तस्यैष अनुभावो महर्षिणः ॥
एवं संचोद्य वणिजः शिखण्डी भवनं गतः।
उदग्रमनसः सर्वे बभूवुस्त्रपुषाह्वयाः ॥ ० ॥

क्षीरं यदासीच्च हि गोसहस्रा अशेषतस्तं समुदानयित्वा ।

अग्रं च तस्मात्परिगृह्य ओजः साधिंसु ते भोजन गौरवेण ॥
शतं सहस्रैकपलस्य मूल्यं या रत्नपात्री अभु चन्द्रनामिका ।
चौक्षां सुधौतां विमलां च कृत्वा समतीर्थिकां पूरिषु भोजनेन ॥
मधुं गृहीत्वा तथ रत्नपात्रीं तारायणीमूलमुपेत्य शास्तुः ।
प्रतिगृह्ण भक्ति अनुगृह्ण चास्मान् इदं प्रणीतं परिभुङ्क्ष्व भोज्यं ॥
अनुकम्पनार्थाय उभौ च भ्रातृणां पूर्वाशयं ज्ञात्व च बोधिप्रस्थितौ ।
प्रतिगृहीत्वा परिभुञ्जि शास्ता भुक्त्वा क्षिपी पात्रि नभस्तलेस्मिं ॥
सुब्रह्मनामा च हि देवराजो जग्राह यस्तां वररत्नपात्रीं ।
अधुनाप्यसौ तां खलु ब्रह्मलोके संपूजयत्यन्यसुरैः सहायः ॥ ० ॥

अथ खलु तथागतस्तस्यां वेलायां तेषां त्रपुषभल्लिकानां वणिजानामिमां संहर्षणामकार्षीत् ।

दिशां स्वस्तिकरं दिव्यं मङ्गल्यं चार्थसाधकं ।
अर्था वः सासतां सर्वे भवन्त्वाशु प्रदक्षिणा ॥
श्रीर्वो ऽस्तु दक्षिणे हस्ते श्रीर्वो वामे प्रतिष्ठिता ।
श्रीर्वो ऽस्तु सर्वसाङ्गेषु मालेव शिरसि स्थिता ॥
धनैषिणां प्रयातानां वणिजां वै दिशो दश ।
उत्पद्यन्तां महालाभास्ते च सन्तु सुखोदयाः ॥
कार्येण केनचिद्येन गच्छथा पूर्विकां दिशं ।
नक्षत्राणि वः पालेन्तु ये तस्यां दिशि संस्थिता ॥
कृत्तिका रोहिणी चैव मृगशिरार्द्रा पुनर्वसुः ।
पुष्यश्चैव तथाश्लेषा इत्येषां पूर्विकादिशां ॥

इत्येते सप्त नक्षत्रा लोकपाला यशस्विनः ।
अधिष्ठिता पूर्वभागे देवा रक्षन्तु सर्वतः ॥
तेषां चाधिपती राजा धृतराष्ट्रेति विश्रुतः ।
स सर्वगन्धर्वपतिः सूर्येण सह रक्षतु ॥
पुत्रा पि तस्य बहव एकनामा विचक्षणाः ।
अशीतिर्दश चैकश्च इन्द्रनामा महाबलाः ॥
ते पि व अधिपालेन्तु आरोग्येन शिवेन च ।
पूर्वस्मिन्वै दिशो भागे अष्टौ देवकुमारिकाः ॥
जयन्ती विजयन्ती च सिद्धार्था अपराजिता ।
नन्दोत्तरा नन्दिसेना नन्दिनी नन्दवर्धनी ॥
ता पि व अधिपालेन्तु आरोग्येन शिवेन च ।
पूर्वस्मिन्वै दिशो भागे चापाल नाम चैतिय ॥
अवुस्तं जिनेभि ज्ञातमर्हन्तेभि च तायिभि. ।
ते पि व अधिपालेन्तु आरोग्येन शिवेन च ॥
क्षेमास्च वो दिशः सन्तु मा च व. पापमागमत् ।
लब्धार्थाश्च निवर्तध्वं सर्वदेवेभि रक्षिताः ॥
येन केनचित्कृत्येन गच्छेथा दक्षिणां दिशं ।
नक्षत्राणि वः पालेन्तु ये तां दिशमधिष्ठिता ॥
मघा च द्वौ च फाल्गुण्यौ हस्ता चित्रा च पञ्चमी ।
स्वातिश्चैव विशाखा च एतेषां दक्षिणा दिशाः ॥
इत्येते सप्त नक्षत्रा लोकपाला यशस्विनः ।
आदिष्टा दक्षिणे भागे ते वो रक्षन्तु सर्वतः ॥

तेषां चाधिपती राजा विरूढक इति स्मृतः ।
सर्वकुम्भाण्डाधिपतिर्यमेन सह रक्षतु ॥
पुत्रा पि तस्य बहव एकनामा विचक्षणाः ।
अशीतिर्दश चैकश्च इन्द्रनामा महाबलाः ॥
ते पि व अधिपालेन्तु आरोग्येन शिवेन च ।
दक्षिणस्मिन्दिशो भागे अष्टौ देवकुमारिकाः ॥
श्रियामती यशमती यशप्राप्ता यशोधरा ।
सुउत्थिता सुप्रथमा सुप्रबुद्धा सुखावहा ॥
ता पि व अधिपालेन्तु आरोग्येन शिवेन च ।
दक्षिणस्मिन्दिशो भागे पद्मनामेन चेतिकं ॥
नित्यं ज्वलिततेजेन दिव्यं सर्वप्रकाशितं ।
ते पि व अधिपालेन्तु आरोग्येन शिवेन च ॥
क्षेमाश्च वो दिशः सन्तु मा च वः पापमागमत् ।
लब्धार्थाश्च निवर्तध्वं सर्वदेवेभि रक्षिताः ॥
येन केनचित्कृत्येन गच्छेथा पश्चिमां दिशं ।
नक्षत्राणि वः पालेन्तु ये तां दिशमधिष्ठिता ॥
अनुराधा च ज्येष्ठा च मूला च दृढवीर्यता ।
द्वावाषाढे अभिजिच्च श्रवणो भवति सप्तमः ॥
इत्येते सप्त नक्षत्रा लोकपाला यशस्विनः ।
आदिष्टा पश्चिमे भागे ते वो रक्षन्तु सर्वदा ॥
तेषां चाधिपती राजा विरूपाक्षेति तं विदुः ।
स सर्वनागाधिपतिर्वरुणेन सह रक्षतु ॥

पुत्रा पि तस्य बहव एकनामा विचक्षणाः ।
अशीतिर्दश चैकश्च इन्द्रनामा महाबलाः ॥
ते पि व अधिपालेन्तु आरोग्येन शिवेन च ।
पश्चिमेस्मिन्दिशो भागे अष्टौ देवकुमारिकाः ॥
अलम्बुशा मिश्रकेशी पुण्डरीका तथारुणा ।
एकादशा नवमिका शीता कृष्णा च द्रौपदी ॥
ता पि व अधिपालेन्तु आरोग्येन शिवेन च ।
पश्चिमेस्मिन्दिशो भागे अष्टंगो नाम पर्वतः ॥
प्रतिष्ठा चन्द्रसूर्याणां अष्टमर्थं ददातु वः ।
सो ऽपि व अधिपालेतु आरोग्येन शिवेन च ॥
क्षेमाश्च वो दिशः सन्तु मा च वः पापमागमत् ।
लब्धार्थाश्च निवर्तध्वं सर्वदेवेभि रक्षिताः ॥
येन केनचित्कृत्येन गच्छेथा उत्तरां दिशं ।
नक्षत्राणि वः पालेन्तु ये तां दिशमधिष्ठिता ॥
धनिष्ठा शतभिषा चैव द्वे च पूर्वोत्तरापरे ।
रेवती अश्विनी चैव भरणी भवति सप्तमी ॥
इत्येते सप्त नक्षत्रा लोकपाला यशस्विनः ।
आदिष्टा उत्तरे भागे ते वो रक्षन्तु सर्वदा ॥
तेषां चाधिपती राजा कुबेरो नरवाहनः ।
सर्वयक्षाणामधिपतिर्माणिभद्रेण सह रक्षतु ॥
पुत्रा पि तस्य बहव एकनामा विचक्षणाः ।
अशीतिर्दश चैकश्च इन्द्रनामा महाबलाः ॥

ते पि व अधिपालेन्तु आरोग्येन शिवेन च ।
उत्तरस्मिन्दिशो भागे अष्टौ देवकुमारिकाः ॥
इलादेवी सुरादेवी पृथ्वी पद्मावती तथा ।
उपस्थिता महाराजा आशा श्रद्धा हिरी श्रिरी ॥
ता पि व अधिपालेन्तु आरोग्येन शिवेन च ।
उत्तरस्मिन्दिशो भागे पर्वतो गन्धमादनः ॥
आवासो यक्षभूतानां चित्रकूटः सुदर्शनः ।
ते पि व अधिपालेन्तु आरोग्येन शिवेन च ॥
क्षेमाश्च वो दिशः सन्तु मा च वः पापमागमत ।
लब्धार्थाश्च निवर्तध्वं सर्वदेवेभि रक्षिताः ॥
अष्टाविंशति नक्षत्रा सप्त सप्त चतुर्दिशं ।
द्वात्रिंशद्देवकन्याश्च अष्टावष्टौ चतुर्दिशं ॥
अष्टौ श्रमणा (चाष्टौ) ब्राह्मणा (अष्टौ) जनपदेषु नैगमाः ।
अष्टौ देवाः सइन्द्रकास्ते वो रक्षन्तु सर्वतः ॥ ॥

स्वस्ति वो गच्छतां भोतु स्वस्ति भोतु निवर्ततां ।
स्वस्ति पश्यत वै ज्ञातिं स्वस्ति पश्यन्तु ज्ञातयः ॥
सेन्द्रा यक्षा महाराजा अर्हन्तमनुकम्पिताः ।
सर्वत्र स्वस्ति गच्छध्वं प्राप्स्यध्वममृतं शिवं ॥ ० ॥

संरक्षिता ब्राह्मण वासवेन विमुक्तिचित्तैश्च अनाश्रवैश्च ।
नागैश्च यक्षैश्च सदानुकम्पिताः पालेथ आयुः शरदां शतं समं ॥

प्रदक्षिणां दक्षिणलोकनाथः तेषां दिशैष ऽप्रतिमो विनायकः ।
अनेन यूयं कुशलेन कर्मणा मधुसंभवा नाम जिना भविष्यथ ॥

प्रथमादिदं लोकविनायकस्य असङ्गतो व्याकरणं जिनस्य ।
पश्चादनन्ता बहुबोधिसत्त्वा ये व्याकृता बोधयि नो विवर्त्याः ॥
श्रुत्वा इमं व्याकरणं जिनस्य उदग्रचित्ता परमाय प्रीत्या ।
तौ भ्रातरौ सार्धं सहायकैस्तैः बुद्धं च धर्मं शरणं प्रसन्नाः ॥ इति ॥

॥ इति श्रीललितविस्तरे त्रपुषभल्लिकपरिवर्तो नाम चतुर्विंशतितमो ऽध्यायः ॥

इति हि भिक्षवस्तथागतस्य तारायणमूले विहरतः प्रथमाभिसंबुद्धस्यैकस्य रहोगतस्य प्रतिसंलीनस्य लोकानुवर्तिना प्रत्येतदभवत् । गम्भीरो बतायं मया धर्मो ऽधिगतो ऽभिसंबुद्धः । शान्तः प्रशान्त उपशान्तः प्रणीतो दुर्दृशो दुरनुबोधो ऽतर्को ऽवितर्कावचरः । अलमार्यः पण्डितविज्ञवेदनीयो यदुत सर्वोपधिनिःसर्गो ऽवेदितो ऽनिवेदितः सर्ववेदितनिरोधः परमार्थो ऽनालयः । शीतीभावो ऽनादानो ऽनुपादानो ऽविज्ञप्तो ऽविज्ञापनीयो ऽसंस्कृतः षड्विषयसमतिक्रान्तः । अकल्पो ऽविकल्पो ऽनभिलाप्यः । अरुतो ऽघोषो ऽनुदाहारः । अनिदर्शनो ऽप्रतिघः सर्वालम्बनसमतिक्रान्तः । समथधर्मोपच्छेदः । शून्यतानुपलम्भः । तृष्णाक्षयो विरागो निरोधो निर्वाणं । अहं चेदिमं परेभ्यो धर्मं देशयेयं । ते चेन्नाजानीयुः स मे स्यात्क्लमथो मिथ्याव्यायामो ऽक्षणधर्मदेशनता च । यन्वहमल्पोत्सुकस्तूष्णीभावेन विहरेयं ॥ तस्यां च वेलायामिमां गाथामभाषत ।

गम्भीर शान्तो विरजः प्रभास्वरः प्राप्तो मि धर्मो ह्यमृतो ऽसंस्कृतः ।
देशेय चाहं न परस्य जाने यन्नून तूष्णी पवने वसेयं ॥ ० ॥
अपगतगिरिवाकपथो ह्यलिप्तो यथ गगणं तथा स्वभावधर्मं ।
चित्तमन विचारविप्रमुक्तं परमसुआश्चरियं परो विजाने ॥
न च पुनरयु शक्य अक्षरेभिः प्रविशतु अनर्थयोगविप्रवेशः ।
पुरिमजिनकृताधिकारसत्त्वाः ते इमु श्रुणित्व हि धर्मु श्रद्दधन्ति ॥
न च पुनरिह कश्चिदस्तिधर्मः सो पि न विद्यति यस्य नास्तिभावाः ।
हेतुक्रियपरंपरा य जाने तस्य न भोतिह अस्तिनास्तिभावाः ॥
कल्पशतसहस्र अप्रमेया अहु चरितः पुरिमे जिनसकाशे ।
न च मय प्रतिलब्ध एष क्षान्ती यत्र न आत्म न सत्त्व नैव जीवः ॥
यद मय प्रतिलब्ध एष क्षान्ती म्रियति न चेह न कश्चि जायते वा ।
प्रकृति इमि निरात्म सर्वधर्माः तद मां व्याकरि बुद्ध दीपनामा ॥
करुण मम अनन्त सर्वलोके परतु न चार्थनतामहं प्रतीक्षे ।
यद पुन जनता प्रसन्न ब्रह्मे तेन अधीष्टु प्रवर्तयिष्य चक्रं ॥
एव च अयु धर्मग्राह्यु मे स्यात् स चि मम ब्रह्म क्रमे निपत्य याचेत् ।
प्रवदहि विरजा प्रणीतु धर्मं सन्ति विजानक सत्त्व स्वाकराश्च ॥ ० ॥

इति हि भिक्षवस्तथागतस्तस्मिन्समये ऊर्णाकोशात्प्रभामुत्सृजति स्म । यया प्रभया त्रिसाहस्रमहासाहस्रो लोकधातुर्महता सुवर्णवर्णावभासेन स्फुटो ऽभूत् ॥

अथ खलु दशत्रिसाहस्रमहासाहस्राधिपतिः शिखी महाब्रह्मा बुद्धानुभावेनैव तथागतस्य चेतसैव चेतःपरिवितर्कमाज्ञासीत् । अल्पो-

त्सुकतायै भगवतश्चित्तमभिनतं न धर्मदेशनायामिति ॥ तस्यैतदभवत् । यन्वहमुपसक्रम्य तथागतमध्येष्येयं धर्मचक्रप्रवर्तनतायै ॥

अथ खलु शिखी महाब्रह्मा तस्यां वेलायां तदन्यान्ब्रह्मकायिकान्देवपुत्रानामन्त्रयते स्म । नश्यति वताय मार्षा लोको विनश्यति । यत्र हि नाम तथागतोऽनुत्तरां सम्यक्सबोधिमभिसबुध्याल्पोत्सुकतायै चित्तमभिनामयति न धर्मदेशनाया । यन्नु वयमुपसंक्रम्य तथागतमर्हन्तं सम्यक्संबुद्धमध्येष्येमहि धर्मचक्रप्रवर्तनाय ॥

अथ खलु भिक्षवः शिखी महाब्रह्माष्टषष्ट्या ब्राह्मणशतसहस्रैः परिवृतः पुरस्कृतो येन तथागतस्तेनोपसक्रामदुपसक्रम्य तथागतस्य पादौ शिरसाभिवन्द्य प्राञ्जलिस्तथागतमेतदवोचत् । नश्यति वताय भगवन् लोकः प्रणश्यति वताय भगवन् लोकः । यत्र हि नाम तथागतोऽनुत्तरां सम्यक्सबोधिमभिसबुध्याल्पोत्सुकतायै चित्तमभिनामयति न धर्मदेशनायां । तत्साधु देशयतु भगवान्धर्मं देशयतु सुगतो धर्मं । सन्ति सत्त्वाः स्वाकाराः सुविज्ञापकाः शक्ता भव्याः प्रतिबला भगवतो भाषितस्यार्थमाज्ञातुं ॥ तस्यां च वेलायामिमां गाथामभाषत ।

समुदानिय ज्ञानमहाग्रमण्डल विसृज्य रश्मीन्दशदिशु चैव ।
तदङ्ग ज्ञानांशु नृपद्म बोधका उपेक्षकस्तिष्ठसि वादिभास्करः ॥
निमन्त्रयित्वा ऽर्यधनेन सत्त्वां आश्वासयित्वा बहुप्राणकोट्यः ।
न युक्तमेतत्तव लोकबन्धो यं तूष्णिभावेन उपेक्षसे जगत् ॥
पराहनस्वोत्तमधर्मदुन्दुभिं सद्धर्मशङ्खं च प्रपूरयाशु ।
उच्छ्रेपयस्व महधर्मयूपं प्रज्वालयस्व महधर्मदीपं ॥

प्रवर्ष वै धर्मजलं प्रधानं प्रतारयेमां भवसागरस्थां ।
प्रमोचयेमां महव्याधिक्लिष्टां क्लेशाग्नितप्ते प्रसमं कुरुष्व ॥
निदर्शय त्वं खलु शान्तिमार्गं क्षेमं शिवं निर्जरतामशोकं ।
निर्वाणमार्गागमनादनाथे विपथस्थिते नाथ कृपां कुरुष्व ॥
विमोक्षद्वाराणि अपावृणिष्व प्रचक्ष्व तं धर्मनयं ह्यकोप्यं ।
जात्यन्धभूतस्य जनस्य नाथ त्वमुत्तमं शोधय धर्मचक्षुः ॥
न ब्रह्मलोके न च देवलोके न यक्षगन्धर्वमनुष्यलोके ।
लोकस्य यो जातिजरापनेता नान्यो ऽस्ति त्वत्तो हि मनुष्यचन्द्रः ॥
अध्येषको ऽहं तव धर्मराज अध्याचराक्षत्वन सर्वदेवान् ।
अनेन पुण्येन अहं पि क्षिप्रं प्रवर्तयेयं वरधर्मचक्रं ॥ ० ॥

अधिवासयति स्म भिक्षवस्तथागतः शिखिनो ब्रह्मणस्तूष्णीभावेन सदेवमानुषासुरस्य लोकस्यानुग्रहार्थमनुकम्पामुपादाय ॥

अथ खलु शिखी महाब्रह्मा तथागतस्य तूष्णीभावेनाधिवासनां विदित्वा दिव्यैश्चन्दनचूर्णैरगुरुचूर्णैश्च तथागतमभ्यवकीर्य प्रीतिप्रामोद्यजातस्तत्रैवान्तरधात् ॥

अथ खलु भिक्षवस्तथागतस्य धर्मालोकस्यादरोत्पादनार्थं शिखिनश्च महाब्रह्मणः पुनः पुनस्तथागताध्येषणया कुशलमूलविवृद्ध्यर्थं धर्मस्य चातिगम्भीरोदारतामुपादाय पुनरप्येकस्य रहोगतस्य प्रतिसंलीनस्यायमेवंरूपं चेतोवितर्को ऽभूत् । गम्भीरः खल्वयं मया धर्मो ऽभिसंबुद्धः सूक्ष्मो निपुनो दुरनुबोधः अतर्को ऽतर्कावचरः पण्डितविज्ञवेदनीयः सर्वलोकविप्रत्यनीको दुर्दृशः सर्वोपधिनिःसर्गः सर्वसंस्कारोपशमः सर्वतमोपच्छेदः शून्यतानुपलम्भस्तृष्णाक्षयो विरागो

निरोधो निर्वाणं । अह चेदिद धर्मं देशयेयं परे च मे न विभावयेयुः । सा मे परमा विहेठा भवेत् । यन्वहमल्पोत्सुकविहारेणैव विहरेयं ॥

अथ खलु भिक्षवः शिखी महाब्रह्मा बुद्धानुभावेन पुनरपि तथागतस्येदमेवंरूपेण चेतःपरिवितर्कमाज्ञाय येन शक्रो देवानामिन्द्रस्तेनोपसंक्रामदुपसंक्रम्य शक्र देवानामिन्द्रमेतदवोचत् । यत्खलु कौशिक जानीयास्तथागतस्यार्हतः सम्यक्संबुद्धस्याल्पोत्सुकतायै चित्तं नतं न धर्मदेशनायां । नक्ष्यते बतायं कौशिक लोको विनक्ष्यते बतायं कौशिक लोको महाविद्यान्धकारप्रक्षिप्तो बतायं कौशिक लोको भविष्यति । यत्र हि नाम तथागतस्यार्हतः सम्यक्संबुद्धस्याल्पोत्सुकतायै चित्तं नतं न धर्मसंप्रकाशनायां । कस्माद्वयं न गच्छामस्तथागतमर्हन्तं सम्यक्संबुद्धं धर्मचक्रप्रवर्तनायाध्येषितुं । तत्कस्मात् । न ह्यनध्येषितास्तथागता धर्मचक्र प्रवर्तयन्ति ॥ साधु मार्षेति शक्रो ब्रह्मा भौमाश्च देवा अन्तरीक्षाश्चातुर्महाराजकायिकास्त्रायत्रिंशा यामास्तुषिता निर्माणरतयः परनिर्मितवशवर्तिनो ब्रह्मकायिका आभास्वरा बृहत्फलाः शुभकृत्स्नाः संबहुलानि च शुद्धावासकायिकदेवपुत्रशतसहस्राण्यतिक्रान्तवर्णा अतिक्रान्तायां रात्रौ केवलं तारायणमूलं दिव्येन वर्णेन दिव्येनावभासेनावभास्य येन तथागतस्तेनोपसंक्रामन्नुपसंक्रम्य तथागतस्य पादौ शिरसाभिवन्द्य प्रदक्षिणीकृत्य चैकान्ते तस्थुः ।

अथ खलु शक्रो देवानामिन्द्रो येन तथागतस्तेनाञ्जलिं प्रणम्य तथागतं गाथया ऽभितुष्टाव ।

उत्तिष्ठ विजितसंग्राम प्रज्ञाकारा तिमिस्रा विवर लोके ।
चित्तं हि ते विमुक्तं शशिरिव पूर्णो ग्रहविमुक्तः ॥

एवमुक्ते तथागतस्तूष्णीमेवास्थात् ॥

अथ खलु शिखी महाब्रह्मा शक्रं देवानामिन्द्रमेतदवोचत् । नैव कौशिक तथागता अर्हन्तः सम्यक्संबुद्धा अध्येष्यन्ते धर्मचक्रप्रवर्तनतायै यथा त्वमध्येषसे ॥

अथ खलु शिखी महाब्रह्मा एकांसमुत्तरासङ्गं कृत्वा दक्षिणजानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन तथागतस्तेनाञ्जलिं प्रणम्य तथागतं गाथयाध्यभाषत ।

उत्तिष्ठ विजितसंग्राम प्रज्ञाकारा तिमिस्रा विवर लोके ।
देशय त्वं मुने धर्मं आज्ञातारो भविष्यन्ति ॥

एवमुक्ते भिक्षवस्तथागतः शिखिनं महाब्रह्माणमेतदवोचत् । गम्भीरः खल्वयं महाब्रह्मन्मया धर्मो ऽभिसंबुद्धः सूक्ष्मो निपुनः पेयालं यावत्सा मे स्यात्परमा विहेठा ॥ अपि च मे ब्रह्मन्निमे गाथे ऽभीक्ष्णं प्रतिभासः ।

प्रतिस्रोतगामि मार्गो गम्भीरो दुर्दृशो मम ।
न तं द्रक्ष्यन्ति रागान्धा अलं तस्मात्प्रकासितुं ॥
अनुस्रोतं प्रवाह्यन्ते कामेषु पतिता प्रजाः ।
कृच्छ्रेण मे ऽयं संप्राप्तं अलं तस्मात्प्रकासितुं ॥

अथ खलु भिक्षवः शिखी महाब्रह्मा शक्रश्च देवानामिन्द्रस्तथागतं तूष्णीभूतं विदित्वा सार्धं तैर्देवपुत्रैर्दुःखिता दुर्मनास्तत्रैवान्तर्धायिषुः ॥

भिरपि च तथागतस्याल्पोत्सुकतायै चित्तं नमयति स्म ॥

तेन खलु पुनर्भिक्षवः समयेन मागधकानां मनुष्याणामिमान्येवंरूपाणि पापकानि अकुशलानि दृष्टिगतान्युत्पन्नान्यभूवन् । तद्यथा । केचिदेवमाहुः । वाता न वास्यन्ति ॥ केचिदेवमाहुः । अग्निर्न ज्वलिष्यति ॥ केचिदाहुः । देवो न वर्षिष्यति ॥ केचिदाहुः । नद्यो न वह्यन्ति ॥ केचिदाहुः । शस्यानि न प्रजास्यन्ति ॥ केचिदाहुः । पक्षिण आकाशे न क्रमिष्यन्ति ॥ केचिदाहुः । गुर्विण्यो नारोग्येण प्रसविष्यन्ति ॥ ॥

अथ खलु भिक्षवः शिखी महाब्रह्मा तथागतस्यैवमेवंरूपं चित्तवितर्कमाज्ञाय मागधकानां च मनुष्याणामिमानि दृष्टिगतानि विदित्वातिक्रान्तायां रात्रावभिसंक्रान्तेन वर्णेन सर्वावन्तं तारायणमूलं दिव्येनावभासेनावभास्य येन तथागतस्तेनोपसंक्रामदुपसंक्रम्य तथागतस्य पादौ शिरसाभिवन्द्यैकासमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन तथागतस्तेनाञ्जलिं प्रणम्य तथागतं गाथाभिरध्यभाषत ।

वादो बभूव समलैर्विचिन्तितो धर्मो ऽविशुद्धो मगधेषु पूर्वं ।
अमृतं मुने तद्विवृणीष्व द्वारं शृण्वन्ति धर्मं विमलेन बुद्धं ॥
कृतस्वकार्यो ऽसि भुजिष्यतां गतो दुःखाभिसंस्कारमलापकृष्टः ।
नहानि वृद्धी कुशलस्य ते ऽस्ति त्वमग्रधर्मेष्विह पारमिं गतः ॥
न ते मुने सदृश इहास्ति लोके कुतो ऽधिकः स्यादिह ते महर्षे ।
भवानिहाग्रस्त्रिभवे विरोचते गिरिर्यथा ऽसावसुरालयस्थः ॥

महाकृपां जानय दुःखिते जने न त्वादृशा जातु भवन्त्युपेक्षकाः ।
भवान्विशारद्यबलैः समन्वितः त्वमेव शक्तो जनतां प्रतारितुं ॥
इयं सुशल्या सुचिरातुरा प्रजा सदेवका सश्रमणा द्विजाखिला ।
आरोगिनी भोतु निरातुरज्वरा न चापरः शरणमिहास्य विद्यते ॥
चिरानुबद्धास्तव देवमानुषाः कल्याणचित्ता अमृतार्थिनश्च ।
धर्मं यमेवाधिगमिष्यते जिनो यथावदन्यूनमुदाहरिष्यति ॥
तस्माद्धिया चामिसु विक्रम त्वां विनयस्व सत्त्वां चिरनष्टमार्गां ।
अविश्रुतार्था शमनाय काङ्क्षिताः सुदुर्बला बृंहण काङ्क्षिणो वा ॥
इयं तृषार्त्ता जनता महामुने उदीक्षते धर्मजलं तवान्तिके ।
मेघो यथा संतृषितां वसुंधरां कुरु तर्पणां नायक धर्मवृष्ट्या ॥
चिरप्रणष्टा विचरन्ति मानवा भवे कुदृष्टीगहने सकण्टके ।
अकण्टकं मार्गमृजुं प्रचक्ष्व तं यं भावयित्वा ह्यमृतं लभेयं ॥
अन्धाप्रपाते पतिता ह्यनायका नोद्धर्तुमन्यैरिह शक्यमेते ।
महाप्रपाते पतितां समुद्धर छन्दं समुत्पाद्य वृषो ऽसि बुद्धिमान् ॥
न संगतिस्ते ऽस्ति सदा मुने चिरं कदाचिदौदुम्बरपुष्पसंनिभाः ।
जिनाः पृथिव्यां प्रभवन्ति नायकाः प्राप्तात्क्षणो मोचय नाथ सत्त्वां ॥
अभूच्च ते पूर्वभवेष्वियं मतिः तीर्णः स्वयं तारयिता भवेयं ।
अशंसयं पारगतो ऽसि सांप्रतं सत्यां प्रतिज्ञां कुरु सत्यविक्रमः ॥
धर्मोल्कया विधम मुने ऽन्धकारा उच्छ्रेपय त्वं हि तथागतध्वजं ।
अयं स कालः प्रतिलाभ्युदीरणे मृगाधिपो वा नद दुन्दुभिस्वरः ॥०॥

अथ खलु भिक्षवस्तथागतः सर्वावन्तं लोकं बुद्धचक्षुषाव्यवलोकयन्सत्त्वान्पश्यति स्म । हीनमध्यप्रणीतानुच्चनीचमध्यमान् स्वाकारान्

सुविशोधकान् दुराकारान् दुर्विशोधकानुद्घाटितज्ञान् विपञ्चितज्ञान् पदपरमांस्त्रीन्सत्त्वराशीनेकं मिथ्यात्वनियतमेकं सम्यक्त्वनियतमेकमनियतं । तद्यथापि नाम भिक्षवः पुरुषः पुष्करिण्यास्तीरे स्थितः पश्यति जलरुहाणि कानिचिदुदकान्तर्गतानि कानिचिदुदकसमानि कानिचिदुदकाभ्युद्गतानि । एवमेव भिक्षवस्तथागतः सर्वावन्तं लोकं बुद्धचक्षुषा व्यवलोकयन्पश्यति स्म । सत्त्वास्त्रिषु राशिषु व्यवस्थितान् ॥

अथ खलु भिक्षवस्तथागतस्यैतदभवत् । देशयेयं चाहं धर्मं न वा देशयेयं । स एष मिथ्यात्वनियतो राशिर्नैवाय धर्ममाजानीयात्। देशयेयं चाह वा धर्मं न वा देशयेयं यो ऽयं सम्यक्त्वनियतो राशिराज्ञास्यत्येवैष धर्मं । (यत्खलु पुनरयमनियतो राशिराज्ञास्यत्येवैष धर्मं) । यत्खलु पुनरयमनियतो राशिः । तस्मै स चेद्धर्मं देशयिष्याम्याज्ञास्यत्युत न देशयिष्यामि नाज्ञास्यति ॥

अथ खलु भिक्षवस्तथागतो ऽनियतराशिव्यवस्थितान्सत्त्वानारभ्य महाकरुणामवक्रामयति स्म ॥

अथ खलु तथागत आत्मनश्चेमं सम्यग्ज्ञानमधिकृत्य शिखिनश्च महाब्रह्मणो ऽध्येषणा विदित्वा शिखिनं महाब्रह्माणं गाथाभिरध्यभाषत ।

अपावृतास्तेषाममृतस्य द्वारा ब्रह्मन्ति सततं ये श्रोतवन्तः ।
प्रविशन्ति श्रद्धा नविहेटसंज्ञाः शृण्वन्ति धर्मं मगधेषु सत्त्वाः ॥

अथ खलु शिखी महाब्रह्मा तथागतस्याधिवासनां विदित्वा तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातस्तथागतस्य पादौ शिरसा वन्दित्वा तत्रैवान्तरधात् ॥ ॥

अथ खलु भिक्षवो भौमा देवास्तस्यां वेलायामन्तरीक्षेभ्यो देवेभ्यो घोषमुदीरयन्ति स्म । शब्दमनुश्रावयन्ति स्म । अद्य मार्षा तथागतेनार्हता सम्यक्संबुद्धेन धर्मचक्रप्रवर्तनार्थं प्रतिश्रुतं । तद्भविष्यति बहुजनहिताय बहुजनसुखाय लोकानुकम्पार्थं महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च । परिहास्यन्ते वत भो मार्षा असुराः कायाः । दिव्याः कायाः परिपूरिं गमिष्यन्ति । बहवश्च सत्त्वा लोके परिनिर्वास्यन्ति ॥ एवमेवान्तरीक्षा देवा भौमेभ्यो देवेभ्यः प्रतिश्रुत्य चातुर्महाराजिकानां देवानां घोषमुदीरयन्ति स्म । चातुर्महाराजिकास्त्रायस्त्रिंशानां त्रायस्त्रिंशा यामानां यामा तुषितनिर्माणरतीनां निर्माणरतयः परनिर्मितवशवर्तिनां ते ऽपि ब्रह्मकायिकानां देवानां घोषमुदीरयन्ति स्म । शब्दमनुश्रावयन्ति स्म । अद्य मार्षास्तथागतेनार्हता सम्यक्संबुद्धेन धर्मचक्रप्रवर्तनार्थं प्रतिश्रुतं । तद्भविष्यति बहुजनहिताय बहुजनसुखाय लोकानुकम्पार्थं महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च । परिहास्यन्ते वत भो मार्षा असुराः कायाः। दिव्याः काया विवर्धिष्यन्ते । बहवश्च सत्त्वा लोके परिनिर्वास्यन्तीति ॥

इति हि भिक्षवस्तत्क्षणं तन्मुहूर्तं तल्लवं यावद्ब्रह्मकायिका देवास्तस्माद्भौमादारभ्य एकवागेकनिर्नाद एकनिर्घोषो ऽभ्युद्गतो ऽभूत् । अद्य मार्षास्तथागतेनार्हता सम्यक्संबुद्धेन धर्मचक्रप्रवर्तनार्थं प्रतिश्रुतमिति ॥ ॥

अथ खलु भिक्षवो धर्मरुचिश्च नामा बोधिवृक्षदेवता धर्मकामश्च धर्ममतिश्च धर्मचारी च एते चत्वारो बोधिवृक्षदेवता-

स्तथागतस्य चरणयोर्निपत्यैवमाहुः । क्व भगवान्धर्मचक्रं प्रवर्तिष्यतीति ॥ एवमुक्ते भिक्षवस्तथागतस्तान्देवतानेतदवोचत् । वाराणस्यामृषिपतने मृगदावे ॥ ते आहुः । परीत्तजनकाया भगवन्वाराणसी महानगरी परीत्तद्रुमच्छायश्च मृगदावः । सन्त्यन्यानि भगवन्महानगराणि ऋद्धानि स्फीतानि क्षेमाणि सुभिक्षाणि रमणीयानि आकीर्णबहुजनमनुष्याणि उद्यानवनपर्वतप्रतिमण्डितानि । तेषां भगवानन्यतमे धर्मचक्रं प्रवर्तयतु ॥ तथागतो ऽवोचत् । मैव भद्रमुखाः । तत्कस्मात् ।

षष्टि यज्ञसहस्रकोटिनयुता ये तत्र यष्टा मया
षष्टि बुद्धसहस्रकोटिनयुता ये तत्र संपूजिता ।
पौराणामृषिणामिहालयु वरो वाराणसी नामवा
देवानागमभिष्टुतो महितलो धर्माभिनिम्नः सदा ॥

बुद्धाकोटिसहस्र नैकनवति पूर्वे स्मरामी अहं
ये तस्मिन्नृषिसाह्वये वनवरे वर्तीसु चक्रोत्तमं ।
सान्तं चाप्युपसान्तध्यानभिमुखं नित्यं मृगैः सेवितं
इत्यर्थे ऋषिसाह्वये वनवरे वर्तिष्यि चक्रोत्तमं ॥ इति ॥

इति श्रीललितविस्तरे ऽध्येषणापरिवर्तो नाम पञ्चविंशतितमो ऽध्यायः ॥

अथ खलु भिक्षवस्तथागतः कृतकृत्यः कृतकरणीयः सर्वबन्धनसमुच्छिन्नः सर्वक्लेशोद्धृतो निर्वान्तमलक्लेशो निहतमारप्रत्यर्थिकः सर्व-

बुद्धधर्मनयानुप्रविष्टः सर्वज्ञः सर्वदर्शी दशबलसमन्वागतश्चतुर्वैशारद्यप्राप्तो ऽष्टादशावेणिकबुद्धधर्मप्रतिपूर्णः पञ्चचक्षुःसमन्वागतो ऽनावरणेन बुद्धचक्षुषा सर्वावन्तं लोकमवलोक्यैवं चिन्तयति स्म । कस्मा अयमहं सर्वप्रथमं धर्मं देशयेयं । कतमः सत्त्वः शुद्धः स्वाकारः सुविनेयः सुविज्ञापकः सुविशोधको मन्दरागदोषमोहो ऽपरोक्षविज्ञानो यो ऽश्रुतवान्धर्मस्य परिहीयते । तस्मायहं सर्वप्रथमं धर्मं देशयेयं । यश्च मे धर्मं देशितमाजानीयान्न च मां स विहेठयेत् ॥

अथ खलु भिक्षवस्तथागतस्यैतदभूत् । रुद्रकः खलु रामपुत्रः शुद्धः स्वाकारः सुविज्ञापकः सुविशोधको मन्दरागमोहो ऽपरोक्षविज्ञानः सो ऽश्रवणाद्धर्मस्य परिहीयते । श्रावकेभ्यो नैवसंज्ञानासंज्ञायतनसहव्रतायै धर्मं देशयति । कुत्रासावेतर्हि प्रतिवसतीत्याज्ञासीदद्य सप्ताहकालगत इति ॥ देवता अपि तथागतस्य चरणयोर्निपत्यैवमाहुः । एवमेतद्भगवन्नेवमेतत्सुगत । अद्य सप्ताहकालगतो रुद्रको रामपुत्रः ॥ तस्य मे भिक्षव एतदभूत् । महाहानिर्वर्तते रुद्रकस्य रामपुत्रस्य य इममेवं सुप्रणीतं धर्ममश्रुत्वा कालगतः । स चेदसाविमं धर्ममश्रोष्यदाज्ञास्यत्तस्मै चाहं प्रथमं धर्मं देशयिष्यं न च मां स व्यहेठयिष्यत् ॥

पुनरपि भिक्षवस्तथागतस्यैतदभूत् । को ऽन्यः सत्त्वः शुद्धः सुविनेयः पूर्ववद्यावन्न च धर्मदेशनां विहेठयेदिति ॥ ततो भिक्षवस्तथागतस्यैतदभवत् । अयं खल्वप्याराडः कालापः शुद्धो यावन्न च मे धर्मदेशनां विहेठयेदिति ॥ समन्वाहरति स्म भिक्षवस्तथागतः कुत्रासावेतर्हीति । समन्वाहरंश्चाज्ञासीदद्य त्रीण्यहानि कालगतस्येति ॥

शुद्धावासकायिका अपि च देवता एनमर्थं तथागतस्यारोचयन्ति स्म । एवमेतद्भगवन्नेवमेतत्सुगत । अद्य त्र्यहं कालगतस्याराडस्य कालापस्य ॥ ततस्तथागतस्यैतदभवत् । महाहानिर्वर्तते ऽराडस्य कालापस्य । य इममेवं सुप्रणीतं धर्ममश्रुत्वा कालगत इति ॥

पुनरपि भिक्षवस्तथागतस्यैतदभूत् । कः खल्वन्यः सत्त्वः शुद्धः स्वाकारो यावन्न च मे धर्मदेशनां विहेठयेदिति ।

अथ खलु भिक्षवस्तथागतस्यैतदभवत् । ते खलु पञ्चका भद्रवर्गीयाः शुद्धाः स्वाकाराः सुविज्ञापकाः सुविशोधका मन्दरागदोषमोहा अपरोक्षविज्ञानास्ते ऽश्रवणाद्धर्मस्य परिहीयन्ते । तैश्चाहं दुष्करचर्यां चरन्नुपस्थितो ऽभूवं । ते मया धर्मदेशितमाज्ञास्यन्ति । न च मे ह विहेठयिष्यन्ति ॥

अथ खलु भिक्षवस्तथागतस्यैतदभवत् । यन्वहं पञ्चकेभ्यो भद्रवर्गीयेभ्यः प्रथमं धर्मं देशयेयं ॥

अथ खलु भिक्षवस्तथागतस्य पुनरेतदभवत् । कस्मिन्नेतर्हि पञ्चका भद्रवर्गीयाः प्रतिवसन्ति ॥ अथ तथागतः सर्वावन्तं लोकं बुद्धचक्षुषा व्यवलोकयन्पश्यति स्म । अद्राक्षीत्पञ्चकान्भद्रवर्गीयान्वाराणस्यां विहरत ऋषिपतने मृगदावे । दृष्ट्वा च तथागतस्यैतदभवत् । यन्वहं पञ्चकेभ्यो भद्रवर्गीयेभ्यः सर्वप्रथमं धर्मं देशयेयं तर्हि मम सर्वप्रथमं धर्मदेशितमाज्ञास्यन्ति । तत्कस्य हेतोः । चरिताविनो हि ते भिक्षवः सुपरिपण्डितशुक्लधर्माणो मोक्षमार्गाभिमुखा निबन्धापनीताः ॥

अथ खलु भिक्षवस्तथागत एवमनुविचिन्त्य बोधिमण्डादुत्थाय त्रिसाहस्रमहासाहस्रं लोकधातुं संप्रकम्प्यानुपूर्वेण मगधेषु चर्यां चरन्काशिषु जनपदेषु चारिकां प्रक्रामत् ॥ अथ गयायां बोधिमण्डस्य चान्तराद्न्यतम आजीवको ऽद्राक्षीत्तथागतं दूरत एवागच्छन्तं दृष्ट्वा च पुनर्येन तथागतस्तेनोपजगामोपेत्यैकान्ते ऽस्थात् । एकान्ते स्थितश्च भिक्षव आजीवकस्तथागतेन सार्धं विविधां संमोदनीं कथां कृत्वा एवमाह । विप्रसन्नानि ते आयुष्मन्गौतम इन्द्रियाणि परिशुद्धः पर्यवदातः पीतनिर्भासश्च ते छविवर्णः । तद्यथापि नाम शारदं कालं पाण्डुरवर्णं प्रभास्वरं पीतनिर्भासं भवत्येवमेव भवतो गौतमस्य परिशुद्धानीन्द्रियाणि परिशुद्धं मुखमण्डलं पर्यवदातं । तद्यथापि नाम तालफलस्य पक्वस्य समनन्तरवृन्तच्युतस्य बन्धनाश्रयः पीतनिर्भासो भवति परिशुद्धः पर्यवदात एवमेव भवतो गौतमस्य परिशुद्धानीन्द्रियाणि परिशुद्धं मुखमण्डलं पर्यवदातं । तद्यथापि नाम जाम्बूनदवर्णनिष्क उल्कामुखप्रकृष्टो दक्षिणकर्मारपुत्रेण सुपरिकर्मकृतः पाण्डुकम्बलोपनिक्षिप्तो वर्णवान्भवति परिशुद्धः पर्यवदातः पीतनिर्भासो ऽतीव प्रभास्वर एवमेव भवतो गौतमस्य विप्रसन्नानीन्द्रियाणि परिशुद्धस्त्वग्वर्णः पर्यवदातं मुखमण्डलं । कस्मिन्नायुष्मन्गौतम ब्रह्मचर्यमुच्यते ॥ एवमुक्ते भिक्षवस्तथागतस्तमाजीवकं गाथया प्रत्यभाषत ।

आचार्यो न हि मे कश्चित्सदृशो मे न विद्यते ।
एको ऽहमस्मि संबुद्धः शीतीभूतो निरास्रवः ॥

सो ऽवोचत् । अर्हं खलु गौतम मात्मानं प्रतिजानीषे ॥

तथागतो ऽवोचत् ।

अहमेवार्हं लोके शास्ता ह्यहमनुत्तरः ।
सदेवासुरगन्धर्वे नास्ति मे प्रतिपुद्गलः ॥

सो ऽवोचत् । जिनं खलु गौतम मात्मनं प्रतिजानीषे ॥

तथागतो ऽवोचत् ।

जिना हि मादृशा ज्ञेया ये प्राप्ता आश्रवक्षयं ।
जिता मे पापका धर्मास्तेनोपगजिनो ह्यहं ॥

सो ऽवोचत् । क्व तर्ह्यायुष्मन्गौतम गमिष्यसि ॥

तथागतो ऽवोचत् ।

वाराणसीं गमिष्यामि गत्वा वै काशिनां पुरीं ।
अन्धभूतस्य लोकस्य कर्तास्म्यसदृशां प्रभां ॥
वाराणसीं गमिष्यामि गत्वा वै काशिनां पुरीं ।
शब्दहीनस्य लोकस्य ताडयिष्ये ऽमृतदुन्दुभि ॥
वाराणसीं गमिष्यामि गत्वा वै काशिनां पुरीं ।
धर्मचक्रं प्रवर्तिष्ये लोकेष्वप्रतिवर्तितं ॥

तद्भविष्यसि गौतम इत्युक्त्वा स आजीवको दक्षिणामुखः प्रक्रामन्तथागतो ऽप्युत्तरामुखः प्राक्रामत् ॥ ॥

इति हि भिक्षवस्तथागतो गयायां सुदर्शनेन नागराजेन निमन्त्रितो ऽभूत् । वासेन भक्तेन च ॥ ततस्तथागतो रोहितवस्तुमगमत्तस्मादुरुविल्वाकल्पं तस्मादणालमगमत्ततः सारथिपुरं । एषु च सर्वेषु भिक्षवस्तथागतो गृहपतिभिर्भक्तेन वासेन चोपनिमन्त्र्यमाणो ऽनुपूर्वेण गङ्गाया नद्यास्तीरमुपागमत् ॥ ॥

तेन खलु पुनर्भिक्षवः समयेन गङ्गा महानदी सुपरिपूर्णा समतीर्थका वहति स्म ॥

अथ खलु भिक्षवस्तथागतो नाविकसमीपमुपागमत्पारसंतरणाय । स प्राह । प्रयच्छ गौतम तरपण्यं ॥ न मे ऽस्ति मार्ष तरपण्यमित्युक्त्वा तथागतो विहायसा पथा तीरात्परं तीरमगमत् ॥ ततः स नाविकस्तं दृष्ट्वातीव विप्रतिसार्यभूदेवंविधो दक्षिणीयो मया न तारित इति । हा कष्टमिति कृत्वा मूर्छितः पृथिव्यां पतितः ॥ तत एनां प्रकृतिं नाविको राज्ञे बिम्बिसारायारोचयामास । श्रमणः स्वामि गौतमस्तरपण्यं याच्यमानो नास्ति तरपण्यमित्युक्त्वा विहायसा अतस्तीरात्परं तीरं गत इति ॥ तच्छ्रुत्वा तदग्रेण राज्ञा बिम्बिसारेण सर्वप्रव्रजितानां तरपण्यमुत्सृष्टमभवत् ॥

इति हि भिक्षवस्तथागतो ऽनुपूर्वेण जनपदचर्या चरन्येन वाराणसी महानगरी तेनोपसंक्रामदुपसंक्रम्य काल्यमेव निवास्य पात्रचीवरमादाय वाराणसीं महानगरीं पिण्डाय प्राविक्षत् । तस्यां पिण्डाय चरित्वा कृतभक्तकृत्यः पश्चाद्भक्तपिण्डपातप्रतिक्रान्तः । येन ऋषिपतनो मृगदावो येन च पञ्चका भद्रवर्गीयास्तेनोपसंक्रामति स्म ॥ अद्राक्षुः खलु पुनः पञ्चका भद्रवर्गीयास्तथागतं दूरत एवागच्छन्तं दृष्ट्वा च क्रियाबन्धमकार्षुः । एष स आयुष्मन्त श्रमणो गौतम आगच्छति स्म । शैथिलिको बाहुलिकः प्रहाणविभ्रष्टः । अनेन खल्वपि तयापि तावत्पूर्विकया दुष्करचर्यया न शकितं किंचिदुत्तरिमनुष्यधर्मादलमार्यज्ञानदर्शनविशेषं साक्षात्कर्तुं । किं पुनरेतर्ह्यौदारिकमाहारमाहरन्सुखल्लिकायोगमनुयुक्तो विहरन्नभव्यः ।

खल्वेष शैथिलिको वाहुलिको नास्य केनचित्प्रत्युद्गन्तव्यं न प्रत्युत्थातव्य । न पात्रचीवर प्रतिग्रहीतव्य नाशनं दातव्य न पानीयं परिभोग्यं न पादप्रतिष्ठानं स्थापयित्वातिरिक्तान्यासनानि वक्तव्यं च सविद्यन्तः । इमान्यायुष्मन्गौतमानिरिक्तान्यासनानि स चेदाकाङ्क्षसि निषीदेति ॥ आयुष्मांस्त्वाज्ञानकौण्डिन्यश्चित्ते नाधिवासयति स्म । वाचा च न प्रतिक्षिपति स्म ॥ यथा यथा च भिक्षवस्तथागतो येन पञ्चका भद्रवर्गीयास्तेनोपसंक्रामति स्म । तथा तथा ते स्वकस्वकेष्वासनेषु न रमन्ते स्म । उत्थातुकामा अभूवन् । तद्यथापि नाम पक्षी शकुनिः पञ्जरगतः स्यात्तस्य च पञ्जरगतस्याधो ऽग्निर्दग्धो भवेत् । सो ऽग्निसंतप्तस्त्वरितमूर्धमुत्पतितुकामो भवेत्प्रत्नेतुकामश्चैवमेव यथा यथा तथागतः पञ्चकानां भद्रवर्गीयाणां सकाशमुपसंक्रामति स्म । तथा तथा पञ्चका भद्रवर्गीया स्वकस्वकेष्वासनेषु न रमन्ते स्म । उत्थातुकामा अभूवन् ॥ तत्कस्मात् । न स कश्चित्सत्त्वः सत्त्वनिकाये संविद्यते यस्तथागतं दृष्ट्वा आसनान्न प्रत्युत्तिष्ठेत् । यथा यथा च तथागतः पञ्चकान्भद्रवर्गीयानुपसंक्रामति स्म । तथा तथा पञ्चका भद्रवर्गीयास्तथागतस्य श्रियं तेजश्चासहमाना आसनेभ्यः प्रकम्प्यमानाः सर्वे क्रियाकारं भित्त्वा चोत्थायासनेभ्यः कश्चित्प्रत्युद्गच्छति स्म । कश्चित्प्रत्युद्गम्य पात्रचीवरं प्रतिगृह्णाति स्म । कश्चिदासनमुपनामयति स्म । कश्चित्पादप्रतिष्ठापनं कश्चित्पादप्रक्षालनोदकमुपस्थापयति स्म । एवं चावोचत् । स्वागतं ते आयुष्मन्गौतम स्वागतं ते आयुष्मन्गौतम निषीदेदमासनं प्रज्ञप्तं ॥ न्यषीदत्खल्वपि भिक्षवस्तथागतः प्रज्ञप्त एवासने पञ्चकापि भद्रवर्गीयास्ते तथागतेन सार्धं

विविधां संमोदनीं संरञ्जनीं कथां कृत्वैकान्ते निषेदुः । एकान्ते निषण्णाश्च ते पञ्चका भद्रवर्गीयास्तथागतमेतदवोचन् । विप्रसन्नानि ते आयुष्मन्गौतमेन्द्रियाणि परिशुद्धश्छविवर्ण इति हि सर्वं पूर्ववत् । तदस्ति ते आयुष्मन्गौतम कश्चिदुत्तरिमनुष्यधर्मादलमार्यज्ञानदर्शनविशेषः साक्षात्कृतः ॥ एवमुक्ते भिक्षवस्तथागतः पञ्चकान्भद्रवर्गीयानेवमाह । मा यूयं भिक्षवस्तथागतमायुष्मद्वादेन समुदाचरिष्ट । मा वो ऽभूद्दीर्घरात्रमर्थाय हिताय सुखाय । अमृतं मया भिक्षवः साक्षात्कृतो ऽमृतगामी च मार्गः । बुद्धो ऽहमस्मि भिक्षवः सर्वज्ञः सर्वदर्शी शीतीभूतो ऽनास्रवः । वशी सर्वधर्मेषु धर्ममहं भिक्षवो देशयिष्याम्याशु गच्छत शृणुत प्रतिपद्यध्वं श्रोतमवदधताहमववदाम्यनुशास्मि यथा मया सम्यगववदिताः सम्यगनुशिष्टा यूयमप्यास्रवाणां चेतोविमुक्तिं प्रज्ञाविमुक्तिं च दृष्टा एव धर्मसाक्षात्कृत्वोपसंपद्य प्रवेदयिष्यथ क्षीणा नो जातिरुषितं च ब्रह्मचर्यं कृतं करणीयं नापरमित्यतो ऽन्यद्भवं प्रजानाम इति । ननु च युष्माकं भिक्षव एतदभूत् । अयं खल्वायुष्मन्त आगच्छति श्रमणो गौतमः शैथिलिको बाहुलिकः प्रहाणविभ्रष्ट इति पूर्ववत् । स चेदाकाङ्क्षसि निषीदेति ॥ तेषां च एहि भिक्षव इत्युक्ते यत्किंचित्तीर्थिकलिङ्गं तीर्थिकध्वजः सर्वो ऽसौ तत्क्षणमेवान्तरधात् । त्रिचीवरं पात्रं च प्रादुरभूत्तदनु छिन्नाश्च केशाः । तद्यथापि नाम वर्षशतोपसंपन्नस्य भिक्षोरीर्यापथः संवृत्तो ऽभूत्सैव च तेषां प्रव्रज्याभूत्सैवोपसंपद्भिक्षुभावः ॥

अथ खलु भिक्षवस्तस्यां वेलायां पञ्चका भद्रवर्गीया भिक्षवस्तथागतस्य चरणयोर्निपत्यात्ययं देशयन्ति स्म । तथागतस्यान्तिके

शास्तृसंज्ञां प्रेम च प्रसादं च गौरवं चोत्पादयन्ति स्म । गौरवजाताश्च बहुविचित्रपुष्करिण्या तथागतस्य स्नानपरिकर्म कुर्वन्ति स्म । स्नानप्रत्युत्तीर्णस्य च भिक्षवस्तथागतस्यैतदभवत् । कस्मिन्खलु पूर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैर्निषद्य धर्मचक्रं प्रवर्तितं । यस्मिंश्च भिक्षवः पृथिवीप्रदेशे पूर्वकैस्तथागतैरर्हद्भिर्धर्मचक्रं प्रवर्तितमभूत् । अथ तस्मिन्पृथिवीप्रदेशे सप्तरत्नमयमासनसहस्रं प्रादुरभूत् ॥

अथ तथागतः पूर्वकाणां तथागतानां गौरवेण त्रीण्यासनानि प्रदक्षिणीकृत्य सिंह इव निर्भीश्चतुर्थ आसने पर्यङ्कमाभुज्य निषीदति स्म । पञ्चका अपि भिक्षवस्तथागतस्य पादौ शिरोभिरभिवन्द्य तथागतस्य पुरतो निषेदुः ॥ ॥

अथ खलु भिक्षवस्तस्यां वेलायां तथारूपां कायात्प्रभां तथागतः प्रामुञ्चत्यया प्रभयायं त्रिसाहस्रमहासाहस्रो लोकधातुर्महतावभासेन स्फुटो ऽभूत् ॥ तेन चावभासेन या अपि लोकान्तरिका अघा अघस्फुटा अन्धकारतमिस्रा यत्रेमौ चन्द्रसूर्यौ एवमहर्द्धिकावेवं महानुभावावेवं महेशाख्यौ आभया आभां वर्णेन वर्णं तेजसा तेजो नाभितपतो नाभिविरोचतः । तत्र ये सत्त्वा उपपन्नास्ते स्वकस्वकमपि बाहुं प्रसारितं न पश्यन्ति स्म । तत्रापि तस्मिन्समये महत उदारस्यावभासस्य लोके प्रादुर्भावो ऽभूत् । ये च तत्र सत्त्वा उपपन्नास्ते तेनावभासेन परिस्फुटाः समाना अन्योऽन्यं पश्यन्ति स्म । अन्योऽन्यं संजानन्ते स्म । एवं चाहुः । अन्ये ऽपि किल भोः सत्त्वा इहोपपन्ना अन्ये ऽपि किल भोः सत्त्वा इहोपपन्ना इति ॥ ॥ अयं च त्रिसाहस्रमहासाहस्रो लोकधातुः षड्विकारमष्टादशमहानिमित्तमभूत् ।

अकम्पत् प्राकम्पत् संप्राकम्पत् । अवेधत् प्रावेधत् संप्रावेधत् । अचलत् प्राचलत् संप्राचलत् । अक्षुभ्यत् प्राक्षुभ्यत् संप्राक्षुभ्यत् । अरणत् प्रारणत् सप्रारणत् । अगर्जत् प्रागर्जत् संप्रागर्जत् ॥ अन्ते ऽवनमति स्म । मध्ये उन्नमति स्म । मध्ये ऽवनमति स्म । अन्ते उन्नमति स्म ॥ पूर्वस्यां दिश्यवनमति स्म । पश्चिमायां दिश्युन्नमति स्म । पश्चिमायां दिश्यवनमति स्म । पूर्वस्यां दिश्युन्नमति स्म ॥ दक्षिणस्यां दिश्यवनमति स्म । उत्तरस्यां दिश्युन्नमति स्म । उत्तरस्यां दिश्यवनमति स्म । दक्षिणस्यां दिश्युन्नमति स्म ॥ तस्मिंश्च समये हर्षणीयास्तोषणीयाः प्रेमणीयाः प्रसादनीया अवलोकनीयाः प्रह्लादनीया निर्वर्णनीया अप्रतिवर्णनीया असेचनीया अप्रतिकूला अनुत्त्रासकराः शब्दाः श्रूयन्ते स्म । न च कस्यचित्सत्त्वस्य तस्मिन्क्षणे विहेठा वा त्रासो वा भयं वा स्तम्भितत्वं वाभूत् । न च भूयः सूर्यचन्द्रमसोर्न शक्रब्रह्मलोकपालानां तस्मिन्क्षणे प्रभाः प्रज्ञायन्ते स्म ॥ सर्वनरकतिर्यग्योनियमलोकोपपन्नाश्च सत्त्वास्तस्मिन्क्षणे विगतदुःखा अभूवन् । सर्वसुखसमर्पिताः । न च कस्यचित्सत्त्वस्य रागो बाधते स्म । द्वेषो वा मोहो वा ईर्ष्या वा मात्सर्यं वा मानो वा म्रक्षो वा मदो वा क्रोधो वा व्यापादो वा परिदाहो वा । सर्वसत्त्वास्तस्मिन्क्षणे मैत्रचित्ता हितचित्ताः परस्परं मातापितृसंज्ञिनो ऽभूवन् ॥ ततश्च प्रभाव्यूहादिमा गाथा निश्चरन्ति स्म ।

यो ऽसौ तुषितालया च्युत्वा ओक्रान्तु मातुकुक्षौ हि ।
जातश्च लुम्बिनिवने प्रतिगृहीतः शचीपतिना ॥

यः सिंहविक्रमगतिः सप्तपदा विक्रमी असंमूढः ।
ब्रह्मस्वरामथ गिर प्रमुमोच जगत्यहं श्रेष्ठः ॥
चतुरो द्वीपांस्त्यक्त्वा प्रव्रजितः सर्वसत्त्वहितहेतोः ।
दुष्करतपश्चरित्वा उपागमद्येन महिमण्डः ॥
सबलं निहत्य मारं बोधिप्राप्तो हिताय लोकस्य ।
वाराणसीमुपगतो धर्मचक्रं प्रवर्तयिता ॥
सब्रह्मणा सह सुरैरध्येष्टो वर्तयस्व समचक्रं ।
अधिवासित च मुनिना लोके कारुण्यमुत्पाद्य ॥
सो ऽयं दृढप्रतिज्ञो वाराणसिमुपगतो मृगदावं ।
चक्रं ह्यनुत्तरमसौ प्रवर्तयितात्यद्भुतं श्रीमान् ॥
यः श्रोतुकामु धर्मं यः कल्पनयुतः समार्जितु जिनेन ।
शीघ्रमसौ त्वरमाणो आगच्छतु धर्मश्रवणाय ॥
दुरवाप्यं मानुष्यं बुद्धोत्पादः सुदुर्लभा श्रद्धा ।
श्रेष्ठं च धर्मश्रवणं अष्टाक्षणविवर्जन दुरापाः ॥
प्राप्तश्च ते ऽद्य सर्वे बुद्धोत्पादः क्षणस्तथा श्रद्धा ।
धर्मश्रवणस्य वरः प्रमादमखिलं विवर्जयतः ॥
भवति कदाचिदवस्था यः कल्पनयुतैर्न श्रूयते धर्मः ।
संप्राप्तः स च वाद्य प्रमादमखिलं विवर्जयतः ॥
भौमादीन्देवगणान्संचोदयती च ब्रह्मपर्यन्तां ।
आयात लघुं सर्वे वर्तयिता नायको ह्यमृतचक्रं ॥
संचोदितास्च महता देवघोषेण तत्क्षणं सर्वे ।
त्यक्त्वा देवसमृद्धिं प्राप्ता बुद्धस्य ते पार्श्वे ॥ ० ॥

इति हि भिक्षवो भौमैर्देवैर्वाराणस्यां ऋषिपतने मृगदावे धर्मचक्रप्रवर्तनार्थं तथागतस्य महामण्डलमात्रो ऽधिष्ठितो ऽभूत् । चित्रो दर्शनीयो विपुलो विस्तीर्णः सप्तयोजनशतान्यायामो विस्तारेण । उपरिष्टाच्च देवैश्छत्रध्वजपटाकावितानसमलंकृतं गगणतलसमलंकृतमभूत् । कामावचरै रूपावचरैश्च देवपुत्रैश्चतुरशीतिसिंहासनशतसहस्राणि तथागतायोपनामितान्यभूवन् । इह निषद्य भगवान्धर्मचक्रप्रवर्तयत्वस्माकमनुकम्पामुपादायेति ॥

अथ खलु भिक्षवस्तस्मिन्समये पूर्वदक्षिणपश्चिमोत्तराभ्यो दिग्भ्य ऊर्धमधः समन्ताद्दशभ्यो दिग्भ्यो बहवो बोधिसत्त्वकोट्यः पूर्वप्रणिधानसमन्वागता आगत्य तथागतस्य चरणयोर्निपत्य धर्मचक्रप्रवर्तनायाध्येषन्ते स्म । ये चेह त्रिसाहस्रमहासाहस्रे लोकधातौ शक्रो वा ब्रह्मा वा लोकपाला वा तदन्ये वा महेशाख्यमहेशाख्या देवपुत्रास्ते ऽपि सर्वे तथागतस्य चरणयोः शिरोभिः प्रणिपत्य तथागतमध्येषन्ते स्म । धर्मचक्रप्रवर्तनाय । प्रवर्तयतु भगवान्धर्मचक्रं प्रवर्तयतु सुगतो धर्मचक्रं बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च । यजस्व भगवन्धर्मयज्ञं प्रवर्ष महाधर्मवर्षं उच्छ्रेपय महाधर्मध्वजं प्रपूरय महाधर्मशङ्खं प्रताडय महाधर्मदुन्दुभिं ॥

तत्रेदमुच्यते ।

त्रिसहस्र इतो बहुब्रह्मसुरेश्वर पाल तथा
उपगम्य जिनस्य क्रमेभि निपत्य उदाहरिषु ।

स्मर पूर्वप्रतिज्ञां महामुनि या त्वय वाच कृता
अङ्ग ज्येष्ठु विशिष्टु प्रजाय करिष्ये दुःखस्य क्षय ॥
त्वय धर्षितु मारु ससैन्यु द्रुमेन्द्रि स्थिहित्व मुने
वरबोधि विबुद्ध सुशान्ति निपातित क्लेशद्रुमाः ।
अभिप्रायु प्रपूर्ण अशेष य चिन्तित कल्पशता
जनतां प्रसमीक्ष्य अनायिक वर्तय चक्रवरं ॥
सुगतस्य प्रभाय प्रभासित क्षेत्रसहस्रशता
बहवः शत बुद्धसुतास्य उपागत ऋद्धिबलैः ।
विविधां सुगतस्य करित्वन पूज महानिचयां
स्तवयिसु तथागतु भूतगुणेभि अध्येषितु कारुणिकं ॥
करुणाघन विद्युतप्रज्ञ विपश्यन वायुसमा
अभिगर्जितु कल्पसहस्र निमन्त्रितु सर्वजगत् ।
अष्टाङ्गिकमार्गजलोधर वर्ष समेहि जगस्य तृषां
बलइन्द्रियध्यानविमोक्ष विवर्धय सस्यधनं ॥
बहुकल्पसहस्र सुशिक्षितु शून्यतत्वस्थिता
समुदानितु धर्मजु भैषजु जानितु सत्त्वचरी ।
जनता इय व्याधिशतेभि उपद्रुत क्लेशगणैः
जिनवैद्य प्रमोचय वर्तय धर्मचक्रवरं ॥
षडि पारमिते चिररात्रु विवर्धितु कोशु त्वया
असमं तु अचाल्य प्रणीतु सुसंचितु धर्मधनं ।
प्रज सर्व अनाथ दरिद्र अनायिक दृष्ट इमां
विचरं धन सप्त विनायक चक्र प्रवर्तयही ॥

